# प्रबन्धचिन्तामणिः

## मेरुतुङ्गाचार्यकृतः

श्रीमत्स्वामिनारायणीयदीनानाथशास्त्रिसुतेन रामचन्द्रशास्त्रिणा समुत्तेजिते प्रबन्धचिन्तामणौ प्रतिबिम्बितं स्वात्मानमनिर्वाच्यं विलोकयन्तु विद्वांसः

बुद्धिसागरशिष्येण शान्तिसागरसूरिणा ।
मुद्रितोऽध्यापकायायं रामचन्द्रविदेऽर्पितः ॥१॥
तेनापि पीपीटर्सन्श्रीसाहिबाख्ये नियोजितः ।
दृश्यमाद्यन्तयोः किंचिद्विधाय विदुषां दृशाम् ॥२॥


मुम्बापुर्याम्

कालिदाससकलचन्द्रेण
'राज्यभक्त' प्रिन्टींगप्रेसे मुद्रितः

संवत् १९४४ विजयादशम्याम्.
सन्ने १८८८ अकटोम्बर ता० १४


॥ मूल्यम् ॥

| | | | | |
|---|---|---|---|---|
| केवलसंस्कृतस्य | .... | .... | .... | रु. २ |
| केवलभाषान्तरस्य | .... | .... | .... | रु. २ |
| उभयोः सह | .... | .... | .... | रु. ३ |

# ॥ प्रस्तावना. ॥

एषोऽञ्जलिः सममसज्जनसज्जनौ तौ
वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।
एकं भिया निरभिसंधितवैरिभूतं
प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ १ ॥

भक्त्याख्यदशमेनाढ्या रसा नव निरूपिताः ।
अद्भुतोऽङ्गी तदङ्गानि यथास्थानं विभाव्यताम् ॥ २ ॥

ग्रन्थादौ प्रेक्षावतां प्रवृत्त्यर्थं मङ्गलविषयप्रयोजनसंबन्धाधिकारिणस्तथोपोद्घातप्रसङ्गावसराभिधानास्तिस्रः संगतीरपि सप्तभिः पद्यैः प्रबन्धकाराः प्रकटयामासुः । यथा ।

आदितीर्थकर्तुर्[1] भगवतश्चतुस्त्रिंशदतिशयान्[2]अपि चतुर्भिर्मूलातिशयैर्ज्ञापयन्तस्तेन वक्ष्यमाणाः प्रततप्रबन्धा अपि संक्षिप्य वक्ष्याम इति ध्वनयन्तः स्वस्य च तपोगच्छेतरत्वद्योतकं स्वेष्टदेवगुरुनमस्कारात्मकं मङ्गलमादिमध्यावसानेष्वत्र सूत्रितमिति सूचयन्त आद्यपद्यमाहुः । तत्र तु पञ्चसु ज्ञानेषु केवलज्ञानस्यैव[3] प्रकृष्टतमत्वेन, केवलज्ञानं विना मोक्षपदप्राप्त्यसंभवात्परमेष्ठिविशेषणेन ज्ञानातिशयो ज्ञापितः । अयोगिगुणस्थान[4]स्थितस्य योगिनः संसारनिःसरणं भवतीति भवान्तकृद्विशेषणेनापायापगमातिशयः प्रकाशितः । श्रीभारत्योश्चतुर्द्वारमित्युत्तरार्द्धेनातिशयद्वयं यथा । सर्वेषां पूज्या देवा देवानामपि पूजनीया लक्ष्मीः सापि तीर्थकरनामगोत्रोत्पन्नदेवकृतसमवसरण[5]समृद्धिरूपेण त्रिःप्रा-

---

१ ऋषभदेवस्य. २ ऐश्वर्याणि. ३ यस्मात्परं ज्ञानमुत्कृष्टं नास्ति. ४ चतुर्दशगुणस्थानकेष्वन्तिमम्. ५ केवलज्ञानोत्पत्त्यनन्तरं देवकृतं लक्ष्मीमयमुपदेशस्थानम्.

कारोपलक्षितचतुःप्रकारपर्षदौचित्याचरणेन सेवत इत्यनेन पूजातिशयः प्रकटीकृतः। तथा चतुर्दिक्षु स्वस्वाभिमुख्येन स्थितस्य मालवकैशिकीमुख्यग्रामरागगर्भितार्द्धमागधीरूपमपि वचनं मुनिदेवतिर्यङ्मनुष्यपरिषत्स्वपि स्वस्वभाषारूपपरिणतत्वोचितचतुर्द्वारवर्णनेन वचनातिशयो विकाशितः । अथोपलतुल्यकलावच्चन्द्रप्रभशब्दैः पामरविषयिमुमुक्षूणामभव्यवर्जितानां तत्तद्योग्याधिकारप्रबन्धोद्घाटनापदेशोपदेशेन हेयोपादेयतां प्रबोधयन्तो द्वितीयं पद्यं पेठुः । ततोत्रानेकप्रबन्धसिन्धून्मथनोत्पन्नपीयूषपरिवेषणदेशीयसुखावबोधप्रयोजनसंयोजनमपि जनयामासुः । तथा परंपराप्राप्तगुरुसंप्रदायादीयमानविवक्षितवस्तुविषयविषयीकृतग्रन्थनामनिवेदनमप्यन्वर्थं समर्थयामासुः । तथैव सहायकधर्मदेवगुणचन्द्रनामग्रहणेन च प्राचीनमहापुरुषचरित्रश्रवणानन्तरासन्नसच्चरितशुश्रूषणाग्रहग्रथितोपायोपेयभावसंबन्धबन्धुरं प्रबन्धचिन्तामणिसंचयं चिक्युः । तथाचाद्यैः सर्वैरपि पद्यैरुपोद्घातसंगतिं, शककर्त्रोरराद्यन्तद्रव्यव्रतांशप्रभावाविर्भूतैश्वर्ययोर्विक्रमशालिवाहननृपयोः प्रसङ्गसंगतिसंगतयोर्बीजभूतमथविक्रमार्कप्रबन्धइति वाक्यमपि वक्ष्यमाणार्वाचीनमहापुरुषचरित्ररूपावसरसंगतिद्योतकाथशब्दसाहितं सहितं चाचचक्षिरे ॥

तत्र तावत्सर्वेषु सच्छास्त्रेषु साक्षात्परंपरया वा परमपुरुषार्थसाधनस्य साधीयस्त्वेन निर्देशनं निर्विवादं विश्वेषां विदुषां वचनेषु वर्वर्तीत्यतोऽनादिनिधननिगोदनिलयनिलीनप्रलयप्रचण्डदुःखदीर्णशीर्णकृदकामनिर्जरा-

---

१ रत्नसुवर्णरौप्यमयप्राकाराः २ द्रव्यव्रतं भावव्रतमिति सर्वत्र भेदत्वात्. ३ यथा वैदिकमते सृष्टेः प्राक् जीवानां यन्निवासस्थानं तदेवात्राद्यन्तशून्यं निगोदशब्देनोच्यते. ४ वृक्षादिवदिच्छां विनैव तपःप्रमुखकष्टसहनेन कर्मणां कार्श्यमकामनिर्जरेत्युच्यते.

जितोर्जयथाभाविभवाब्धिस्थित्युपस्थितानर्द्धपुद्गलपरावर्तमहावर्तविवर्तन-विकर्तनार्तविकटव्यवहारमहाराशिविकाशितैकेन्द्रियादीनां, प्रोत्सर्पदुत्सर्पिणीगमनावाप्तावसर्पिणीसर्पिणीकषायकश्मलकुषितदीर्घदंष्ट्रान्तर्गतासुखमाख्यपापप्रपञ्चाञ्चितपञ्चमारकाराप्रहारपराभूतविवेकवैभवानां,सगमागमदर्शितदशदृष्टान्तदुर्लभालभ्यसार्द्धद्वयद्वीपान्तर्वर्तिभद्रंकरभारतगतसार्द्धपञ्चविंशत्यार्यक्षेत्रपावित्र्यशुभलेश्यालेशाविर्भावानुभूतचित्रचतुर्विंशतिदण्डकदण्डाङ्किताक्लिष्टषष्ठसंहननसंहितानां चारिसंजीविनीचारन्यायादन्तरायक्षयोपशमाप्तप्रज्ञाप्रकर्षितपञ्चेन्द्रियप्राणिप्रवरमान्यमनुष्यभवानुभवभाजां भव्यानां हितहेतवे, सिद्धशिलाशश्वदावेशप्रसिद्धेः प्राक्,

---

१ महासंख्याविशिष्टः कोपि कालविशेषः पुद्गलपरावर्ताख्यः, तथाचावमनीकृतसम्यक्त्वो जीवोऽर्द्धपुद्गलपरावर्तकालाभ्यन्तरे सिद्ध्यतीति भावः २ अव्यवहारराशेः सकाशाद्व्यवहारराशिं प्राप्ताः ३ उत्सर्पिणीकालो यथा सत्ययुगः ४ अवसर्पिणीकालो यथा कलियुगः, तत्राप्यनन्तास्ववसर्पिणीषु गतास्वियं हुंडावसर्पिणी. ५ कषायाः क्रोधमानमायालोभाः ६ असुखमाख्यो दुखमकालः यथा घोरकलेर्मध्यभागः ७ कालचक्रस्यायं पञ्चमारकः ८ सगमागमो जैनीयशास्त्रम्, गमाः सदृशपाठास्तैः सहित आगमः प्रवचनं तु जिनोदितमेव. ९ दशदृष्टान्तास्तु, उत्तराध्ययनादिजैनीयग्रन्थाद्बोध्याः १० लेश्या, आत्मनोऽध्यवसायविशेषः ११ यत्रायं जीवो दण्डं निग्रहं प्राप्नोति स दण्डको गतिविशेषः १२ षष्ठं संहननं शरीरं वज्रनाराचाख्यप्रथमसंहननापेक्षयातीव निर्बलम्. १३ चारिसंजीविनीचारदृष्टान्तोत्रैव पत्रे (१७३) द्रष्टव्यः १४ सिद्धशिला मोक्षशिला तत्रैव निरन्तरस्थितिः सिद्धानां नतु केनापि निमित्तेनात्रायान्ति ते.

केवलज्ञानानन्तरं प्रथमादिपुरुषार्थसार्थं साधनत्वेन निर्दैष्टुरष्टादशदोषो-ज्झितपरमकारुणिकपरमेश्वरस्य धर्मप्राध्वराध्वप्रस्थानमेव स्थाने, तस्यापि-ज्ञानपूर्वकत्वे सति सफलत्वे सिद्धे तदपि चारित्रान्तर्गतमेव "चारित्रमात्मचरणाज्ज्ञानं वा दर्शनं मुनेरिति" सिद्धान्तत्वात्तदपि पञ्चमहाव्रतरूपं तदपि सम्यक्त्वमूलद्वादशाणुव्रतपूर्वकमिति, तदंशमहाप्रभावं क्रमव्युत्क्रमाभ्यां पञ्चसर्गैरवान्तरप्रबन्धबन्धुरैः पुरुषर्षभचित्रचरित्रचिन्तामणिनिचितैश्चित्रीपवः, षट्त्रिंशदाचार्यगुणगरीयांसो महीयांसः, सप्तविंशतिगुणगरिष्टशिष्टमान्यमुनिसप्रेमप्रेरिताः क्षपितप्रथमगुणस्थानका अपि प्राप्तचतुर्थादिगुणस्थानका अत्रभवन्तो भगवन्तः शिष्यशेमुषीनिसर्गसर्गेनमेरवोपि मेरुतुङ्गाः, भस्मीकृतभस्मग्रहग्रहणशक्ति सकलजैनीयशास्त्रसिद्धान्तोपनिषद्भूतं प्रबन्धचिन्तामणिनामानं ग्रन्थं जग्रन्थुः ॥

तत्र तावदुक्तव्रतेष्वप्यहिंसाव्रतस्यादित्वात्तस्यापि दयामूलत्वाद्दयापि प्राज्यपरदुःखदलनेन दृश्यमानेति निदर्शयन्तः परदुःखभञ्जनबिरुदधारिणः श्रीविक्रमार्कस्य प्रबन्धं प्रथमं बबन्धुः। ततो विशिष्टशिष्टसृष्टिश्रेष्ठत्रिषष्टिशलाकापुरुषान्तिमासन्ननिषण्णतीर्थतीर्थंकरत्वनिदानंमुन्यन्नदानजन्यपूर्वपुण्यप्राग्भारप्रकटितैश्वर्यश्रीमच्छालिवाहनप्रबन्धसंबन्धं तितनिषवस्तत्प्राग्भवीयक्लान्ततान्तवृत्तान्तकथनगर्भान्तिमातीथिसंभागव्रतांशप्र-

---

१ अष्टादशदोषरहित एव हितोपदेष्टा परमेश्वरो भवति नान्यः २ स्थाने युक्तमेतदित्यर्थेऽव्ययम्. ३ चतुर्दशसु गुणस्थानकेषु प्रथमं मिथ्यात्वरूपं गुणस्थानकं ४ देववृक्षाः कल्पद्रुमादयः, विरोधाभासोपि ज्ञेयः ५ श्रीमहावीरमोक्षकाले तच्छासनबाधाकरो भस्मग्रह आपतितस्तद्ग्रस्तजैनीयमतोद्योतकं. ६ महापराक्रमैकप्रसिद्धाः शलाकापुरुषाः ७ महावीरस्वामिनापि पूर्वजन्मनि मुन्यन्नदानेन तीर्थंकरत्वं प्राप्तं, तथा शालिवाहनेन राज्यम्.

भावं प्रकटयन्तस्ततोनुसंदधुर्द्वितीयं महाप्रबन्धम् ॥ इत्थमाद्यन्तव्रतांश-सूचितोचितद्वादशव्रतानां सेतरकष्टानुष्ठानानामपि शीलव्रते सत्येव साफ-ल्यं प्रफुल्लयन्तः श्रीमहाकालमहादेवदत्तमालवदेशकन्यकुब्जेश्वरसांक्षि-प्तचरितकथनपूर्वकमृणालवतीमायामोहितमुञ्जमहाराजचरितमुदाहरणी-भूतमुपन्यस्यन्तो गूर्जरेश्वराग्रगण्यागण्यपुण्यभाजां वनराजादीनां चञ्च-च्चौर्यचटुलचित्तोर्जितार्जितकुलकलङ्ककलितचरितोच्चारणेन चादत्तादान-ब्रह्मचर्योद्भूताद्भुतप्रभावं प्रकाशयांचक्रुः । ससर्प च समाप्तिं प्रथमसर्गोप्यत्र॥

ततश्च प्राप्तपुरुपुरंदरसंपदोपि पृथ्वीपतयो मृषावादेन नितरां पराभूतिपदं प्रयान्तीति प्रतिपादयन्तः काशीशकर्णराजभोजराज-भीमानां महादानिनां चरितेषु "पराभवे प्रतिज्ञातां प्रणतिमकुर्वतो मालवेशस्य" मालवोपि[१] स्थितेरपप्तदिति परिहाररूपामसत्यस्य परां कोटिमुरीकयन्तोऽणूनामनणूनां व्रतानां च कर्तव्यतां कीर्तयन्तोत्र द्वि-तीयसर्गान्तं तेनुः ॥

तदनु तेषामपि ( व्रतानामपि ) निश्चलनियतनीतिनियन्त्रणाम-न्त्रणत्वात्तद्वृद्धिद्वृन्निष्ठषण्णवति[२]राजगुणविराजमान**सिद्धराज**प्रबन्ध चि-त्रचरित्रं सूत्रयामासुः, सर्गस्तृतीयोप्यतीतोऽत्र ॥

तदनु नीतिरपि परसत्तानिरपेक्षस्वशयशौर्यशालिनामेव शील-तीति शीलशौर्यशालिशीघ्रसमग्रसाहसहसितशतशक्तिसक्तशक्रशक्ति-व्यक्तीकृतस्वकृतसुकृतकृतकृतिकृत्य**कुमारपाल**महीपालप्रबन्धं धिया-ध्यक्षधृतमध्यगासिषुः, तत्र चतुःसर्गेषु[३] सत्स्वपि समाप्तश्चतुर्थः सर्गः ॥

---

१ लक्ष्मीलेशोपि. २ राज्ञां षण्णवतिगुणाः वस्तुविज्ञानरत्नकोशे द्रष्टव्याः ३ दानशीलतपोभावनानामुत्पत्तिः कुमारपालराज्ये विशेषेण तथा विरोधाभासोप्यवर्णि.

तदपि ( शौर्यमपि ) स्वस्वेष्टदेवताद्दढपर्युपासनयैवेत्युक्तानुक्तकमनीय-प्रशंसनीय परमार्हतार्हणीयनरचरित्रप्रचितप्रकीर्णकप्रबन्धान्द्रव्यभाव-भेदभिन्नात्मपरमात्मपूजाप्रभावाविर्भावान्तांस्तदुपष्टम्भकावान्तरप्रबन्धस-हितानपुनरागमनाय पञ्चत्वं प्राप्तानिव पञ्चमसर्गान्तान्प्राहुरिति वि-स्तरभयात्संक्षिप्ततरापि प्रस्तावना प्राज्ञैः प्रज्ञया प्रकर्षपदवीं दवीयसी-मपि प्रापणीयेति प्रार्थना ॥

**शास्त्री रामचन्द्र दीनानाथ.**

मुम्बापुरीयसर्वविद्योत्तेजकालये.

(यूनिवर्सिटी) १४–१०-१८८८ ख्रिष्ट.

संवत् १९४४ विजयादशम्याम्.



## पुस्तकाप्तिप्रज्ञप्तिपूर्वकस्वकल्पितसंकेतस्वरूपनिरूपणम्.

सन्ने १८८५–८६ वर्षे डा. पीपीटर्सनसाहेबसंगृहीतं नं० ६१७ मुद्रणेच्छाजनकमदृष्टपूर्वं प्राचीनमकृततृतीयलक्षणं[1] प्रबन्धचिन्तामणिपुस्तकं A स्थाने स्थापितम् ॥ १ ॥

तस्यैव द्वितीयावतारमिव पं० रत्नविजयगणिपुस्तकं B स्थाने बोध्यम् २

स्वस्यैव नवीनमपि शतधाछिन्नं C स्थाने निवेशितम् ॥ ३ ॥

आनन्दसुरगच्छाधिराजश्रीपूज्यगुणरत्नसूरिप्रीतिप्रेषितमव्यवस्थितत्वादकल्प्यमपि D स्थाने कल्पितम् ॥ ४ ॥

एवमसमग्रसामग्र्यामपि श्राद्धश्रद्धया प्रवर्तिते मुद्रणकार्ये कालातिक्रमे प्रयासशतैः संक्रान्तं विमलोपाश्रयस्थाद्विमलमपि मलधारिणोऽपूर्णं पुस्तकं पुनरपि प्रान्ते पाठान्तरेषु A स्थाने निसृष्टम् । तादृग्विधमपि केवलभगवदिच्छयाप्तं[2] मुम्बापुरीयसुसाइटीस्थं कृपालयफारबससाहेबसंगृहीतं तन्मित्रमिव तत्रैव B स्थाने नियमितम् ॥

यत्र न कोपि संकेतस्तत्र स्वकृतमेवावगन्तव्यम्। यथा पत्त्रे १ टिप्पनम्.

क. पुस्तकं जिनप्रभसूरिकृततीर्थकल्पः नं० ५९६ कल्पसूत्रटीकाभिः सहितो बोध्यः यथा पत्त्रेषु टि० १६–३० तथाच प. २२४

ख. राजशेखरसूरिकृतप्रबन्धकोशः । यथा तत्रान्ते लिखिता वंशावलिः ५२ पत्त्रे दर्शिता तथाच प. २०३

ग. कल्हणकृतराजतरंगिणी गणिता यथा टि. पत्त्रे ६८

घ. देवसेनसूरिकृतो दर्शनसारः पूर्वोक्तरिपोर्टे पत्त्रे ३७४ स्थितो निवेदितः । यथारम्भे पट्टावल्यां प्रमाणतया द्रष्टव्यः

---

१ अकृता तृतीया भागत्यागरूपा लक्षणा यत्र तत्. २ अस्मन्मित्त्रश्रीयुतभगवद्दासकेवलदासेन तत आनीय दत्तम्.

ङ. प्रद्युम्नसूरिकृतविचारसारः संकलितो यथा १९० पत्त्रे.

अ. मुनिसुन्दरसूरिशिष्यशुभशीलकृतभोजप्रबन्धो ज्ञेयः नं० ६२१

इ. सोमसुन्दरसूरिशिष्यजिनमण्डनगणिकृतकुमारपालप्रबन्धः

उ. रत्नसिंहसूरिशिष्यचारित्रसुन्दरगणिकृतः स एव वेदितव्यः

ऋ: कर्तृज्ञानशून्यमपूर्णं तदेव नं० ५८६ चिन्तनीयम्

१ यत्र किमपि चिह्नं न तत्र स्वकृतं पूर्वोक्तमनुसंधाय च कृतं टिप्पणम् । यथा षोडशादि १६—३१ पत्त्रेषु च

२ पाठान्तरसूचिपत्त्रादौ प्रथमोङ्कः पत्त्रस्य द्वितीयोङ्कः पङ्क्तेः

३ आद्यन्तपदयोर्मध्येऽन्यत्र वा....एतच्चिह्नं त्यक्तस्य। यथा प. ३२६

४ ककाराद्यक्षरेषु यदक्षरं यत्र स्थापितं स शब्दस्तावद्वारं तस्मिन्नेव पत्त्रे पुनः स्थित इति ध्येयम् । यथोपान्ते शब्दकोशे सप्तमादिपत्त्रेषु खकारेण द्विवारं गकारेण त्रिवारमित्यादि.

५ यस्य शब्दस्य पुरतो यावन्तोङ्कास्तत्तादङ्काङ्कितेषु पत्त्रेषु स शब्दोऽवलोक्यः

६ शब्दकोशादौ यत्र यत्र रेखा ॥ इयं तत्र तत्र केवलं पत्त्राङ्का न तु पङ्क्त्यङ्काः ।

७ भा. मु. प्रा. ले. एतेन भावनगरराजमुद्रितप्राचीनलेखसंग्रह ऊह्यः । यथा प. ३३९

८ चा. सु. ग. कृ. कु. एतेन चारित्रसुन्दरगणिकृतकुमारपालप्रबन्ध उकारस्थानीय एव ग्राह्यः

९ टि. T एताभ्यां सूक्ष्माक्षरेषु यट्टिप्पणं तद्विचारणीयम्

१० मा. प्रा. एताभ्यां माग[illegible] कृतभाषैव भावनीया ॥

रा० दी.

# अथ विषयवर्णनम्

# ग्रन्थकर्तृविषये विशेषवक्तव्यता

:0:

चण्डप्रद्योतनपुत्रस्य पालकनाम्नोऽवन्तौ राज्येऽपापायां पुरि श्रीमहावीरस्वामी ७२ वर्षायुःप्रान्ते मोक्षं गतः। तस्यैकादश गणधरास्तत्रेन्द्रभूति१(गौतमः) रग्निभूति२र्वायुभूति३रितित्रयो भ्रातरो गौतमगोत्राः। व्यक्तो ४ भारद्वाजगोत्रः। सुधर्मा ५ अग्निवेश्यायनगोत्रः। मण्डिकपुत्रो ६ वाशिष्ठगोत्रः। मौर्यपुत्रः ७ काश्यपगोत्रः। तावेकमातृत्वाद्भ्रातरौ भिन्नगोत्रत्वं पृथग्जनकापेक्षया. मण्डिकस्य पिता धनदेवस्तस्मिन्मृते मौर्यः पतिस्तत्पुत्रो मौर्यपुत्रः, माता तु विजयादेवीनाम्न्येकैव। अकम्पितो ८ गौतमगोत्रः। अचलभ्राता ९ हारीतगोत्रः। मेतार्यः १० प्रभास ११ एतौ कौण्डिन्यगोत्रौ, सर्वेपि निरपत्याः सुधर्मणो वंशः॥

श्रीमहावीरमोक्षात्सुधर्मा २० वर्षे मोक्षं गतः।
तत्पट्टे काश्यपगोत्री जम्बूस्वामी[१] ६४ वर्षे मोक्षं गतः।
तत्पट्टे कात्यायनगोत्री प्रभवस्वामी ७५ व. मो. ग.
त० वात्स्यायनगोत्री शय्यंभवः[२] ९८ व. मो. ग.
त० तुङ्गिकायनगोत्री यशोभद्रः १४८ व. मो. ग.
त० माठरगोत्री संभूतिविजयः १५६ व. मो. ग.
त० प्राचीनसगोत्री भद्रबाहुः[३] १७० व. मो. ग.

---

१ महावीरमोक्षादिति सर्वत्रान्वयः २ मनकपिता दशवैकालिकसूत्रकर्ता ३ अयं वृद्धभद्रबाहुः श्रुतकेवली वीरात् १६२ वर्षे तदा दिगम्बरबौद्धमते १४स्वप्नैः श्वेताम्बरमते १२स्वप्नैः सूचितो भद्रबाहुना निर्दिष्टस्वप्नफलो गुप्तवंशाद्यो विक्रमापरनामा चन्द्रगुप्ताभिधोन्तिमो मुकुटबद्धः क्षत्रियवंश्यः कौटिल्यापरनाम्ना चाणाक्येन स्थापितो जैनीयो राजा (भीलसाटोप) पत्रे १४३-१५१ पर्यन्तं तद्विषये द्रष्टव्यम्।

## त. गौतमगोत्री स्थूलिभद्रः २१५ व. मो. ग.

### तच्छिष्यौ.

आर्यमहागिरिः[1]
एलापत्य(वत्स)गोत्री
२४५ व. मो. ग.
बलिस्सहसूरिः[६] २८० व०
स्वातिसूरिः ३३२ व०
श्यामार्यः ३७६ व०
सांडिल्लसूरिः ४०९ व०
जीतधरसूरिः ४५४ व०
आर्यमङ्गुः ४६७ व०
आर्यसमुद्रः ५०८ व०
नन्दिलसूरिः ५९१ व०
नागहस्तिसूरिः ६८४ व०
रेवतीसूरिः ७१८ व०
सिंहसूरिः ७८० व०
स्कन्दिलाचार्यः ८१४ व०
हेमवन्तः ८४८ व०
नागार्जुनः ८७५ व०
गोविन्दसूरिः ८७७ व०
भूतिदिन्नः ९१४ व०

आर्यसुहस्ती[2]
वाशिष्ठगोत्री
२९१ व. मो. ग.
सुस्थितसुप्रतिबुद्धौ[3]
व्याघ्रापत्यगौत्रिणौ
इन्द्रदिन्नः
कौशिकगोत्री
आर्यदिन्नः[4]
गौतमगोत्री
सिंहगिरिः
कौशिकगोत्री
वज्रस्वामी[5] गौतमगोत्री
४९६ जन्म ५८८व०मो०
वज्रसेनः ६२० व०
श्रीचन्द्रसूरिः
समन्तभद्रसूरिः
वृद्धदेवसूरिः
प्रद्योतनसूरिः
मानदेवसूरिः

---

१ जिनकल्पी दिगम्बर. २ चन्द्रगुप्त० बिन्दुसार० अशोक० कुणाल० संप्रतिराजस्तद्गुरुः स्थविककल्पी श्वेताम्बरः

३ गर्दभिल्लोच्छेदकारिकालिकाचार्यश्रीसिद्धसेनादिवाकरौ ४५०व०।

४ आर्यखपुटाचार्य ४५३ व० । ५ श्रीगुप्तसूरिः ५४८ व०। वृद्धदेवसूरिः शत्रुंजयोच्छेदश्च ५२५व०। जावडकृतोद्धारः ५७० व०।

६ अर्हद्बलिगुप्तिगुप्तविशाखाचार्योंति नामत्रयस्ख्यातः

लोहित्यगणि*: ९४२ व०
दूष्यगणि: ९७९ व०
देवर्द्धिगणि: १००६ वर्षे
स्वर्गतः, तेनैव [illegible]
९९३ वर्षे सिद्धान्तानि
अङ्गानि ११ उपाङ्गानि ११
छेदाः ६ मूलसू० ६
पइन्नाः १० नन्दिः १
एवं ४५ पुस्तके स्थापितानि[1]

मानतुङ्गसूरिः
तेन नागपुरे विक्रमत-
स्त्रिंशति वर्षे नेमिना-
थप्रतिष्ठा कृता वीरात् ७७०
श्रीवीरसूरिः
जयदेवसूरिः
देवानन्दसूरिः, अथवा आनन्दसूरिः
विक्रमसूरिः
नरसिंहसूरिः

समुद्रसूरिः
मानदेवसूरिहरिभद्रसूरि
विबुधप्रभसूरिः
जयानन्दसूरिः
रविप्रभसूरिः
वीरात् ११५० वर्षे
जिनभद्रगणिः
यशोदेवः
विक्रमतः ८०० वर्षे बप्पभट्टिः
८९६ स्वर्गं गतः
विमलचन्द्रः विक्रमतः९९४ व०
उद्योतनसूरिः
सर्वदेवसूरिः[2]

[illegible]देव.
उदयप्रभ.
नरचन्द्र.
श्रीगुणसूरि.
[illegible]प्रभ.
नरचन्द्र.
वीरचन्द्र.
आयरी[illegible].
जयसिंह.
धर्मघोष.
महेन्द्रसूरि.
सिंहप्रभ.
अजितसिं[illegible].
देवेन्द्रसूरि.

* लोहिताङ्ग, पद्मनन्दि १ वक्रग्रीव २. ग्रापच्छ ३ एलाचार्य ४ कुन्दकुन्द ५ [illegible] नामपञ्चकेनरत

१ दिगम्बरमते तु महावीरात् ६८३ वर्षे पुष्पदन्तभूतबलिभ्यां विक्रमराजजन्मनि सति सिद्धान्तानि पुस्तके स्थापितानीति

२ धनपालः वि० १०२९

| धर्मप्रभसूरि. | मेरुतुङ्गाचार्यः |
| --- | --- |
| सिंहतिलक. | स च वीरात् ५८ पट्टे जातः |
| महेन्द्रप्रभ. | |

वादीवेताल. उ. टी. शान्तिसूरिः थिरापद्रगच्छीयः
वि० १०९६ व. मृतः ॥ नवाङ्गवृत्तिकृदभयदेवः
वि० ११३५ व. मृतः ॥ ११५९ पौर्णमीयकमतोत्पत्तिः ॥
कुमुदचन्द्रदिगम्बरं विजित्य संवत् १२०४ वर्षे
फलवर्द्धिग्रामे आरासणे च नेमिनाथप्रतिष्ठाकर्त्ता

तथा चतुरशीतिसहस्रपरिमितस्याद्वादरत्नाकरनाम्नो ग्रन्थस्य कर्ता वादिदेवसूरिः सं. १२२६ वर्षे मृतः।

हेमचन्द्रश्च १२२९ मृतः ॥ १२०४ वर्षे खरतरोत्पत्तिः।

१२१३ वर्षे अञ्चलिकमतोत्पत्तिः ॥ १२२६ वर्षे सार्द्धपौर्णमीयमतोत्पत्तिः ॥ १२५० वर्षे आगमिकमतोत्पत्तिः

निग्रन्थ. १ कोटि. २ चन्द्र. ३ वनवासी. ४ वटगच्छ. ५ तपोगच्छ ६ इति षण्णां नाम्नां प्रवृत्तिहेतवः आचार्याः क्रमेण श्रीसुधर्मा १ सुस्थितसूरि. २ श्रीचन्द्रसूरि. ३ समन्तभद्रसूरि. ४ सर्वदेवसूरि. ५ जगच्चन्द्रसूरिनामानः

नाणकगच्छेऽर्बुदाचलस्थवटाधः स्थितेभ्यः सर्वदेवसूरिभ्यो वटगच्छोभूत्स च बृहत्वाद्बृहद्गच्छस्तदाम्नाये जयसिंहसूरीणां शिष्या आर्यरक्षितसूरयस्तेषां दन्ताणीग्रामे जन्म पितृदत्तनाम गोदउ गुरुदत्तनाम विजयचन्द्रोपाध्यायः सूरिदत्तनाम आर्यरक्षितः संवत् ११३६ जन्म ११४१ व्रतं १२२६ परलोकः सर्वायुर्वर्षाणि ९१ ते च सीउदगं न सेविज्जा इत्यादिसिद्धान्तपाठात्संविग्नतया विहर्तुकामाः पूर्णमागच्छं प्रतिपद्यमानैः स्वमातुलैः श्रीशीलगणसूरिभिः सर्वाङ्गपारीणान् कृत्वा मालारोपणादिसावद्यभयादाचार्यत्वमनिच्छवो बलादुपाध्याय-

पदे स्थापिताः। ततश्चात्मचतुर्था विधिना विहरमाना भालिजनगरं प्राप्ताः। तत्र यशोधनश्रेष्ठिना ऋषभदेवप्रासादं कारयित्वा प्रतिष्ठाकारणावसरे तन्निवारणायोपस्थितेषु संगमखेटीयश्रीदेवेन्द्रसूरि, आशापल्लीय श्रीमलयचन्द्रसूरि· पिप्पलीयश्रीशांतिसूरिमुख्येषु देवप्रभावात्प्रतिष्ठोत्सवे जाते संवत् ११६९ वर्षे विधिमार्गप्रवृत्तिं कुर्वन्तः स्थिरपद्रपुरं प्रापुः॥ इतश्च सोपारकपत्तने महेभ्यश्रेष्ठिदाहडस्तत्सुतो जासिकुमारस्तेन जम्बूचारित्रं श्रुत्वा प्रतिबुद्धेन मित्रासवरेण सह श्रीपत्तने सिद्धचक्रवर्त्तिश्रीजयसिंहदेवप्रसादमवाप्य तत्रागतेन प्रथमागमे दशवैकालिकमेकपाठेन पठित्वा गुरुपार्श्वे दीक्षां गृहीत्वा तन्नाम यशश्चन्द्रगणय इति ते च पञ्चभिर्वर्षैः सर्वस्वपरसमयाम्भोधिपारं प्राप्य मन्दारपुरे महतोत्सवेन श्रीजयसिंहसूरयोऽभूवन्। ततस्तैराशातनाभीतैः स्वगुरून्श्रीसूरित्वे संस्थाप्य श्रीआर्यरक्षितसूरीति च नाम दत्त्वा बिउणपतटे चाचार्योपाध्यायादि २० पदानि चक्रिरे। तस्य सं० ११७९ जन्म ११९७ व्रतं १२०२ सूरिपदं १२५८ परलोकः सर्वायुः ८०॥ जयसिंहसूरिपट्टे धर्मघोषसूरयः। तेषां मरुदेशे श्रीचन्द्रः पिता सं० १२०८ जन्म १२१६ व्रतं १२३४ सूरिपदं १२६८ स्वर्गः सर्वायुः ६०॥ तेषां पट्टे आगमकालामुखबिरुदाः महेन्द्रसिंहसूरयः तेषां सरनगरे साणदेवप्रसादः पिता सं० १२२० जन्म सं० १२३७ दीक्षा १२६३ सूरिपदं १२७१ गच्छेशपदं १३०९ स्वर्गः सर्वायुः ८२॥ तत्पट्टे सिंहप्रभसूरयः तेषां च बीजापुरे श्रे० अरसीहः पिता सं० १२२८ जन्म १२९१ दीक्षा १३०८ सूरिपदं १३१३ स्वर्गः सर्वायुः ३१ ततः श्रीअजितसिंहसूरयः, यस्प समरसिंहः शिष्यः तस्य कोकग्रामे शा० जिनदेवः पिता सं० १२८३ जन्म १२९१ दीक्षा १३१४ सूरिपदं १३१६ गच्छेशपदं १३३९ स्वर्गः सर्वायुः ५७॥ तत्पट्टे देवेन्द्रसिंहसूरयः तस्य पाल्हणपुरे जन्म पिता सान्तूनामा

१२९९ जन्म १३०६ दीक्षा १३२३ सूरिपदं १३३९ गच्छेशत्वं १३७१ स्वर्गः सर्वायुः ७३ ॥ तत्पट्टे श्रीधर्मप्रभसूरयः, तेषां भिल्लमाले व्यवहारी लिम्बनामा पिता सं. १३३१ जन्म १३४१ दीक्षा १३५९, सूरिपदं १३७१ गच्छेशपदं १३९३ स्वर्गः सर्वायुः ६२ ॥ ततः श्री-सिंहतिलकसूरयः, तेषां आदित्यवाटके श्रे० आसधरः पिता सं. १३४५ जन्म १३५२ दीक्षा १३७१ सूरिपदं १३९३ गच्छेशपदं १३९५ स्वर्गः सर्वायुः ५१ ॥ तत्पट्टे महेन्द्रप्रभसूरयः तेषां वडग्रामे परीक्ष आभानामा पिता सं. १३६३ जन्म १३६९ दीक्षा १३८९ सूरिपदं १३९८ गच्छेशपदं १४४३ स्वर्गः सर्वायुः ८१ ॥ तत्पट्टे मेरुतुङ्गसूरयः ॥ अत एव दिगम्बरोक्तक्रमो यथा ॥

## ॥ दिगम्बरपट्टावली ॥

### महावीरमोक्षात्स्वमोक्षपर्यन्तं वर्षाणि.

| आचार्यनाम | |
|---|---|
| गौतमस्वामी व. १२ | क्षत्रियाचार्यः व. २०८ |
| सुधर्मा व. २४ | जयसेनः व. २२८ |
| जम्बूस्वामी[1] व. ६२ | सागरसेनः व. २४७ |
| विष्णुकुमारः व. ७६ | सिद्धार्थाचार्यः व. २६४ |
| नन्दिमित्रः व. ९२ | धृतिसेनाचार्यः व. २८२ |
| अपराजितः व. ११४ | विजयाचार्यः व. २९५ |
| गोवर्द्धनः व. १३३ | बुद्धलिङ्गाचार्यः व. ३१५ |
| भद्रबाहुः[2] व. १६२ | देवाचार्यः व. ३२९ |
| विशाखाचार्यः व. १७२ | धर्मसेनाचार्यः[3] व. ३४५ |
| प्रोष्ठिलाचार्यः व. १९१ | नक्षत्राचार्यः व. ३६३ |
| | जयपालाचार्यः व. ३८३ |

१ एते त्रय एव केवलिनः २ एते पञ्च श्रुतकेवलिनः ३ एते ११ दशपूर्विणः

पाण्डवाचार्यः व. ४२२
ध्रुवसेनाचार्यः व. ४३६
कंसाचार्यः व. ४६८
सुभद्राचार्यः व. ४७४
यशोभद्राचार्यः व. ४९२
भद्रबाहुः व. ५१५

लोहाचार्यः[1] व. ५६५
अहिदिलाचार्यः व. ५९३
माघनन्द्याचार्यः व. ६१४
धरसेनाचार्यः व. ६३३
पुष्पदन्ताचार्यः ६८३
भूतबल्याचार्यः व. ७०३

महावीरमोक्षवर्षा ६८३ वर्षे विक्रमादित्यस्य जन्म तथा च महावीरमोक्षात् ४९३ वर्षे त० सुभद्राचार्यात् २४ वर्षे त० विक्रमजन्मतः २२ वर्षे त० तद्राज्याच्चतुर्थे वर्षे भद्रबाहुर्जातस्तमाश्रित्याह

| आचार्यस्य मोक्षः | संवत् | | |
|---|---|---|---|
| भद्रभाहुः .... .... .... | २६ | कुमारनन्दिः .... .... .... | ४२७ |
| गुप्तिगुप्तः[2] .... .... .... | ३६ | लोकचन्द्रः .... .... .... | ४५३ |
| माघनन्दिः .... .... .... | ४० | प्रभाचन्द्रः .... .... .... | ४७८ |
| जिनचन्द्रः[3] .... .... .... | ४९ | नेमिचन्द्रः .... .... .... | ४८७ |
| कुन्दकुन्दाचार्यः[4] .... .... | १०१ | भानुनन्दिः .... .... .... | ५०८ |
| उमास्वातिः[5] .... .... | १४२ | हरिनन्दिः .... .... .... | ५२५ |
| लोहाचार्यः[6] .... .... .... | १५३ | वसुनन्दिः .... .... .... | ५३१ |
| यशःकीर्त्तिः .... .... .... | २०१ | वीरनन्दिः .... .... .... | ५६१ |
| यशोनन्दिः .... .... .... | २५८ | रत्ननन्दिः[7] .... .... .... | ५८५ |
| देवनन्दिः .... .... .... | ३०८ | माणिक्यनन्दिः .... .... | ६०१ |
| पूज्यपादः .... .... .... | ३५३ | मेघचन्द्रः .... .... .... | ६२७ |
| गुणनन्दिः .... .... .... | ३६४ | शान्तिकीर्त्तिः .... .... | ६४२ |
| वज्रनन्दिः .... .... .... | ३८६ | मेरुकीर्त्तिः .... .... .... | ६८६ |

१ एते ९ एकादशाङ्गधारिणः २ श्वेताम्बरोत्पत्तिः ३ घपुस्तके विशेषो द्रष्टव्यः ४ पद्मनन्दि, वक्रग्रीव, गृध्रपिच्छ, एलाचार्या इति तस्यैव नामानि ५ काष्ठासंघोत्पत्तिः ६ प्रागुदगिति पट्टद्वयं तत एव ७ रत्नकीर्त्तिः

| | | | |
|---|---|---|---|
| महाकीर्त्तिः | ७०४ | गुणचन्द्रः | १०६६ |
| विष्णुनन्दिः | ७२६ | लोकचन्द्रः[८] | १०७९ |
| श्रीभूषणः | ७३५ | श्रुतकीर्त्तिः | १०९५ |
| शीलचन्द्रः[१] | ७४९ | भावचन्द्रः | १११५ |
| श्रीनन्दिकीर्त्तिः[२] | ७६५ | महाचन्द्रः[९] | ११४० |
| देशभूषणः | ७६५ | माघचन्द्रः | ११४४ |
| अनन्तकीर्त्तिः | ७८५ | ब्रह्मनन्दिः[१०] | ११४८ |
| धर्मनन्दिः | ८०८ | शिवनन्दिः | ११५५ |
| वीरचन्द्रः[३] | ८४० | विश्वचन्द्रः[११] | ११५६ |
| रामचन्द्रः | ८५७ | सिंहनन्दिः[१२] | ११६० |
| रामकेतुः[४] | ८७८ | भावनन्दिः | ११६७ |
| अभयचन्द्रः | ८९७ | देवनन्दिः[१३] | ११७० |
| नरचन्द्रः[५] | ९१६ | विद्याचन्द्रः | ११७६ |
| नागचन्द्रः | ९३९ | सूरचन्द्रः | ११८४ |
| नयननन्दिः | ९४८ | माघनन्दिः | ११८८ |
| हरिचन्द्रः | ९७४ | ज्ञाननन्दिः[१४] | ११९९ |
| महीचन्द्रः | ९९० | गङ्गकीर्त्तिः | १२०६ |
| माघचन्द्रः[६] | १०२३ | सिंहकीर्त्तिः | १२०९ |
| लक्ष्मीचन्द्रः | १०३७ | हेमकीर्त्तिः | १२१९ |
| गुणकीर्त्तिः[७] | १०४८ | अभयचन्द्रः* | .... .... |

१ श्रीचन्द्रः २ नन्दिकीर्त्तिः ३ विद्यानन्दिः ४ रामकीर्त्तिः ५ नरनन्दिः ६ माधवचन्द्रः ७ गुणनन्दिः ८ वासवचन्द्रः ९ महीचन्द्रः १० वृषभनन्दिः ११ वसुचन्द्रः १२ संघनन्दिः १३ सुरकीर्त्ति १४ ज्ञानकीर्त्तिः

नेमिनन्दिः—नेमिकीर्तिः—नरेन्द्रयशाः—श्रीचन्द्रः—पद्मकीर्त्तिः—वर्द्धमानः—अकलङ्कः चन्द्रगुरुः—केशवः—चन्द्रः—अभयकीर्त्तिः—वसन्तकीर्त्तिः—वनवासी—(पूर्वोक्तेनानुसंधानं स्वधिया विधेयम् )

* चारुनन्दिः पादस्याह देहलीराजाज्ञया वस्त्रधारेण

तथा च सिद्धराजसमक्षं दिगम्बरकुमुदचन्द्रे जिते वादिदेवसूरि-प्रशंसाकर्तृषु प्रद्युम्नाचार्य, हेमाचार्य, उदयप्रभदेव, मुनिदेवाचार्य,-मेरुतुङ्गाचार्येषु सत्सु खरतरगच्छीयोऽञ्चलगच्छीयश्च द्वयोर्मध्ये नैकोऽस्य ग्रन्थस्य कर्ता संभवति ग्रन्थान्ते १३६१ वर्षे कृत इत्युक्तत्वात्। तदुत्तरमपि, १ तथा च ग्रन्थकर्त्रा येभ्यो ग्रन्थेभ्यः पद्यानि गृहीतानि तत्स्थलमपि, २ तथा च जैनीयानां चरित्रग्रन्थेष्वेकनामानो यावन्तः प्राचीनार्वाचीना राजानः सूरयश्च तेषां सहैव चरितानि वर्णयन्ति ग्रन्थकर्तारस्ततस्तेषां कालभेदनिरूपणमपि ३ मत्कैतन्मुद्रणोन्मुद्रिता भगवन्तो दर्शयिष्यन्तीत्याशयाश्रयणीयं सदुपदिष्टं जार्षमेवाधुना श्रेयस्करमित्यलं पल्लवितेन, अथवाल्पकालभाविन्यामस्यैव द्वितीयावृत्तौ समीचीनशुद्धतरायां सर्वं स्फुटं भविष्यति ॥ तथा च । सं. १२६२ वर्षे धर्मघोषसूरिभिः कृता "शतपदिका" सैव १२९४ वर्षे महेन्द्रसिंहसूरिभिः सुखावबोधा कृता । तस्या एव शतपदिकासारोद्धारो नाम ग्रन्थो मेरुतुङ्गसूरिणा कृतः १ तथा सूरिमन्त्रसारोद्धारः २ मेघदूतकाव्यम् ३ कातन्त्रव्याकरणस्य व्याख्यानम् । तत्र युगत्रयेन्दुसंख्येऽब्दे, ग्रन्थः कृत इत्युक्तं तथारंभेपि नत्वा चन्द्रप्रभं गुरुमित्यादौ विशेषोपि सूचितः । ४ महापुरुषचारित्रं प्राकृतम् ५ एतेषु मत्परिचितेषु मेरुतुङ्गकृतेषु प्रबन्धचिन्तामणेरस्य सर्वोपानिषद्भूतत्वात्तत्प्रगटीकरणं समञ्जसमिति ॥ इति प्रस्तावना ॥ रा० दी० ॥



# ॥ प्रबन्धचिन्तामणिः ॥



॥ ॐ नमः श्रियै ॥ श्रीस्वामिने नमः ॥

श्रीनाभिभूर्जिनः[1] पातु परमेष्ठी भवान्तकृत् ।
श्रीभारत्योश्चतुर्द्वारमुचितं[2] यश्चतुर्मुखी ॥ १ ॥

नृणामुपलतुल्यानां यस्य द्रावकरः करः ।
ध्यायामि तं कलावन्तं गुरुं चन्द्रप्रभं प्रभुम् ॥ २ ॥

गुम्फान्विधूय विविधान्सुखबोधाय धीमताम् ।
श्रीमेरुतुङ्गस्तद्गद्यबन्धाद्ग्रन्थं तनोत्यमुम् ॥ ३ ॥

रत्नाकरात्सद्गुरुसंप्रदाया-
त्प्रबन्धचिन्तामणिमुद्दिधीर्षोः ।
श्रीधर्मदेवः प्रथमोपरोध-
वृत्तेश्च साहाय्यमिह व्यधत्त ॥ ४ ॥

श्रीगुणचन्द्रगणेशः प्रबन्धचिन्तामणिं नवं ग्रन्थम् ।
भारतमिवाभिरामं प्रथमादर्शे प्रदर्शितवान् ॥ ५ ॥

---

१ श्रीऋषभदेवः २ मणिरत्नमयसुवर्णमयरौप्यमयदुर्गत्रये समवसरणे चतुर्दिक्षु द्वारस्य विद्यमानत्वाच्छ्रियश्चतुर्द्वारमुचितं चतुस्त्रिंशदतिशयप्रभावात्सर्वाभिमुखत्वेन देशनां ददानस्य तीर्थकरस्य भारत्याश्चतुर्द्वारमुचितं यत्सम्बन्धिनी श्रीर्भारती च चतुर्मुखी जैनशास्त्रे प्रसिद्धा

।

भृशं श्रुतत्वान्न कथाः पुराणाः
प्रीणन्ति चेतांसि तथा बुधानाम्
वृत्तैस्तदासन्नसतां प्रबन्ध-
चिन्तामणिग्रन्थमहं तनोमि ॥ ६ ॥
बुधैः प्रबन्धाः सुधियोच्यमाना
भवन्त्यवश्यं यदि भिन्नभावाः ।
ग्रन्थे तथाप्यत्र सुसंप्रदाया-
दृब्धे न चर्चा चतुरैर्विधेया ॥ ७ ॥

## ॥ अथ विक्रमार्कप्रबन्धः ॥

अन्त्योप्याद्यः समजनि गुणैरेक एवावनीशः
शौर्यौदार्यप्रभृतिभिरिहोर्वीतले विक्रमार्कः ।
श्रोतुः श्रोत्रामृतसवनवत्तस्य राज्ञः प्रबन्धं
संक्षिप्योच्चैर्विपुलमपि तं वच्मि किञ्चित्तदादौ ॥८॥
तथाहि ॥

अवन्तिदेशे[1] सुप्रतिष्ठाननामनि नगरेऽसमसाहसैकनिधिर्दिव्यलक्षणलाक्षितो[2] विक्रमादिगुणैः संपूर्णो[3] विक्रमनामा राजपुत्र आसीत् । स पुनराजन्म दारिद्र्योपद्रुतोप्यतिनीतिपरः सन्यरः-

---

१ B उज्जयिनीपूर्यां २ D कर्मविक्रमादिगूणैः ३ C भर्तृहरबन्धुः

शतैरप्युपायैरर्थाननुपलभमानः कदाचिद्भट्टमात्रामित्रसहायो रोहणाचलं प्रति प्रतस्थे। तत्र तदासन्ने प्रवरनामानि नगरे कुलालस्यालये विश्रम्य प्रभातसमये स भट्टमात्रेण खनित्रं याचितः प्राह। अत्र खनीमध्यमध्यास्य प्रातः पुण्यश्रवणपूर्वं ललाटं करतलेन संस्पृश्य हा दैवमित्युदीरयन्घाते पातिते सति दुर्गतो यथाप्राप्त्या रत्नानि लभते।स वृत्तान्तममुं तस्मात्सम्यगवगम्य विक्रमेण तद्दैन्यं कारयितुमक्षमस्तान्युपकरणानि सहादाय रत्नखननार्थं खनीमध्ये प्रहारोद्यतं विक्रममभिदधे। यत्कश्चिदवन्त्याः समागतो वैदेशिकःस्वगृहे कुशलोदन्तं पृष्टो भवन्मातुः पञ्चत्वमाचचख्यौ। तत्तप्तवज्रशूचीनिभं वचो निशम्य ललाटं करतलेनाहत्य हा दैवमित्युच्चरन्खनित्रं करतलाच्चिक्षेप। तेन खनित्राग्रेण विदारितायां भुवि देदीप्यमानं सपादलक्ष्यमूल्यं रत्नं प्रादुरासीत्। भट्टमात्रस्तदादाय विक्रमेण सह प्रत्यावृत्तः। तच्छोकशङ्कुशङ्कापनोदाय खनीवृत्तान्तज्ञापनपूर्वं तत्कालमेव मातुः कुशलमुक्तवान्। विक्रमः सहजां लोलुभतां विमृश्य भट्टमात्रस्य क्रुधा तत्कराद्रत्नमाछिद्य पुनः खनीकण्ठे प्राप्तः।

धिग् रोहणं गिरिं दीनदाद्यव्रणरोहणम् ।
दत्ते हा दैवमित्युक्ते रत्नान्यर्थिजनाय यः ॥

इत्युदीर्य सकललोकप्रत्यक्षं तत्रैव तद्रत्नमुत्सृज्य पुनर्देशान्तरं परिभ्राम्यन्नवन्तिपरिसरं[1] प्राप्तः । पटुपटहध्वनिमाकर्ण्य वृत्तान्तमवबुध्य च तं छुप्तवान् । तेन समं स राजमन्दिरे समायातः । तस्मिन्नेवाएष्टे मुहूर्त्ते अहोरात्रप्रमिते राज्ये सचिवैरभिषिक्तो दीर्घदर्शितयेति दध्यौ । यदस्य राज्यस्य प्रबलः कोऽप्यसुरः सुरो वा क्रुद्धः सम्प्रतिदिनमेकैकं नृपं संहरति नृपाभावे देशविनाशं करोति । अतो भक्त्या वा शक्त्या तदनुनयः समुचित इति नानाविधानि भक्ष्यभोज्यानि[2] निर्माप्य प्रदोषसमये चन्द्रशालायां सर्वमपि सज्जीकृत्य निशारात्रिकावसरानन्तरमङ्गरक्षैर्वृतस्तत्र भारशृङ्खलायां निहितपल्यङ्के निजपट्टदुकूलाच्छादितमुच्छीर्षकं नियोज्य स्वयं प्रदीपच्छायामाश्रित्य कृपाणपाणिर्धैर्यनिर्जितजगत्त्रयो दिगवलोकनपरो यावदास्ते तावन्महानिशीथसमये वातायनद्वारेण प्रथमं धूमं ततो ज्वालां ततः साक्षात्प्रेतपतिरूपमिव करालं वे-

---

१ B D अवन्तिपरिसरे प्राप्तः २ C खाद्यानि निर्माय

तालमालोकितवान् । स च बुभुक्षाक्षामकुक्षिस्तानि भोज्यानि यदृच्छयोपभुज्य गन्धद्रव्यैश्च स्वशरीरं विलिप्य ताम्बूलास्वादनेन परितुष्टस्तत्र पल्यङ्के समुपविश्य श्रीविक्रमं प्राह । रे मनुज अहमग्निवतालनामा देवराजप्रतीहारतया प्रतीतः प्रतिदिनमेकैकं नृपं निहन्मि । किं तु तवानया भक्त्या प्रीणितेन मयाऽभयदानपूर्वं तव राज्यं प्रदत्तं परमेतावद्भक्ष्यभोज्यानि मम सदैवोपढौकनीयानि । इत्थमुभाभ्यामपि प्रतिपन्ने कियत्यपि गते काले श्रीविक्रमेण राज्ञा निजमायुः पृष्टः । नाहं वेद्मि किं तु स्वस्वामिनं विज्ञाप्य भवन्तं विज्ञापयिष्यामीत्युक्त्वा गतः । पुनरन्यस्यां निशि समेतः । महेन्द्रेण संपूर्णशतायुरादिष्ट इति तं जगौ । स राज्ञा मित्रधर्ममधिकमधिरोप्येत्युपरुध्य[1] यन्महेन्द्रपार्श्वादेकेन हायनेन हीनं वर्षशतं कारयेति स तदङ्गीकृत्य भूयोऽभ्युपेतः सन्नित्युवाच । महेन्द्रेणापि न नवनवतिर्नैकोत्तरं वर्षशतं भवतीति[2] निर्णये ज्ञाते यावत्परस्मिन्दिने तद्योग्यं भक्ष्यभोज्यादिपाकं निषिध्य नृपः संग्रामसज्जो भूत्वा निशि तस्थौ । तावत्तत्रैव पूर्वरी-

---

१ A अधिरोप्याग्रहान्महेन्द्र २ B भवतीति कथितमिति निर्णये ज्ञाते

त्था समुपागतः स नृपं जगौ। तद्भोज्यादिकमतीक्ष्य राजानमधिचिक्षेप च तयोश्चिरं द्वन्द्वयुद्धे जायमाने सुकृतसहायेन राज्ञा तं पृथ्वीतले पातयित्वा हृदि चरणमारोप्येष्टं दैवतं स्मरेत्यादिष्टः स नृपं जगौ। अमुनाद्भुतसाहसेन परितुष्टोस्मि यकृत्यादेशकारी अग्निवेतालनामाहं तव सिद्धः। एवं निष्कण्टकं तस्य राज्यमजनि। इत्थं तेन पराक्रमाक्रान्तदिग्वलयेन[1]षण्णवतिप्रतिनृपतिमण्डलानि स्वभोगमानिन्ये

वन्यो[2] हस्ती स्फुटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दूरात्प्रतिगज इति त्वद्विषां मन्दिरेषु।
हत्वा कोपाद्गलितरदनस्तं पुनर्वीक्ष्यमाणो
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्क[3] ॥१॥

अवन्त्यां पुरि श्रीविक्रमादित्यराज्ञः सुता प्रियङ्गुमञ्जरी साध्ययनाय वररुचिनाम्नः पण्डितस्य समर्पिता सा प्राज्ञतया सर्वाणि शास्त्राणि तत्पार्श्वे कियद्भिर्वासरैरधीत्य यौवनभरं वर्त्तमाना जनकं नित्यमाराधयन्ती कदाचिद्वसन्तसमये वर्त्तमाने गवाक्षे सुखासनासीना मध्यान्दिनप्रस्तावे ललाटन्तपे तपने पथि

---

१ C आक्रान्तमण्डलेन २ वररुचिना राज्ञः स्तुतिः कृतेयम्। साहसाङ्क इति विक्रमस्यापरं नाम ३ A D G साहसाङ्कः

संचरन्तमुपाध्यायमालोक्य वातायनच्छायासु वि-
श्रान्तं तमुवाच। परिपाकपेशलानि सहकारफलानि
दर्शयन्ती तं तल्लोलुभमवबुध्यामूनि फलानि शीत-
लान्युष्णानि वा तुभ्यं रोचत इति तद्वचनचातुरी-
तत्त्वमनवबुध्य तान्युष्णान्येवाभिलषामीति तेनोक्ते
तदुपढौकितवस्त्राञ्चले तिर्यग्तानि मुमोच। भूतल-
पाताद्रजोवगुण्ठितानि करतलाभ्यामादाय स्वमुख-
मारुतेन तद्रजोपनयन् राजकन्यया सोपहासमभि-
दधे। किमत्युष्णान्यमूनि वदनवातेन शिशिरीकुरु-
षे इति तस्याः सोपहासवचसा सामर्षः स द्विजः
प्राह। रे विदग्धमानिनि गुरुवितर्कपराया भवत्याः
पशुपाल एव पतिरस्तु। इति तच्छापं श्रुत्वा त-
योक्तं। यस्तव त्रैविद्यस्याप्याधिकोविद्यतया[1] परमगुरु-
स्तमेव विवाहयिष्यामि सेति प्रतिज्ञातवती। अथ
श्रीविक्रमे तदुचितप्रवरवरचिन्तासमुद्रमग्ने स पण्डि-
तः कदाचिदभिलषितवरनिवेदनोत्सुकीकृतराजशा-
सनादरण्यानीमवगाहमानोतितृष्णातरलितः[2] सर्व-
तः सर्वतो मूर्खाभावात्पशुपालमेकमालोक्य जलं
याचितवान्। तेनापि जलाभावाद्दुग्धं पिबेत्युक्त्वा

---

१ A अधिकविद्यया २ B अतितृषा तरलितः

करवडीं विधेहीत्यभिहिते सर्वेष्वभिधानेष्वभिधान-मिद[1]मश्रुतमाकर्ण्य चिन्ताचान्तस्वान्तः स्वहस्तं त-न्मस्तके दत्वा माहिष्यास्तले निवेश्य करवडीसंज्ञां क-रतलयुगलयोजनां कारयित्वाकन्ठं पयः पायितः। स तं मस्तके हस्तदानात्करवडीविशेषशब्दज्ञापना-च्च गुरुप्रायं मन्यमानस्तस्याः[2] समुचितपतिमवगम्य महिषीपरिहारात्तं निजं सौधमानीय षण्मासीं याव-त्तद्वपुःपरिकर्मपूर्वं[3] ॐ नमः शिवायेत्याशिर्वादाध्या-पनं कारितः। षड्भिर्मासैस्तस्य तान्यक्षराणि कण्ठपीठ-स्थितान्यवगम्य शुभे मुहूर्त्ते कृतशृङ्गारः स पण्डितेन नृपसभां नीतो नृपं प्रति सदभ्यस्तमाशिर्वादं स-भाक्षोभवशादुशरटेत्यक्षरैर्जगौ । विसंस्थूलवचसा विस्मितस्य नृपतेरसतीं[4] तच्चातुरीमारोपयितुका-मः पण्डितः[5] प्राह ॥

उमया सहितो रुद्रः शंकरः शूलपाणिभृत् ।
रक्षतु त्वां महीपाल टंकारबलगर्वितः ॥ १ ॥

इति विदितेन श्लोकेन तत्पाण्डित्यगम्भीरतां व-चनविस्तरेण व्याख्यातवान् । तत्प्रत्ययप्रीतेन नृ-

---

१ A अभिधानेष्विदं २ C गुरुप्रायं तस्याः ३ A D परिकर्मणा पूर्वं ४ B नृपतेर्नासि तच्चातुरीं । ५ A C पण्डितः । उमया

पतिना हि महिषीपालः स्वां पुत्रीं परिणायितः पण्डितोपदिष्टं सर्वथा मौनमेवालम्बमानो राजकन्यकया तद्वैदग्ध्यजिज्ञासया नवलिखितपुस्तकस्य शोधनायोपरुद्धः। करतले पुस्तकं विन्यस्य तदक्षराणि बिन्दुमात्रारहितानि नखच्छेदिन्या[1] केवलान्येव कुर्वन् राजपुत्र्या महिषीपाल एव निर्णीतः। ततः प्रभृति जामातृशुद्धिरिति सर्वतः प्रसिद्धिरभूत्। कदाचिच्चित्रभित्तौ महिषीनिवहे दर्शिते सति प्रमोदात्स्वप्रतिष्ठां विस्मृत्य तदाह्वानोचितानि विकृतिवचनान्युच्चरन्महिषीपाल इति निश्चिक्ये। स तां तदवज्ञामाकलय्य कालिकां देवीं विद्वत्ताकृते आरराध। पुत्रीवैधव्यभीतेन राज्ञा निशि छद्मना दासीं प्रहित्य तवाहं तुष्टास्मीत्यभिधाय यावत्स उत्थाप्यते तावद्विप्लवभीतकालिकैव देवी प्रत्यक्षीभूय तमनुजग्राह। तद्वृत्तान्तावबोधात्प्रमुदितया राजकन्यया तत्रागत्यास्ति कश्चिद्वाग्विशेष इत्यभिहिते स तदेव कालिदासनाम्ना प्रसिद्धः कुमारसंभवप्रभृतिमहाकाव्यत्रयषट्प्रबन्धान्[2] रचयामास। अ-

---

१ B रहितानि केवलानि A अक्षरच्छेदिन्या D लेखिन्या

२ A महाकाव्यत्रयं षट् प्रबन्धान् C महाकाव्यप्रबन्धान्

न्यदा[1] तन्नगरवास्तव्यो दान्ताभिधानश्रेष्ठी सभासंस्थितं विक्रमार्कमुपायनपाणिरुपागत्य प्रणामपूर्वकं विज्ञपयामास । स्वामिन्मया शुभे मुहूर्त्ते प्रधानवर्द्धकिभिर्द्धवलगृहं कारितं तत्र महतोत्सवेन प्रवेशः कृतः यावदहं तत्र निशीथे पल्यङ्कस्थितः सुप्तजाग्रदवस्थया तिष्ठामि तावत्पतामीत्याकस्मिकीं गिरं निशम्य भयभ्रान्तो मा पतेत्युदीरयंस्तदैव पलायनमकार्षं । तस्य धवलगृहस्य सम्बन्धिनैमित्तिकैः स्थपतिभिश्च यथावसरमहीनादिभिः सत्कारैर्वृथा दण्डित[2] इत्यर्थे देवः प्रमाणं। तमुदन्तं सम्यगवधार्य तदुक्तं तद्धवलगृहमूल्यं लक्षत्रयं तस्मै प्रदाय संध्यासर्वावसरानन्तरं तस्मिन्नात्मीयीकृते सौधे श्रीविक्रमः सुखं प्रसुप्तः । तामेव पतामीति गिरमाकर्ण्यासमसाहासिकतया सत्वरं पतेत्युदीरयन्समीपे पतितं सुवर्णपुरुषं प्राप। इत्थं पुरुषसिद्धिः ॥ अथास्मिन्नवसरे कश्चिद्दुर्विधपुरुषः करकृतलोहमयकुशतरदरिद्रपुत्रको द्वाःस्थनिवेदितो नृपं प्राह । स्वामिन्भवता नाथेन प्रथितायामवन्त्यां सर्वाण्य-

---

१ C अथान्यदा २ A यथावसरं महादानादिभिः सत्कारैश्च वृथाहं दण्डितः

पि वस्तूनि सत्वरमत्र विक्रयं यान्ति लभ्यन्ते चेति प्रसिद्धिं बुध्वा चतुरशीतिसंख्येषु चतुःपथेष्वहोरात्रं विक्रयाय दरिद्रपुत्रको भ्रामितोपि केनापि न गृहीतः। प्रत्युताहं निर्भर्त्सित इति नगर्या यथावस्थितं कलङ्कं महाराज्ञे विज्ञप्य यथागतं व्रजामीत्यापृच्छन्नस्मि। तदैव तं महान्तं कलङ्कपङ्कं पुर्याः पर्यालोच्य दीनारलक्षं तस्मै प्रदाय नृपस्तं लोहपुत्रकं कोशे निवेशयामास। तस्यामेव निशि प्रथमयामे सुखसुप्तस्य राज्ञः समीपे राज्याधिष्ठातृदैवतं द्वितीययामे हयाधिष्ठातृदैवतं तृतीययामे लक्ष्मीश्चाविर्भूय महाराज्ञा दारिद्र्यपुत्रके क्रीते नास्माकमिहावस्थातुमुचितमित्यापृच्छ्य राज्ञः साहसभङ्गो माभूदित्यनुज्ञातानि तानि जग्मुः। चतुर्थयामेत्र कश्चिदुदारपुरुषो दिव्यतेजोमयमूर्त्तिः प्रादुर्भूयाहं सत्त्वनामा भवन्तमाभवं श्रितो गन्तुमापृच्छे इत्युदिते करतलेन नृपः कृपाणिकामादाय यावदात्मघाताय व्यवस्पति तावत्तेनैव करे गृहीत्वा तुष्टोस्मीत्यभिधाय स्खलितः। गजाद्यधिष्ठातॄणि त्रीणि दैवतानि प्रत्यावृत्य नृपं प्रोचुः। गमनसंकेतव्याघातिना सत्वेन विप्रलब्धानां नृपं विहाय

नास्माकं गमनमुचितमिति तान्यप्ययत्नं तस्थुः। अथान्यस्मिन्नवसरे सभास्थितं श्रीविक्रमं सामुद्रिकशास्त्रवेदी कश्चिद्वैदेशिको द्वाःस्थनिवेदितः प्रविश्य नृपलक्षणानि निरीक्ष्यमाणः शिरोधूननपरो नृपेण स विषादकारणं पृष्ट ऊचे। यत्त्वां सर्वोपलक्षणनिधिमपि षण्णवतिदेशसाम्राज्यलक्ष्मीं भुञ्जानमवेक्ष्य सामुद्रिकशास्त्रे निर्वेदपरोऽभवं। तत्किमपि कर्बुरान्तं न पश्यामि यत्प्रभावेण त्वमपि राज्यं करोषि। तद्वाक्यानन्तरं कृपाणिकामादाय यावदुदरे निधत्ते तावत्तेन किमेतदिति पृष्टः श्रीविक्रमः प्राह। उदरं विदार्य तव तद्विधमन्त्रं दर्शयिष्यामीति वदन्द्वात्रिंशतोऽधिकमिदं सत्त्वलक्षणं तव नोवगतमिति पारितोषिकदानपूर्वकं नृपस्तं विससर्ज॥ अथ कस्मिंश्चिदवसरे परपुर[1]प्रवेशविद्यया निराकृताः सर्वा अपि विफलाः कला इति निशम्य तदधिगमाय श्रीपर्वते भैरवानन्दयोगिनः समीपे श्रीविक्रमस्तं चिरमारराधे[2]। तत्पूर्वसेवकेन केनापि द्विजातिना राज्ञोऽग्रे इति कथितं। यत्त्वया मां विहाय परपुरप्रवेशविद्या गुरोर्नादेया। इत्यु-

---

१ A B पुरप्रवेशविधया २ C E चिरमाराध्य तत्

परुद्धो नृपो विद्यादानोद्यतं गुरुं विज्ञपयामास । यस्प्रथममस्मै द्विजाय विद्यां देहि पश्चान्मह्यं हे राजन्नयं विद्यायाः सर्वथाऽनर्ह इति गुरुणोदिते भूयोभूयस्तव पश्चात्तापो भविष्यतीत्युपदिश्य नृपोपरोधात्तेन विप्राय विद्या प्रदत्ता। ततः प्रत्यावृत्तौ द्वावप्युज्जयिनीं प्राप्य पट्टहस्तिविपत्तिविषण्णं राजलोकमालोक्य परपुरप्रवेशविद्यानुभवनिमित्तं च राजा निजगजशरीरे आत्मानं न्यवेशयत् ॥

तद्यथा ॥

भूपः प्राहरिके द्विजे निजगजस्याङ्केऽविशद्विद्यया
विप्रो भूपवपुर्विवेश नृपतिः क्रीडाशुकोऽभूत्ततः ।
पल्लीगात्रनिवेशितात्मनि नृपे व्यामृश्य देव्या मृतिं
विप्रः कीरमजीवयन्निजतनुं श्रीक्रमो लब्धवान् १॥

॥ इत्थं किक्रमार्कस्य परपुरप्रवेशविद्या सिद्धा ॥

अथास्मिन्नवसरे श्रीविक्रमो राजपाटिकायां व्रजंस्तन्नगरनिवासिना श्रीसङ्घेनानुगम्यमानं बन्दिपुत्रैः श्रीसर्वज्ञपुत्र इति स्तूयमानं श्रीसिद्धसेनाचार्यमागच्छन्तमवलोक्य सर्वज्ञपुत्र इति वचसा कुपितः। तत्सर्वज्ञतापरीक्षार्थं तस्मै मानसं नमस्कारमकरोत् ॥

आप्ते दर्शनमागते दशशती संभाषिते चायुतं
यद्वाचा च हसेहमाशु भवता लक्षोस्य विश्राण्यताम्।
निष्काणां परितोषके मम सदा कोटीर्मदाज्ञा परा
कोशाधीश सदेति विक्रमनृपश्चक्रे वदान्यस्थितिम् १

सिद्धसेनोपि पूर्वगतबलेन नृपभावमवगम्य द-क्षिणपाणिमुदस्य धर्मलाभाशिषं ददौ। नृपतिनाशी-र्वादहेतुं पृष्टः सन्महर्षिस्तव मानसनमस्कारस्याशि-र्वादः प्रदीयमानोस्तीत्यभिहिते तज्ज्ञानचमत्कृतेन राज्ञा तत्पारितोषिके सुवर्णकोटिर्व्यतीर्यत ॥ अ-थान्यस्मिन्नवसरे राज्ञा कोशाध्यक्षस्तस्मै दापितसुव-र्णवृत्तान्तं पृष्टः प्राह। यद्धर्मवाहिकायां श्लोकबन्धे-न मया सुवर्णदानं निहितं ॥

तथाहि ॥

धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये ॥
सूरये सिद्धसेनाय ददौ कोटिं नराधिपः ॥ १ ॥

ततः श्रीसिद्धसेनसूरीन्सभायामाकार्य तत्सुवर्णं गृह्यतामिति प्रोक्ते वृथा तृप्तस्य भोजनमित्युक्त्वा-रपुरःसरमनेन सुवर्णेन ऋणग्रस्तामवनीमनृणीं कुरु। इत्युपदिष्टे तत्सन्तोषपरितुष्टेन राज्ञा तद-ङ्गीकृतं ॥

दिदृक्षुर्भिक्षुरायातस्तिष्ठति द्वारि वारितः ।
हस्तन्यस्तचतुःश्लोको यद्वागच्छतु गच्छतु ॥ १ ॥
दीयतां दशलक्षाणि शासनानि चतुर्दश ।
हस्तन्यस्तचतुःश्लोको यद्वागच्छतु गच्छतु ॥ २ ॥
सर्वदा सर्वदोसीति मिथ्या संस्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठिं न वक्षः परयोषितः ॥ ३ ॥
सरस्वती स्थिता वक्रे लक्ष्मीः करसरोरुहे ।
कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥४॥
अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥५॥
आहते तव निःस्वाने स्फुटितं रिपुहृद्घटैः ।
गलिते तत्प्रियानेत्रे राजंश्चित्रमिदं महत् ॥ ६ ॥
वक्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्य-
भीक्ष्णं
स्वच्छेन्तर्मानसेऽस्मिन्कथमवनिपते तेम्बुपानाभि-
लाषः ॥ ७ ॥

अष्टौ०[1] ॥ २ ॥

---

१ अयमग्रे संपूर्णोस्ति

उरुयन्तरवाहलयीथणपव्वयरोमरायवणगहणे[१] ।
सुरनरगणगन्धव्वा नग्गवीआ मयणचोरेण ॥३॥*

तस्यामेव निशि नृपो वीरचर्यायां पुरि भ्रमन् भूयो भूयस्तैलिक मुखेन पठयमानमिदमश्रौषीत्।

१ ऊर्वोःसक्थ्योरन्तरे वाजही लघुश्रोतः स्त्रीपक्षे पर्वतपक्षे तु महान्तो जलस्य प्रवाहाः स्तनपर्वतरोमराजिवनगहने सुरनरगण-गन्धर्वा नग्नीकृता मदनचौरेण

* महावीरमोक्षात् १७० वर्षेषु गतेषु भद्रबाहुः स्वर्गं गत-स्तच्छिष्यस्य स्थूलभद्रस्य सर्वायुः ९९ वीरात् २१५ वर्षेषु मृतस्त त्पट्टे आर्यमहागिरिः सर्वायुर्वर्षाणि ८५ एवं श्रीवीरात् ३०५ वर्षे सम्प्रती राजा स्थूलिभद्रस्यार्यमहागिरिः १ आर्यसुहस्ती २ शिष्यौ सुहस्तिसमीपे कश्चिद्रङ्कः भिक्षार्थे मुण्डितोऽभिभक्षणेन मृतः स चो-ज्जयिन्यां श्रेणिकराज्यपट्टे कोणिकः यस्यापरं नामाशोकचन्द्र-स्तत्पट्टे उदायी स षष्ठवार्षिकः पौषधस्थस्तं उलेन हत्वा नन्दो राजा ततो नापितगणिकापुत्रं नवमनन्दं चाणाक्यो हत्वा मौर्यवंश्यं चन्द्रगुप्तं राज्येऽस्थापयत । ततो बिन्दुसारस्तत्प ट्टेऽशोकश्रीस्तत्पुत्रः कुणालस्तत्पुत्रो राजा सम्प्रतिनामा स रङ्कजीवो जातः वीरात् ३०५ वर्षे प्राप्तराज्यः । सुहस्तिना प्रतिबोधितः। स आर्यसुहस्ती शतवर्षं सर्वायुः प्रतिपाल्य वीरात् २९१ वर्षे स्वर्गतः। अवन्तीसुकुमालोऽपि सुहस्तिनैव प्रबोधितः पूर्वं तत्सु-तेनैव कुडंगेश्वरः शिवः पितुर्मरणस्थाने स्थापितस्तस्यैव महाकाल इति नामान्तरं । सुहस्तिसूरेर्वाशिष्टगोत्रस्य द्वादशशिष्यान्तर्गत शिष्यौ सुस्थितसुप्रतिबुद्धनामानौ व्याघ्रापत्यगोत्रौ कोटिककाक-

अम्माणिओ सन्देसडओ तारय कन्ह कहिज्ज[1] ।

प्रभातशेषां रजनीमवधीकृत्य तदुत्तरार्द्धम-शृण्वन्निर्विण्णो नृपः सौधं प्राप्य निद्रामकरोत् । प्र-त्यूषकालेऽवसरकृत्यानन्तरं नृपेण तत्राहूतस्तौलिक-स्तदुत्तरार्द्धं पृष्टः ।

जग दालिद्दिहि डुब्बिउं[2] बलिबन्ध ण ह मुइज्ज ॥*

श्रीसिद्धसेनोपदेशं पुनरुक्तं निर्णीय पृथिवीमनृणां कर्त्तुमारेभे ॥

---

न्द्रिकाविरुद्धौ तत्र सुस्थिताचार्यशिष्यौ क्षुल्लकौ सन्तावदृश्यविद्यया च-न्द्रगुप्तनृपतिना समं बुभुजाते पाटलीपुत्रनगरे । तदुत्पत्तिस्तु यथा ॥

प्रतिदिशं विलोक्यन्ते विहाराश्चारुसौगताः ।
यत्रारुह्यैव निर्वाणं प्रापुस्तेपि महर्षयः ॥ १ ॥
उपत्यकायामस्याद्रेर्भाति ( वैभारगिरेः ) राजगृहं पुरम् ।
क्षितिप्रतिष्ठचम्पकपुरर्षभपुराभिधम् ॥ २ ॥
कुशाग्रपुरसंज्ञं च क्रमाद्राजगृहाह्वयम् ।
सहस्राः किल षट्त्रिंशद्यत्रासन्वणिजां गृहाः ॥ ३ ॥
तत्र चाढ्याः सौगतानां मध्ये चाश्मसंज्ञिनाम् ।

---

१ अस्माकं सन्देशकं तारकं कृष्णं कथय कथयेः !

२ A (? दालिद्दिहि दुत्थिउ ]) दालिद्दिहिं दुब्बिउं * जगद्दा-रिद्र्येण ब्रुडितं बलिबन्धो न च मोचितः ॥ तारयति दारिद्र्य-दुःखसमुद्रादिति तारकः कथं । कर्षति दुःखमिति कृष्णः कथं त्वं कथयसे इति भावः । !

अथ मत्सदृशः कोपि जैनो नृपतिर्भावीति पृष्टे श्रीसिद्धसेनसूरिभिरभिदधे ॥

पुन्ने[1] वाससहस्से सयम्मि वरिसाण नवनवइअहिए।
होही कुमरनरिन्दो तुह विक्कमराय सारित्थो* ॥१॥

अथान्यस्मिन्नवसरे जगदनृणीक्रियमाणे निजौदार्यगुणेनाहंकृतिं दधानः प्रातः कीर्तिस्तम्भं कारयिष्यामीति चिन्तयंस्तस्मिन्नेव निशीथे वीरचर्यया चतुःपथान्तः परिभ्रमन् युद्ध्यमानवृषाभ्यां

---

यत्र श्रीमान् जरासन्धः श्रेणिकः कोणिकोभयः ॥ ४ ॥
मेघहल्लविहल्लश्रीनन्दिषेणादयोभवन् ॥

श्रेणिकसुनोऽशोकचन्द्रः कूणिकापराख्यः पितुः शोकाद्राजगृहं विहाय कौशाम्ब्याः परिसरे नवीनां चम्पां राजधानीमकरोत् । अत्रैव शय्यम्भवसूरिर्मनकशिष्यार्थं दशवैकालिकं महावीरात् ९८ वर्षे कृतवान् । नवीनचम्पायां श्रेणिकपुत्रे कोणिके मृते तत्पुत्र उदायी राजा जातः सोपि पितुः शोकेन नूतनस्थानगवेषणार्थं सेवकान्प्रेषयामास ते गङ्गातटं ययुः । तत्रानमितच्छायं पाटलीतरुं प्रेक्ष्य तत्कारणं पृष्टः कोपि महामुनिरवदत् । अन्निकापुत्रो जयसिंहाचार्यपार्श्वे दीक्षां गृहीत्वाऽन्निकापुत्राचार्यनाम्ना विहरन्गङ्गातटस्थं पुष्पभद्रपुरं प्राप । तत्र पुष्पकेतुर्नृपः पुष्पवती राज्ञी तयोः पुत्रः पुष्पचूलः पुत्री पुष्पचूला तयोर्गाढानुरागात्परस्परं विरहो मातृ-

---

१ B पुण्णो * पूर्णे वर्षसहस्रे शते वर्षाणां नवनवत्यधिके भविष्यति कुमारपालनरेन्द्रस्तव हे विक्रमराजन् सदृशः ॥

त्रासितः कस्यापि दारिद्र्योपद्रुताद्द्विजन्मनो जीर्णवृष-भकुटीस्तम्भमध्यारूढो यावत्तिष्ठति तावत्तावेव वृ-षौ शृङ्गाग्रेण तं स्तम्भं भूयो भूयस्ताडयतः । अ-त्रान्तरे स विप्रोकस्मान्निद्राभङ्गमासाद्याकाशे शुक्र-गुरुभ्यां निरुद्धं चन्द्रमण्डलमवलोक्य गृहिणीमुत्था-प्य चन्द्रमण्डलसूचितं तन्नृपतेः प्राणसङ्कटमवगम्य होतव्यद्रव्याणि तदुपशान्तये होमार्थमुपढौकयेति सावधानं नृपे शृण्वति स गृहिण्यांचे । अयं नृपः पृथिवीमनृणां कुर्वन्मम कन्याचतुष्कस्य विवाहाय

---

द्विति राज्ञा भ्रातृभगिन्योः परस्परं विवाहः कृतस्ततो वैराग्येण राज्ञ्यान्निकापुत्राचार्यपार्श्वे दीक्षा गृहीता कालेन केवलिनी जाता । तन्मरणानन्तरं तस्याः करोटिका गङ्गायां वहमाना दैवाद्बहिर्निगता क्वचित्स्थाने । तत्र कालेन पाटलीतरुर्निस्सृतः सेवकैर्योग्यं स्थानं बालराज्ञे निवेदितं । तेन राज्ञा पाटलिपुत्रनामकं तत्र नगरं निवेशितं । ततो नन्दराजा तदा शकटालमन्त्रिपुत्रः स्थूलिभद्रः । राज्ञः पण्डि-तो वररुचिः । आर्यमहागिरिः आर्यसुहस्ती द्वौ भ्रातरौ स्थूलि-भद्रस्य शिष्यौ तत्राद्यो जिनकल्पिकोऽन्यः सूरिपदे । तदुक्तं ।

* वन्दे अज्जसुहत्थिं मुणिपवरं जेण सम्पई राया ।
सिद्धिं सव्वपासिद्धिं चारित्तं पाविओ पवरं ॥ १ ॥
[ * वन्दे आर्यसुहस्तिसूरिं मुनिप्रवरं येन सम्प्रती राजा
ऋद्धिं सर्वप्रसिद्धिं चारित्रं प्रापितः प्रवरम् ॥ १ ॥]

सुहस्तिशिष्येष्वेकः साधुर्वृद्धत्वेऽकाले नलिनीगुल्मं पठति यदा तदा राज्ञोक्तं 'किं सुखालं पुष्कलमिदमस्ति । ततस्तदुपमानात्तेन वाग्दे

द्रव्यमयच्छत्रशान्तिकर्मणा कथं व्यसनान्माचयितु-
मुचित इति तद्वचसा सर्वथा परिहृतगर्वस्तत्सङ्क-
टाच्छुटितः कीर्त्तिस्तम्भं विस्मरन् राज्यं चिरं चकार॥

कट्ठं काउं मुक्कं च साहसं मइलिअं च अप्पाणं ।
अजरामरं न पत्तं हा विक्कम हारिओ जम्मो[1] ॥१॥

कदाचिदायुःप्रान्ते केनाप्यायुर्वेदविदा श्री-
विक्रमस्य वपुरपाटवे वायसपिशिताहारेण रोगशा-
न्तिर्भवतीत्युपदिष्टे नृपेण तास्मिन्याके कार्यमाणे
प्रकृतिव्यत्ययं विमृश्य नृप इति ज्ञापितः । साम्प्र-

---

वीमाराध्य सकला विद्याः संप्राप्य चतुःपथे मुशलं मण्डयित्वा
फुल्लितं च चमत्कृताः सर्वे । नृपः काव्यमिदं पपाठ ।

मण्डोः शृङ्गं शक्रयष्टिप्रमाणं
शीतो वन्हिर्मारुतो निःप्रकम्पः ।
योयं ब्रूते सर्वथा तन्न किञ्चि-
द्वृद्धोवादी किं किमाहात्र वादी ॥ १ ॥

ततः प्रसिद्धेन वृद्धवादिसूरिणा जितः सिद्धसेनदिवाकरो विप्रः।
तत्संबन्धश्चायम् ।

श्वेताम्बराचार्येण चारणमुनिना वज्रसेनेन शक्रावतारतीर्थे ना-
भेयः स्थापितस्तत्र पूर्वलाटदेशमण्डनभृगुकच्छपुरालङ्कारे शकुनि-

---

१ काउं । उपमानभूतमिति देशी० कष्टं मुक्तं साहसं च निस्तेज-
स्विनमात्मानं कृत्वा । अजरामरत्वं न प्राप्तं । हे विक्रम हा जन्म
हारितम् !

तं धर्मौषधमेव बलवत्। प्रकृतेर्विकृतिरुत्पातः। जीवितलोलुपतया लोकोत्तरां सत्वप्रकृतिमपहाय काकमांसमभिलषन्सर्वथा न जीवसीति वैद्येनाभिहितस्तं पारितोषिकदानपूर्वं परमार्थबान्धवमिति श्लाघमानो गजतुरगकोशादिसर्वस्वमार्थिभ्यो वितीर्य राजलोकं नगरलोकमापृच्छय विजने क्वापि धवलगृहप्रदेशे तत्कालोचितम्लानदानदेवार्चनपूर्वं दर्भस्रस्तराधिरूढो ब्रह्मद्वारेण प्राणोत्क्रान्तिं करिष्यामीति विमृशन्नकस्मादाविर्भूतमप्सरोगणं स ददर्श।

---

काविहारे स्थिताः श्रीवृद्धवादिसूरयः। तत्र येन जीयते तस्याहं शिष्यो भविष्यामीति कृतप्रतिज्ञं महाविद्याहंकारिणं दक्षिणपथायातं कर्णाटभट्टं दिवाकरनामानं युक्त्या वादे निर्जित्य शिष्यं चक्रुः। तेनैकदा सकलं जैनसिद्धान्तं संस्कृते करोमीति पृष्टो गुरुराह। त्वया तीर्थंकरवचनाशातना कृता। ततस्तत्पापप्रायश्चित्तग्रहणाग्रहे द्वादशवर्षकृतयात्रान्ते कश्चिन्महानृपो बोधितव्य इति गुरुवाक्यमङ्गीकृत्य द्वादशवर्षान्ते विक्रमराजप्रतिबोधार्थमुज्जयिन्यां कालाभिरुद्रकुडङ्गेश्वरदेवालये शिवसन्मुखं पादौ धृत्वा तेन सुप्तं। सेवकैस्ताडितस्तत्ताडनमन्तःपुरे राज्ञीषु जातं। ततो महति कोलाहले तच्छ्रुतवृत्तान्तेन चमत्कृतेन विक्रमेण सविनयं पृष्टो मुनिराह। यदि मया नमस्कारः क्रियते तदैतल्लिङ्गं द्विधा भविष्यति। ततो राजाज्ञया नमस्कारस्तुतिः समारब्धा द्वात्रिंशद्द्वात्रिंशकाद्यकाव्ये पठिते तल्लिङ्गं द्विधाभूत्। प्रथमं धूमस्ततस्तेजस्ततो नाभिसूनुर्निरगात्। विक्रमः

अञ्जलिं बध्वा प्रणामपूर्वं का यूयमिति पृष्टे । न वाग्विस्तरार्होऽयमवसरः। आपृच्छनायैव वयमुपागता इत्यभिधायाप्सरसोऽपसरन्त्यो नृपेण भूयोऽभिदधिरे । नवीनब्रह्मणा निर्मितानां भवतीनामद्वैतरूपवतीनामेव रूपं नासया हीनमिति जिज्ञासुरस्मि । अथ ताः सहस्ततालं विहस्य निजमपराधमस्मासु संभावयसीति ता मौनमाश्रिता नृपेणोचिरे । स्वर्गलोकस्थितासु भवतीषु ममापराधः कथं संभाव्यत इति नृपवचःप्रान्ते तासु मुख्यया सुमुख्ययाचचक्षे । राजन्प्राग्पुण्योदयेन साम्प्रतं नवा-

---

सपरिवारः शिवोऽस्तु ॥ तदुक्तम् ॥

कल्पोद्दरागाभिनिक्रमेन-

दिवाकराचार्यकृतप्रतिष्ठः ।

श्रीमान्कुडङ्गेश्वरनामसूनु-

र्देवः शिवायास्तु जिनेश्वरो वः ॥ १ ॥

ग्रामाणां लेखं । शासनपट्टिकां । श्रीमदुज्जयिन्यां संवत् १ चैत्रसुदि १ गुरौ माढदेशीयमहाक्षपटालिकपरमार्हतश्वेताम्बरोपासकब्राह्मणगौतमसुतकात्यायनेन राज्ञा लेखयत् । ततु अयोऽनार मनृणां पृथ्वीं सूरिवचसा कृत्वा निजं संवत्सरं प्रावर्त्तयत् । पूर्वं पार्श्वनाथसंवत्सरानन्तरं वर्द्धमानसंवत्सरोऽभूत्तद्देशे । श्वेताम्बरमते महावीरात् ४७० वर्षे विक्रमो राजा । दिगम्बरमते तु

पि निधयस्तव सौधेऽवतेरुस्तदधिष्ठात्र्यो वयं। भवता देवतारूपेणाजन्मावधि महादानानि ददतैकस्यैव निधेरेतावदेव व्यवकलितं यावत्त्वं नासाग्रं न पश्यसि । इत्थं तदुक्तिमाकर्ण्य ललाटं करतलेन स्पृशन् यद्यहं नवनिधीन्वेद्मि तदा नवभ्यः पुरुषेभ्यस्तान्समर्पयामीति दैवेनाज्ञानभावाद्वञ्चित इत्युच्चरंस्ताभिः कलौ भवानेवोदार इति प्रतिबोधितः परलोकमाप । ततः प्रभृति तस्य विक्रमादित्यस्य जगत्ययमधुनापि संवत्सरः प्रवर्त्तते । श्रीविक्रमार्कस्य दाने विविधाः प्रबन्धाः ॥

---

§ वरिसाणि सयचउक्कनिगमी गदा य जिणन्दवीरस्स ।
णिव्वाणं सम्पत्ते उप्पण्णो विक्कमो राजे ॥ १ ॥

[ § निर्वाणं प्राप्तस्य जिनेन्द्रवीरस्य चतुःशीत्यधिकषट्शतानि वर्षाणि गतानि तदा विक्रम उत्पन्नो राजा ॥ १ ॥

तथाच कदाचित्कारणवशाल्लब्ध्वा सैन्यादिकं वर्णेन राज्ञा दत्तं सिद्धसेनविरुदं प्राप्य सिद्धसेनदिवाकर इति नाम्ना प्रसिद्धोऽभूत् ।

* पञ्चेव य वरिससये सिद्धसेणो य जयपयडो ॥

[ * महावीरात्पञ्चशते एव वर्षशते जयप्रकटः सिद्धसेनोऽभूत् । बप्पभट्टसूरिगुरुः सिद्धसेनोऽन्यः स तु विक्रमस्य सप्तमशते संवत्सरेऽभूत् । नेमिचन्द्रसूरिकृतप्रवचनसारोद्धारस्य टीकाकर्त्ता सिद्धसेनोऽप्यन्यः स तु विक्रमस्य द्वादशशते संवत्सरेऽभूत् ॥

## ॥ अथ शालिवाहनप्रबन्धः ॥

अथ दाने विद्वत्तायां च श्रीसातवाहनकथा* यथाश्रुता ज्ञेया । तत्पूर्वभवकथा चैवं । श्रीप्रतिष्ठानपुरे शातवाहनभूपो राजपाटिकायां गच्छन्नगरप्रत्यासन्ननद्यां वीचिभिर्नीरतीरक्षिप्तं मत्स्यमेकं हसन्तमालोक्य प्रकृतेर्विकृतिरुत्पात इति भयभ्रान्तो नृपः सर्वानेव विदग्धपुरुषान्सन्देहममुं पृच्छञ्ज्ञानसागरनामानं जैनमुनिं पप्रच्छ । ज्ञानातिशयेन तेन तत्पूर्वभवं विज्ञायेत्युपादिष्टं । यत्पुरातनभवे त्वमस्मिन्नेव पत्तने उच्छिन्नवंशः काष्ठभारवाहनैकवृत्तिस्तस्यामेव नद्यां भोजनावसरे संनिहितशिलातले सक्तून्पयसालोड्य नित्यमश्नासि । कस्मिन्नप्यहनि जैनमुनिं मासोपवासपारणाहेतोः पुरो व्रजन्तमाहूय तं सक्तुपिण्डं तस्मै प्रादात् । तस्य पात्रदानस्यातिशयात्त्वं शालवाहननृपतिरासीः। स मुनिर्देवो जातस्तद्देवताधिष्ठानवशात्तं का-

---

* शालिवाहन, शालवाहन, सालवाहण, सालवाहन, सालाहण सातवाहन, हालेत्येकस्य नामानि ॥ तत्कथालेशो यथा ॥

दक्षिणखण्डे महाराष्ट्रे प्रतिष्ठानं नाम पुरं । तत्र कदा द्वौ प्रदेशिनावेकाकिब्रह्मचारिणी भगिनी नैकुत्रापि गन्तुकामाः कुम्भकारशा-

ष्टभारवाहिनो जीवं त्वां नृपतितयोपलक्ष्य प्रमोदा-
द्धसितवान् ॥

तत्कथासंग्रहश्चैवं ॥

मीनानने प्रहसिते भयभीतमाह
श्रीशातवाहनमृषिर्भवतात्र नद्याम् ।
यत्सक्तुभिर्मुनिरकार्यत पारणं प्राक्
दैवाद्भवन्तमुपलक्ष्य झषो जहास ॥ १ ॥

स श्रीशातवाहनः पूर्वभववृत्तान्तं जातिस्मृत्या साक्षात्कृत्य ततः प्रभृति दानधर्ममाराधयन् सर्वे-

---

स्थायां निवासं चक्रुः । सुरूपा जलाहरणार्थं गोदावर्यां नागह्रदे गता । तद्रूपमोहितो नागपुरुषो बलात्तां बुभुजे । साऽपि दुःखे स्मरणीयोहं तव दुःखं निर्मूलमुन्मूलयिष्यामीति कृतप्रतिज्ञो नागपुरुषो गतः । तस्या गर्भस्वरूपं ज्ञात्वा तौ भ्रातरौ तां निर्भर्त्स्य कुम्भकारशालायां तां त्यक्त्वा देशान्तरे निर्गतौ । सापि कुम्भकारगृहे सेवां कुर्वती काले पुत्रं सुषुवे । देवानुभावात्स बालो महातेजस्वी प्रतापी जातः । मृन्मयानि हस्त्यश्वरथपुरुषादिक्रीडनकानि बहूनि चकार । स बालः सातवाहननामासीत् । इतश्च ॥

रयणसीहरायाउ भोपल्लनामिआ धूआ तीए नागज्जुणो नाम जाओ । सो सिद्धपुरिसुत्ति विक्खाओ पुहविं विअरन्तो सालाहणरन्नो कलागुरू जाओ । सो पायलित्तायरिए हि सेवइ । कयावि गुरुमुहाओ सुणइ । जहा हि सिरिपासनाहबिम्बं रससाहणत्थे । तओ कन्तिपुराओ नाऊण नागज्जुणो सिद्धरसा सेढीनईतडे ठाविसु ।

षां महाकवीनां विदुषां च संग्रहपरः। चतसृभिः स्वर्णकोटीभिर्गाथाचतुष्टयं क्रीत्वा सप्तशतीगाथाप्रमाणं शालिवाहनाभिधानं संग्रहगाथाकोशं शास्त्रं निर्माप्य नानावदातनिधिः सुचिरं राज्यं चकार। तद्गाथाचतुष्टयमेतद्यथा ॥

हारो वेणीदण्डो खट्टुग्गलियाइ तह य तालुत्ति।
एयाइ नवरि सालाहणेण दहकोडिगहियाइ ॥१॥*

---

तत्थ सिरिसालिवाहणरन्नो चन्दलेहाभिहाणसई दोण्हं निअपुत्ताणं ताए निवेइयं। ते रसलुद्धा निअं रज्जं मुत्तुं नागज्जुणपासमागया। तओ रससिद्धिं नाऊण तेणेव सत्थेण नागज्जुणो निहओ। तत्थ थम्भणं नाम नयरं।

[ रत्नसिंहराज्ञो भोपलनाम्नी सुता तस्या नागार्जुनो नाम पुत्रः। स सिद्धपुरुष इति विख्यातः पृथिवीं विचरन् सातवाहनराज्ञः कलागुरुर्जातः। स पादलिप्ताचार्यं निषेवते। कदापि गुरुमुखात् श्रुतं। यथा हि पार्श्वनाथबिम्बं रससाधनार्थं। ततो नागार्जुनो तदभिप्रायं ज्ञात्वा कान्तिपुरात्कपटेनसेडीनदीतटे समानीय तद्बिम्बं स्थापयित्वा रससिद्धो जातः। तत्र श्रीशालिवाहनराज्ञश्चन्द्रलेखाभिधाना सती द्वयं निजपुत्रस्य तस्मै नागार्जुनाय द्वाभ्यां शिक्षार्थं निवेदितं। तौ रसलुब्धौ निजं राज्यं मुक्त्वा नागार्जुनपार्श्वे आयातौ। ततो रससिद्धिं ज्ञात्वा तेनैव शस्त्रेण ताभ्यां नागार्जुनो निहतः।

---

* यत्र गाथायां हारवर्णनं वेणीदण्डवर्णनं। उत्कीर्णतुल्यत्ववर्णनं तथा च तालाहलौपम्यमन्योक्त्या। नवरं शालिवाहनेनैताश्चतस्रो गाथा दशकोटिभिर्गृहीताः ॥ १ ॥

मग्गं चिय अलहन्तो हारो पीणुन्नयाण थणयाण ।
उब्बिम्बो भमइ उरे जउणानइफेणपुञ्जु व्व ॥२॥
कसिणुज्जलो य रेहइ वेणीदण्डो नियम्बबिम्बम्मि ।
तह सुन्दरि सुरयमहानिहाणरक्खाभुयङ्गु व्व ॥३॥

---

तस्मिन्स्थाने स्तम्भनं नाम नगरं जातम् ॥

कालियकालकान्वयपालित्तगणाहरो वएसाउ ।
नागज्जुणजोगिन्दो आणेहि अप्पणे ठाणे ॥ १ ॥
[ कालिककालकाचार्यवंशजातपादलिप्तगणधरोपदेशा-
न्नागार्जुनयोगींद्र आनिनाय आत्मनः स्थाने । कान्तिपुरात्कपटवृत्त्या रत्नमयपार्श्वनाथबिम्बम् ]
॥ पादलिप्तोपि पाटलीपुत्रस्थमुरुण्डराजमस्तकपीडां मन्त्रशक्त्या निवार्य प्रतिष्ठानपुरं प्राप्तस्तद्यथा ॥
जह जह पएसिणिं जाणुअम्मि पालित्तउ भमाडेइ ।
तह तह से सिरवियणा पणस्सइ मुरुण्डरायस्स ॥ १ ॥

---

कोपि साभिलाषः कस्याश्चित्पीनोन्नतपयोधरायाः हारं वर्णयति ॥ मग्गं चियेति । मार्गमेवालभमानो हारः पीनोन्नतयोः स्तनयोरुद्विग्नो भ्रमत्युरसि यमुनानदीफेनपुञ्ज इव । अत्र यमुनाफे-नसादृश्येन स्तनमुखश्यामता व्यज्यते । तथा च सत्याधानेऽनुपभो-ग्यतेत्यादिस्वयमूहनीयम् ॥ २ ॥ !

कृष्णोज्ज्वलश्च राजते वेणीदण्डो नितम्बबिम्बे तदा हे सुन्दरि सुरतमहानिधानरक्षाभुजङ्ग इव ॥ ३ ॥ !

B C मग्गुं । पीणुण्णआण थणआण । उव्विग्गो । पुञ्जो व A उव्विम्भो ॥

परिओससुन्दराइं सुरए जायन्ति जाइ सुक्खाइं ।
विरहाओ ताइ पियसहि खट्टुग्गलियाइ कीरन्ति ४

[ यथा यथा प्रदेशिनीं जानौ पादलिप्तो भ्रामयति ।
तथा तथा तस्य शिरोवेदना प्रणश्यति मुरुण्डराजस्य ॥ १ ॥ ]
शालिवाहनपुरःसरा नृपा-
श्चित्रकारिचरिता इहाभवन्[1] ।
दैवतैर्बहुविधैरधिष्ठिते
चात्मसत्रसदनान्यनेकशः ॥ १ ॥
कपिलात्रेयबृहस्पतिपञ्चालाह[2] महीभृदुपरोधात्[3] ।
न्यस्तस्वचतुर्लक्षग्रन्थार्थं श्लोकमेकमप्रथमम् ॥ २ ॥
स चायम् ।
जीर्णे भोजनमात्रेयः कपिलः प्राणिनां दया ।
बृहस्पतिरविश्वासः पञ्चालः स्त्रीषु मार्दवम् ॥ ३ ॥
[ १ प्रतिष्ठानपुरे २ कामशास्त्रकर्त्ता बाभ्रव्यः ३ शालिवाहनराज्ञ आग्रहात् ] ते चत्वारोपि स्वस्वग्रन्थं राज्ञेऽदर्शयंस्तच्छ्रोतुमसमर्थं राजानं श्लोकैकपादेन स्वस्वसकलग्रन्थाभिप्रायं निवेदयामासुः

---

परितोषसुन्दराणि सुरते जायन्ते यानि सौख्यानि विरहान्तानि हे प्रियसखि खट्टुशब्दो जुक्तार्थवाची देशी० जुक्तोद्गीर्णानि सन्ति कीर्यन्ते कुर्वन्ति ॥ ४ ॥ !

B परितोससुन्दराइ G D सुरएसु लहन्ति जाइ सोक्खाइं ताइच्चिय उण विरहे B खण्डुग्गिआइ D खट्टुग्गिगालिहाइ

मा जाण कीर जह चञ्चुलालियं पडइ पक्कमाइन्दं।
जरढत्तणदुल्ललियं उव्भुयतालाहलं एयं ॥ ५ ॥
ताण पुरोयमरीढं कयलीथम्भाण सरिसपुरिसाण।
जे अत्तणो विणासं फलाइं दिन्ता न चिन्तन्ति ६
जह सरसे तह सुक्के वि पायवे धरइ अणुदिणं [illegible]झो।
उच्छंगवट्टियं निग्गुणंपि गरूया न छड्डन्ति ॥ ७ ॥

---

। इतश्चोज्जयिन्यां विक्रमादित्येन कश्चिद्दैवज्ञः पृष्टः मद्राज्यहन्ता कश्चित्समर्थो भूमौ तिष्ठति पुरुषः । तेनोक्तं । प्रतिष्ठानपुरे कुम्भकारगृहे तादृशो बालोस्ति । तच्छ्रुत्वा तं हन्तुं ससैन्यो विक्रमः प्रतिष्ठानपुरं प्राप्तः । सैवकैर्बलात्तन्मारणायोद्योगे कृते तया सुरूपया मात्रा नागपुरुषः स्मृतः । तेन प्रादुर्भूयामृतकुम्भो दत्तः महती शक्तिः कुमाराय दत्ता तेन कुमारेणामृतासिञ्चनेन मृन्मयं सर्वं सैन्यं

---

मा जानातु हे कीर यथा चञ्चुलालितं पतति पक्कमाकन्दं । पक्काम्रफलं ॥ कठिणत्वग्पिनद्धं उद्भूतं पाठान्तरे सरलं सुलभमित्यर्थः तालाहलं देशी० शालिक्षेत्रमेतत् । पिकस्य भोगयोग्यं सुरतक्षममितिभावः ॥ ५ ॥ !

तेषां कदलीस्तम्भैः सदृशपुरुषाणां पुरोयं ! अरीढमनवगणनं यतः कारणाद्ये आत्मनो विनाशफलानि ददन्तः सन्तो न चिन्तयन्ति। आत्मानं विनाश्यापि परोपकारफलप्रदाः सत्पुरुषाः सन्मानयोग्या एवेति भावः ॥ ६ ॥ !

यथा सरसे तथा शुष्केपि पादपे धरत्यनुदिनमनुरागं विन्ध्याचलः । उत्सङ्गवर्त्तिनं निर्गुणमपि गुरवो न त्यजन्ति ॥ ७ ॥

B पडेइ पक्क. A उज्जुयतालाहलं

पढमो नेहाहारो तेहिं तिसिएहिं तह कहवि गहिऊ।
पिच्छन्ति जं न अन्नं तच्चिय आजम्म मुज्झारा ८
सयलजणाणन्दयरो सुक्कस्स वि एस परिमलो जस्स।
तस्स नवसरसभावम्मि हुज्ज किं चन्दणदुमस्स ९

---

जीवितं तेन विक्रमसैन्यं नाशितं विक्रमोऽपि पलाय्य गतः। तदनुधावितस्ततो द्वयोः सन्धिर्जातः। तापीतीरपर्यन्तमुत्तरापथं साधयित्वा प्रतिष्ठानपुरे राज्यं चकार। स्वकीयं संवत्सरं प्रावीवृतत्।

तत्रैकस्य द्विजस्य सूनुः सदर्पः शूद्रकाख्यः बहुशिलामर्द्दनं तेन कृतं। तद्दृष्ट्वा राजा तं पुराध्यक्षमकरोत्। ततो गीतमोहितां देवीं मायासुरः कश्चिदहरत्। तदन्वेषणाय शूद्रकं प्राहिणोत्। सोऽपि सकौलेयकः कोल्लापुरस्थां महालक्ष्मीमाराध्य तमस्मरमारयत्। देव्या दत्तं खड्गमादाय मायासुरभ्रात्रा दर्शितां महिषीमादायागतः।

---

प्रथमः स्नेहाधारस्तैः पुरुषैस्तथा ताभिः स्त्रीभिः कथमपि केनापि कारणेन गृहीतः। यद्यस्मात्कारणादन्यं श्रेष्ठमप्यवलम्बनत्वेन न पश्यति स तामेव सा च तमेव सर्वगुणाधारत्वेन पश्यतो यत आजन्म परस्परानुरागोत्पत्तिं समारभ्य मुज्झारशब्दो देशी० गृहमध्यस्थोर्ध्वतिर्यग्बद्धदारुवाची तद्वत्तावपि स्तः ॥ ८ ॥

सकलजनानन्दकरः यस्य शुक्रस्यापि वीर्यस्य वा शुष्कस्य पुरुषस्य वा काणस्येत्यादिव्यञ्जना! एष परिमलः सुगन्धः संजोगश्च तस्य नवसरसभावे भवेत्किं चन्दनद्रुमस्य भवेन्नैव ॥ ९ ॥

A B C मुज्झारो B D गहीउ C तहवि कहवि

कयलितरू विञ्झगिरी नेहाहारो य चन्दणदुमो य ।
एयाओ नवरि सालाहणेण नवकोडिगहियाओ १०

॥ अथ शीलव्रते प्रबन्धः ॥

तद्यथा ॥

षट्त्रिंशद्ग्रामलक्षप्रमिते कन्यकुब्जे नगरे कल्याणकटके पानीयाधिकृतप्रियाभिलापव्यतिकराद्राजा भूदेवो मालवके श्रीरुद्रमहाकालमाराध्य मालवकं तस्मै देवाय दत्वा स्वयं तापसोभूदिति संक्षेपः ॥

॥ गुर्जरभुवि वढीयाराभिधानदेशे पञ्चाशरग्रामे चापोत्कटवंश्यं झोलिकासंस्थं बालकं वणनाम्नि वृक्षे निधाय तन्मातेन्धनमवचिनोति । प्रस्तावात्तत्रायातैर्जैनाचार्यैः श्रीशीलगुणसूरिनामभिरपराह्णेपि तस्य वृक्षस्य छायामनमन्तीमालोक्य झोलिकास्थितस्य तस्यैव बालकस्य पुण्यप्रभावोयमिति विमृश्य जिनशासनप्रभावकोयं भा-

---

तस्मै शूद्रकाय नृपेन राज्ञा राज्यार्द्धं दत्तं एवं नानाविधानि हालक्षितिपालस्य चारित्राणि । स्थानपितोनेन गोदावरीतीरे महालक्ष्मीप्रासादः । नरपतिनागह्रदे निधनं प्राप्तः ॥

---

कदलीतरुः । विन्ध्यगिरिः । मोहाभ[illegible]श्च चन्दनद्रुमश्च एताश्चतस्रो गाथा नवरं मालवाहनेन राज्ञा नवकोटिगृहीताः ॥१०॥ !

वीत्याशया वृत्तिदानपूर्वं तन्मातुः पार्श्वात्स बालो जगृहे । वीरमतीगणिन्या स बालः परिपाल्यमानो गुरुभिर्दत्तवनराजाभिधानोऽष्टवार्षिको देवपूजाविनाशकारिणां मूषकाणां रक्षाधिकारे नियुक्तः । स ताँल्लोष्टैर्निघ्नन् गुरुभिर्निषिद्धोपि चतुर्थोपायसाध्यां-स्तानेवं जगौ । तस्य जातके राजयोगमवधार्यायं महानृपतिर्भावीति निर्णीय स मातुः पुनः समर्पितो मात्रा समं कस्यामपि पल्लिभूमौ[२] स्वमातुलस्य चौरवृत्त्या वर्त्तमानस्य सर्वत्र धाटीप्रपातमकरोत् । काकरग्रामे खात्रपातनपूर्वं कस्यापि व्यवहारिणो गृहे धनं मुष्णन्दधिभाण्डे करे पतिते सत्यत्र भुक्तोहमिति विचिन्त्य तत्सर्वस्वं तत्रैव मुक्त्वा विनिर्ययौ । परस्मिन्नहनि तद्भागिन्या श्रीदेव्या निशि गुप्तवृत्त्या सहोदरवात्सल्यादाहूतः । तया भोजनवसुदानपूर्वकमुपकृतो मम पट्टाभिषेके भवत्यैव भगिन्या तिलकं विधेयमिति प्रतिपेदे ॥ अथान्यस्मिन्नवसरे चरटवृत्त्या वर्त्तमानस्य चौरैः क्वाप्यरण्यप्रदेशे रुद्धो जम्बाभिधानो वणिग्तं चौरत्रयं दृष्ट्वा बाणपञ्चकमध्याद्बाणद्वयं भञ्जंस्तैः पृष्ट[३] इति प्राह-

१ B G ताल्लोष्टेन २ A C पल्लीभूमौ B तेन पृष्टः

भवान्वितयाधिकं बाणद्वयं[1] विफलमित्युक्ते तदुक्तं बलवेध्यं[2] बाणेनाहत्य तैः परितुष्टैरात्मना सह नीतस्तद्योधविद्याचमत्कृतेन श्रीवनराजेन मम पट्टाभिषेके त्वं महामात्यो भावीत्यादिश्य विसृष्टः । अथ कन्यकुब्जादायातपञ्चकुलेन तादृशराज्ञः सुतायाः श्रीमहणिकाभिधानायाः[3] कञ्चुकसम्बन्धे पितृप्रदत्तगूर्जरदेशस्योद्ग्राहणकहेतवे[4] समागतेन सेलभृद्नराजाभिधानश्चक्रे । षण्मासीं यावद्देशमुद्ग्राह्य चतुर्विंशतिसंख्यान् । रूप्यकद्रम्मलक्षांस्तेजोजात्यांश्चतुःसहस्रसंख्यांस्तुरङ्गमान्गृहीत्वा पुनः स्वदेशं प्रति प्रस्थितं पञ्चकुलं सौराष्ट्राभिधानघाटे वनराजो निहत्य कस्मिन्नपि वननिकुञ्जे तद्राजभयाद्वर्षं यावद्गुप्तवृत्त्या तस्थौ ॥ अथ निजराज्याभिषेकाय नगरनिवेशचिकीः शूरां भूमिमवलोकमानः पीपलुलातडागपाल्यां सुखनिषण्णेन भीरूयाडसाखडसुतेनाणहिल्लनाम्ना पृष्टः । किमु विलोक्यते नगरनिवेशयोग्या शूरा भूमिरवलोक्यते इति तैः प्रधानैरभिहिते यदि तस्य नगरनिवेशस्य नाम मम

---

१ B जवेन् २ A चलवेध्यं ३ A B महणका. A ४ उद्ग्राहणिकं

वदत ततस्तां भुवमावेदयामीत्यभिधाय जालिवृक्षसमीपे गत्वा यावती भूः शशकेनोच्छासिता तावतीं भुवं दर्शयामास । तत्रोणहिल्लपुरनाम्ना नगरं निवेश्य संवत् ८०२ वर्षे वैशाखसुदि २ सोमे श्रीविक्रमार्कतस्तस्य जालितरोर्मूले धवलगृहं कारयित्वा राज्याभिषेकलग्ने काकरग्रामवास्तव्यां तां प्रतिपन्नभगिनीं श्रियादेवीमाहूय तया कृततिलकः श्रीवनराजो राज्याभिषेकं पञ्चाशद्वर्षदेश्यः कारयामास । सजम्बाभिधानो वणिक् महामात्यश्चक्रे । पञ्चासरग्रामतः श्रीशीलगुणसूरीन् सभक्तिकमानीय धवलगृहे निजसिंहासने निवेश्य कृतज्ञचूडामणितया सप्ताङ्गमपि राज्यं तेभ्यः समर्प्पयंस्तैर्निःस्पृहैर्भूयो निषिद्धः । प्रत्युपकारबुद्ध्या तदादेशाच्छ्रीपार्श्वनाथप्रतिमालंकृतं पञ्चासराभिधानं चैत्यं निजाराधकमूर्त्तिसमेतं च कारया-

---

१ A G नाम शशकेन श्वात्रासिता ; C शशकेनोच्छासिता: २ अट्ठसयेसु दुरुत्तरेसु विक्कमवासेसु अणहिल्लगोवालपरिरक्खियए एसो लक्खारट्ठाणे पट्टणं चउक्कडवंसमुत्ताहलेण वणरायराइणा निवेसिअं [ अष्टशतेषु विक्रमवर्षेषु द्विरुत्तरेषु अणहिल्लगोपालपरिरक्षित एतत् लक्षारस्थाने पट्टनं चापोत्कटवंशमुक्ताफलेन वनराजराज्ञा निवेशितम्

मास। तथा तेन धवलगृहकण्ठे कण्ठेश्वरीप्रासादश्च कारितः।

गूर्जराणामिदं राज्यं वनराजात्प्रभृत्यपि -
जैनैस्तु स्थापितं मन्त्रैस्तद्द्वेषी नैव नन्दति ॥ १ ॥

पूर्वं निरुद्धं वर्ष ५९ मास २ दिन २१ श्रीवनराजेन राज्यं कृतं। श्रीवनराजस्य सर्वायुर्वर्ष १०९ मास। २ दिन २१। संवत् ८६२ वर्षे आषाढसुदि ३ गुरौ अश्विन्यां सिंहलग्ने वहमाने वनराजसुतस्य श्रीयोगराजस्य राज्याभिषेकस्तस्य त्रयः कुमाराः। अन्यस्मिन्नवसरे क्षेमराजनाम्ना कुमारेण राजेति विज्ञपयांचक्रे। देशान्तरीयस्य राज्ञः प्रवहणानि वात्यावर्त्तेन विपर्यस्तानि। अन्यवेलाकूलेभ्यः श्रीसोमेश्वरपत्तने समागतानि। ततस्तेषु तेजस्वितुरंगमसहस्रं १०००तथा गजानां सार्द्धशती संख्यया-पर[1]वस्तूनि कोटिसंख्यया। एतावत्सर्वं निजदेशोपरि स्वदेशमध्ये भूत्वा संचरिष्यति। यदि स्वाम्यादिशति तदा तदानीयते इति विज्ञप्तेन राज्ञा तन्निषेधः कृतः। तदनन्तरं तैस्त्रिभिः कुमारै राज्ञो वयोवृद्धभावाद्वैकल्यमाकल्य तस्यामपि स्वदेश-

१ B सार्द्धशतसंख्यया A सिद्धघटीक्र० १८ अपर.

प्रान्तभूमौ सैन्यं सज्जीकृत्याज्ञातचौरवृत्या तत्सर्वमाच्छिद्य स्वपितुरुपानिन्ये। अन्तः कुपितेन मौनावलम्बिना राज्ञा न किमपि तेषां प्रतिपत्त्यादि कृतं। तत्सर्वं नृपतिसात्कृत्वा क्षेमराजकुमारेणैतत्कार्यं सुन्दरं कृतमसुन्दरं वेति विज्ञप्तो नृपतिर्बभाषे। यदि सुन्दरमुच्यते तदा परस्वलुण्टनपातकं यद्यसुन्दरमभिधीयते तदा भवदीयचेतसो विरक्तिः। अतो मौनमेव श्रेय इति सिद्धं। श्रूयतां भवदीयप्रथमप्रश्ने परवित्तापहृतौ निषेधहेतुः। यदा परमण्डलेषु नृपतयः सर्वेषामपि राज्ञां राज्यप्रशंसां कुर्वन्ति तदा गुर्जरदेशे चरटराज्यमित्युपहसन्ति। अस्मत्पुरुषैरित्यादिस्वरूपं विज्ञप्तिकया ज्ञाप्यमानाः किञ्चिन्निजपूर्वजवैमनस्यमावहन्तो दूयामहे। यद्ययं पूर्वजकलङ्कः सर्वलोकहृदये विस्मृतिमावहति तदा समस्तराजपङ्क्तिषु वयमपि राजशब्दं लभामहे। धनलवलोलुभैर्भवद्भिः स पूर्वजकलङ्क उत्सृज्य पुनर्नवीकृतः। तदनन्तरं राज्ञा शस्त्रागारान्निजं धनुरुपानीय यो भवत्सु बलवान् स इदमारोपयत्विति समादिष्टे सर्वाभिसारेण तन्नैकेनाप्यधिरोप्यत इति राज्ञा हेलयैवाधिज्यीकृत्याभिदधे ॥

आज्ञाभङ्गो नरेन्द्राणां वृत्तिच्छेदोनुजीविनाम् ।
पृथक्शय्या च नारीणामशस्त्रो वध उच्यते ॥ १ ॥

इति नीतिशास्त्रोपदेशादस्मास्वशस्त्रवधकारिषु पुत्रेषु को दण्ड उचितः । अतो राज्ञा प्रायोपवेशनपूर्वकं विंशत्यधिकवर्षशते पूर्णे चिताप्रवेशः कृतः। अनेन राज्ञा भट्टारिकाश्रीयोगीश्वरीप्रासाद्. कृतः । [!संव० ८७८ श्रावणसुदि ४ निरुद्धं वर्ष १७ मास १ दिन १ श्रीयोगराजेन राज्यं कृतं ॥ सं० ८७८! श्रावणसुदि ५ उत्तराषाढनक्षत्रे धनुर्लग्ने रत्नादित्यस्य राज्याभिषेको बभूव । सं० ८८१ कार्त्तिकसुदि ९ निरुद्धं वर्ष ३ मास ३ दिनान्यनेन राज्ञा राज्यं चक्रे ॥ सं०८९८! वर्षे ज्येष्ठसुदि १३ शनौ हस्तनक्षत्रे सिंहलग्ने श्रीक्षेमराजदेवस्य राज्याभिषेकः समजनि। सं० ९२२! भाद्रपदसुदि १५ रवौ वर्ष ३८! मास ३ दिन १० अस्य राज्ञो राज्यनिबन्धः ! ५ । सं० ९३५! वर्षे आश्विनसुदि १ सोमे रोहिणीनक्षत्रे कुम्भलग्ने श्रीचामुण्डराजदेवस्य पट्टाभिषेकः सजनि ॥ ६ ॥ सं० ९३८ माघवदि! ३ सोमे निरुद्धं वर्ष १३ ! मास ४ दिन १६ अनेन राज्ञा राज्यं विदधे ॥सं० ९३८! माघवदि १४ भौमे

स्वातिनक्षत्रे सिंहलग्ने श्रीआकडदेवो राज्ये उपविष्टः। अनेन कर्करायां पूर्यामाकडेश्वरकण्टेश्वरीप्रासादौ कारितौ। सं० ९६५ ! पौषशुदि ९ बुधे निरुद्धं वर्ष २६ ! मास १ दिन २० राज्यं कृतं ॥ सं० ९९० ! पौषसुदि १० गुरौ आर्द्रानक्षत्रे कुम्भलग्ने भूयगडदेवः पट्टे समुपविष्टः। अनेन राज्ञा भूयगडेश्वरप्रासादःकृतः श्रीपत्तने प्राकारश्च सं० ९९१ ! वर्षे आषाढसुदि १५ निरुद्धं वर्ष २७ ! मास ६ दिन ५० राज्यं कृतं एवं चापोत्कटवंशे पुरुषाः ७ तद्वंशे १९० वर्ष मास २ दिनसप्त राज्यं जातं ॥] !

असेव्या मातङ्गा परिगलितपक्षाः शिखरिणो
जडप्रीतिः कूर्मो फणिपतिरयं च द्विरसनः।
इति ध्यातुर्धातुर्धरणिधृतये सान्ध्यचुलुका-
त्समुत्तस्थौ कश्चिद्विलसदसिपट्टः सुसुभटः ॥ इति ॥

अथ पूर्वोक्तश्रीभूयगडराजवंशे मुञ्जालदेवसुता राजबीजदण्डकनामानस्त्रयः सहोदरा यात्रायां श्रीसोमनाथं नमस्कृत्य ततः प्रत्यावृत्ताः। श्रीभूयडदेवनृपं वाहकेल्यामवलोकमानास्तुरगस्य नृपेण कशाघाते दत्ते सति कार्पटिकवेषधारी राजनामा क्षत्रियोऽनवसरे दत्तेन तेन कशाघातेन पीडितः

शिरःकम्पपूर्वं हा हेति शब्दमवादीत् । राज्ञा तत्कारणं पृष्टः स तुरङ्गमेन कृतं गतिविशेषं न्युञ्छन्नयोग्यमनवधार्य कशाघाते दीयमाने ममैव मर्माघातः समजानि । तेन तद्वचसा चमत्कृतेन राज्ञा स तुरङ्गो वाहनाय समर्पितः । तस्यैवाश्वाश्ववारयोः सदृशयोगमालोक्य पदे पदे तयोर्न्युञ्छनानि कुर्वंस्तेनैव तदाचारेण तस्य महत्कुलमाकलय्य लीलादेवीनाम्नीं स्वभगिनीं ददौ। आधानानन्तरं कियत्यपि गते कालेऽकाण्डमरणे संजाते सचिवैरपत्यमरणं पर्यालोच्य तदुदरविदारणपूर्वमपत्यमुद्धृतं । मूलनक्षत्रजातत्वात्स श्रीमूलराजाभिधया समजानि । बालार्क इव तेजोमयत्वात्सर्ववल्लभतया पराक्रमेण मातुलमहीपालं प्रवर्द्धमानसाम्राज्यं कुर्वन् मदमत्तेन श्रीभूयडदेवेन साम्राज्येऽभिषिच्य तेन तु मत्तेनोत्थाप्यते च तदादि चापोत्कटानां दानमुपहासप्रसिद्धं।स इत्थमनुदिनं विडम्बमानो निजपरिकरं सज्ञकित्य विकलेन मातुलेन स्थापितो राज्ये तं निहत्य सत्य एव भूपतिर्बभूव ॥ सं० ९९३ वर्षे आषाढसुदि १५ गुरौ, अश्विनीनक्षत्रे सिंहलग्ने रात्रिप्रहरद्वयसमये जन्मत एकविंशातितमे वर्षे

श्रीमूलराजस्य राज्याभिषेकः समजनि । कस्मिन्नप्यवसरे सपादलक्षीयक्षितिपतिः श्रीमूलराजमभिषेणयितुं गूर्जरदेशसन्धौ समाजगाम । तद्यौगपद्येन नरपतेस्तिलङ्गदेशीयराज्ञो बारपनामा सेनापतिरुपाययौ । श्रीमूलराजेन तयोरेकस्मिन्विगृह्यमाणेऽपरः पार्ष्णिघातं कुरुते इति सचिवैः सह विमृशंस्तैरूचे । श्रीकन्थादुर्गे प्रविश्य कियन्त्यपि दिनान्यतिवाह्यन्ते । नवरात्रिकेषु समागतेषु सपादलक्षक्षितिपतिः स्वराजधान्यां शाकम्भर्यामेव स्वगोत्रजामाराधयिष्यति । तस्मिन्नवसरे श्रीबारपनामा सेनानीर्जीयते तदनुक्रमतः सपादलक्षक्षोणिपतिरपीत्थं तदीये मन्त्रे श्रुते सति नृपः प्राह । मम लोके पलायनापवादः किं न भविष्यतीत्यादिष्टे ॥ ते ऊचुः ॥

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरपि कोपात्संकुचत्युत्पतिष्णुः ।
हृदयनिहितवैरा गूढमन्त्रप्रचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ १ ॥

इति तद्वचसा श्रीमूलराजः श्रीकन्थादुर्गे प्रविवेश । श्रीसपादलक्षीयभूपतिः श्रीगूर्जरदेशे वर्षा-

कालमतिक्रामन्नवरात्रेषु समागतेषु तस्यामेव कट-
कभूमौ शाकम्भरीनगरं निवेश्य तत्र गोत्रजामानी-
य तत्रैव नवरात्राणि प्रारेभे । श्रीमूलराजस्तत्स्व-
रूपमवगम्य निरुपायान्मन्त्रिणो ज्ञात्वा तत्कालो-
त्पन्नमतिवैभवो राजा लिहणिंका[1] प्रारभ्य जादे-
शेन समस्तान्समन्ततः सामन्तानाहूय कूटलेखक-
व्ययकरणप्रतिबद्धपञ्चकुलमुखेन सर्वानपि राजपु-
त्रान्पदातींश्चान्वयावदाताभ्यामुपलक्ष्य यथोचितदा-
नादिभिरावर्ज्य च समयसंकेतज्ञापनापूर्वं ता-
न्सर्वान्सपादलक्षीयनृपतिशिबिरसंनिहितान्विधाय
निर्णीते वासरे प्रधानकरभीमारुह्य तत्प्रतिपा-
लकेन समं भूयसीमपि भुवमाक्रम्य प्रत्यूषकालेऽ-
तर्कित एव सपादलक्षीयनृपतेः कटकं प्रविश्य कर-
भ्या अवरुह्य[2] कृपाणपाणिरेकाक्येव श्रीमूलराजस्त-
द्दौवारिकमभिहितवान् । साम्प्रतं नृपतेः कः समयः
श्रीमूलराजो राजद्वारे प्रविशतीति स्वस्वामिने
विज्ञपयेति वदंस्तं दोर्दण्डप्रहारेण द्वारदेशादपसार्या-
यं श्रीमूलराज एव द्वारे प्रविशतीति तस्मिन्नभिद-
धाने गुरूदरान्तः प्रविश्य तस्य राज्ञः पल्यङ्के स्वयं

१ A लिहिणिकां २ C D करभ्यामेव B करभ्यामवरुह्य

निषसाद । भयभ्रान्तः स राजा क्षणमेकं मौनमवलम्ब्येषत्साध्वसं विधूय भवानेव श्रीमूलराज इत्यभिहिते श्रीमूलराजः स्पष्टं जगौ । ॐमिति गिरमाकर्ण्य यावत्समयोचितं किञ्चिद्वक्ति तावत्पूर्वसंकेतितैस्तैश्चतुःसहस्रप्रमितैः पत्तिभिः स गुरुद्वरः परिवेष्टयांचक्रे । अथ मूलराजेन स नृप इत्यभिदधे। अस्मिन्भूवलये नृपतिः समरवीरः समरे यो मम सन्मुखस्तिष्ठति स कोपि नास्त्यस्ति वेति मम विमृशतस्त्वमुपयाचितैरुपास्थितोसि परमशनावसरे मक्षिकासन्निपात इव तिलङ्गदेशीयतैलपाभिधानराज्ञः सेनापतिं मज्जयाय समागतं यावच्छिक्षयामि तावत्त्वया पार्ष्णिघातादिव्यापाररहितेन स्थातव्यमिति त्वामुपरोद्धुमहमागतोस्मि मूलराजेनेत्यभिहिते भूपतिरेवमवादीत् । यत्त्वं नृपतिरपि सामान्यपत्तिरिव जीवितनिरपेक्षतयेत्थं वैरिगृहे एक एव प्रविशसि तेन त्वया सार्द्धमाजीवितान्तमेव मे संन्धिः। तेन राज्ञेत्युदिते मा मैवं वदेति तं निवारयंस्तेन भोजनाय निमन्त्रितोऽवज्ञया तं निषिध्य करे तरवारिमादायोत्थितः। तां करमीमारुह्य तेन स्कन्धावारेण परिवेष्टितो बारवसेनापतिकटके पतितः। तं निह-

स्य दशसहस्रसंख्यांस्तद्वाजिनोऽष्टादशगजरूपाणि चादाय यावदावासानदत्ते तावत्प्रणिधिभिरस्मिन्वृत्तान्ते ज्ञापिते सपादलक्षः पलायांचक्रे। तेन राज्ञा श्रीपत्तन श्रीमूलराजवसहिका कारिता । श्रीमुञ्जालदेवस्वामिनः प्रासादश्च। तथा नित्यं २ सोमवासरे श्रीपत्तने यात्रायां शिवभक्त्या व्रजंस्तद्भक्तिपरितुष्टः सोमनाथ उपदेशदानपूर्वं मण्डलीनगरमागतः। तेन राज्ञा तत्र मूलेश्वर इति प्रासादः कारितः तत्र नमश्चिकीर्षाहर्षेण प्रतिदिनमागच्छतस्तस्य तद्भक्तिपरितुष्टः श्रीसोमेश्वरः ससागर एव भवन्नगरे समेष्यामीत्यभिधाय श्रीमदणहिल्लपुरेऽवतारमकरोत् । समागतसागरसंकेतेन सर्वेष्वपि जलाशयेषु सर्वाण्यपि वारीणि क्षाराण्यभवन् । तेन राज्ञा तत्र त्रिपुरुषप्रासादः कारितः। अथ तस्य चिन्तायकमुचितं तपस्विनं कंचिदालोकमानः सरस्वतीसरित्तीरे एकान्तरोपवासपारणकेऽनिर्दिष्टपञ्चग्रासभिक्षाहारं कन्थडिनामानं स तपस्विनमश्रौषीत् । यावत्तन्नमस्याहेतवे नृपतिस्तत्र प्रयाति तावत्तेन तृतीयज्वारिणा स ज्वरः कन्थायां नियोजित इति नृपतिरालोक्य तेन राज्ञा

कथं कन्था कम्पते इति पृष्टो नृपेण सह वार्त्तां कर्तुमक्षमतयेह ज्वर आरोपित इत्यभिहिते पार्थिवः प्राह। यद्येतावती शक्तिर्भवतस्तदा ज्वरः किं न सर्वथा प्रहीयते इति राजादेशे॥

उपतिष्ठन्तु मे रोगा ये केचित्पूर्वसंचिताः।
आनृण्ये[1] गन्तुमिच्छामि तच्छम्भोः परमं पदम्॥

इति शिवपुराणोक्तान्यधीयन्नभुक्तं कर्म न क्षीयते इति जानन्कथममुं विसृजामीति तेनाभिहिते त्रिपुरुषधर्मस्थानस्य[2] चिन्तायकत्वाय नृपतिरभ्यर्थयामास।

अधिकारात्त्रिभिर्मासैर्माठापत्यात्त्रिभिर्दिनैः।
शीघ्रं नरकवाञ्छा चेद्दिनमेकं पुरोहितः॥ ३॥

इति स्मृतिवाक्यं जानंस्तपउडुपेन संसारसागरमुत्तीर्य गोष्पदे निमज्जामि किमिति वचसा निषिद्धो नृपस्ताम्रशासनं मण्डकवेष्ठितं निमार्य तस्मै भिक्षागताय पत्रपुटे मोचयामास। स तदजानंस्ततः प्रत्यावृत्तः। पुरा दत्तमार्गोऽपि सरस्वत्याः पूरे तदा न दीयमानमार्ग आजन्म निजदूषणानि विमृशंस्तात्कालिकभिक्षादोषपरिज्ञानाय यावद्दि-

1 A B ओनण्ये. 2 A त्रिपुरुषधर्मस्थापनस्य

लोकते तावत्ताम्रशासनं ददर्श। तदनु क्रुद्धं तपोधनं विज्ञाय तत्रागत्य नृपस्तत्सान्त्वनाय यावद्विनयवाक्यानि ब्रूते तावत्तेन मया दक्षिणपाणिनागृहीतं भवेत्ताम्रशासनं कथं वृथा भवतीति वयजल्लदेवनामा निजविनेयो नृपाय समर्पितः। तेन वयजल्लदेवेन प्रतिदिनमङ्गोद्वर्त्तनाय जात्यघुसृ. .स्याष्टौ पलानि मृगमदपलचतुष्टयं कर्पूरपलमेकं द्वात्रिंशा- द्वाराङ्गना[1]ग्रामसहितं सितातपत्रं च यदा ददासि तदा चिन्तायकत्वमङ्गीकरोमीत्यभिहिते राज्ञा तत्सर्वं प्रतिपद्य त्रिपुरुषधर्मस्थाने तपस्विभूपपदे सोऽभिषिक्तः। कंकरौले[2] इति प्रसिद्धः। इत्थं भोगान्भुञ्जानोऽप्यजिह्मब्रह्मचर्यानिरतः। स कदाचिन्निशि मूलराजपत्न्या परीक्षितुमारब्धः। ताम्बूलप्रहारेण कुष्ठिनीं विधाय पुनरनुनीतो निजोद्वर्त्तनविलेपनस्नानोत्सृष्टपयःप्रक्षालनाच्च सज्जीचकार।

अथात्रैव लाखाकोत्पत्तिविप्रतिपत्तिप्रबन्धः॥

पुरा कस्मिन्नपि परमारवंशे कीर्त्तिराजदेशाधिपतेः सुता कामालतानाम्नी सा बाल्ये सममालिभिः कस्यापि प्रासादस्य पुरो रममाणा वरान्वृणीतेति ताभि-

---

१ A वाराङ्गनाग्रामसहितं २ A C D कुंकूरौल.

र्व्याह्रियमाणा सा कमलता घोरान्धकारनिरुद्धनयनमार्गा प्रासादस्तम्भान्तरितं फुलडाभिधानं पशुपालमज्ञातवृत्त्या तमेव वृत्वा तदनन्तरं कतिपयैर्वर्षैः प्रधानवरेभ्य उपढौक्यमाना पतिव्रताव्रतनिर्वहणाय पितरावनुज्ञाप्य निर्बन्धात्तमेवोपयेमे। तयोर्नन्दनो लाषाकः स कच्छदेशाधिपतिः प्रसादितयशोराजवरप्रसादात्सर्वतोप्यजेयः। एकादशकृत्वस्त्रासितश्रीमूलराजसैन्यः कस्मिन्नप्यवसरे कपिलकोटिदुर्गे स्थित एव राज्ञा लाषाकः स्वयं निरुद्धः। तदनु स लक्षः क्वाप्यवस्कन्ददानाय प्रहितं निर्व्यूढसाहसं माहेचाभिधं भृत्यमागच्छन्तमियेष। तत्स्वरूपमवधार्य श्रीमूलराजेन तदागमनमार्गेषु निरुद्धेषु स समाप्तकार्यस्तत्रागच्छन् शस्त्रं त्यजेति राजपुरुषैरुक्तः स्वामिकार्यसमर्थनाय तथैव कृत्वा समरसज्जं लाषाकमुपेत्य प्राणंसीत्। अथ संग्रामावसरे ॥

ऊग्या ताविउ जहिं न किउ लक्खउ भणइ निघट्ट॥
गणिया लब्भइ दीहडा के दहक अहवा अट्ठ[1]॥१॥

---

१ येनोद्गता सता तापितो न कृतः। नहिं लक्षो निकृष्टो भण्यते। गणिता लभ्यन्ते दिवसाः किं वा दश। अथवाऽष्ट ॥

इत्यादिबोधवाक्यानि विविधानि व्याहरन्माहिचभृत्येनोद्भटवृत्तिदर्शनेन प्रोत्साहितसाहसः श्रीमूलराजेन समं द्वन्द्वयुद्धं कुर्वाणस्तस्याजेयतां दिनत्रयेण विमृश्य तुर्यदिने श्रीसोमेश्वरमनुस्मृत्य ततोवतीर्णरुद्रकलया स लक्षो निजघ्ने ॥ अथ तस्याज्ञिभूपतितस्य वातचलिते श्मश्रुणि पदा स्पृशन् राजा लक्षजनन्या लूतिरोगेण भवद्वंशो विपत्स्यत इति प्रशप्तः ॥

स्वप्रतापानले येन लक्षहोमं वितन्वता ।
सूत्रितस्तत्कलत्राणां बाष्पावग्रहनिग्रहः ॥ १ ॥
कच्छपलक्षं हत्वा सहसाधिकलम्बजालमायातं ।
संगरसागरमध्ये धीवरता दर्शिता येन ॥ २ ॥

इति लाषाकोत्पत्तिविपत्तिप्रबन्धः ॥

मेदिन्यां लब्धजन्मा जितबलिनि बलौ बद्धमूला दधीचौ
रामे रूढप्रवाला दिनकरतनये जातशाखोपशाखा ।
किंचिन्नागार्जुनेन प्रकटितकलिका पुष्पिता साहसाङ्के
आमूलामूलराज त्वयि फलितवती त्यागिनि त्यागवल्ली ॥ ३ ॥

स्नाता प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्वा निवापाञ्ज-
लीन्॥
प्रासादास्तव विद्विषां परिपतत्कुड्यस्थपिण्डच्छला-
त्कुर्वन्ति प्रतिवासरं निजपतिप्रेताय पिण्डक्रियाम्॥४

इत्थं तेन राज्ञा पञ्चपञ्चाशद्वर्षाणि निःकण्टकं साम्राज्यं विधाय सन्ध्यानीराजनाविधेरनन्तरं राज्ञा प्रसादीकृतं ताम्बूलं वण्ठेन करतलाभ्यामादाय तत्र कृमिदर्शनात्तत्स्वरूपमवगम्य वैराग्यात्संन्यासाङ्गीकारपूर्वं च दक्षिणचरणाङ्गुष्ठे वन्हियोजनापूर्वं गजदानप्रभृतीनि महादानानि ददानोऽष्टभिर्दिनैः ॥

उद्धूमकेशं पदलग्नमग्नि-
मेकं विषेहे विनयैकवश्यः ॥
प्रतापिनोऽन्यस्य कथैव का य-
द्बिभेद भानोरपि मण्डलं यः ॥ १ ॥

इत्यादिभिः स्तुतिभिः स्तूयमानो दिवमारुरोह ॥

अथ सं. १०५०!(५२) श्रावणसुदि ११ शुक्रे पुष्यनक्षत्रे वृषलग्ने श्रीचामुण्डराजो राज्ये उपाविशत्। अनेन श्रीपत्तने चन्दनाथदेव,चाचिणेश्वरदेवप्रसादौ कारितौ ॥ सं० १०५५ आश्विनशुदि ५ सोमे नि

रुद्धं। वर्ष १३ मास १ दिन २४ राज्यं कृतं॥ सं० १०६५ आश्विनशुदि ६ भौमे ज्येष्ठानक्षत्रे मिथुनलग्ने श्रीवल्लभराजदेवो राज्ये उपविष्टः। अस्य राज्ञो मालवकदेशे धाराप्राकारं वेष्टयित्वा शीलीरोगेण विपत्तिः संजाता। अस्य राजदमनशंकर इति तथा जगझंपण इति बिरुदद्वयं संजातं॥ सं० १०६५ चैत्रशुदि ५ निरुद्धं मास, ५ दिन २९ अनेन राज्ञा राज्यं कृतं ॥ सं० १०६५चैत्रशुदि ६ गुरौ, उत्तराषाढनक्षत्रे मकरलग्ने तद्भ्राता दुर्लभराजनामा राज्येऽभिषिक्तः। अनेन श्रीपत्तने सप्तभूमिधवलगृहकरणं व्ययकरणहास्तिशालाघटिकागृहसहितं कारितं ॥ स्वभ्रातृवल्लभराजश्रेयसे मदनशंकरप्रासादः कारितस्तथा दुर्लभसरः कारयांचक्रे ॥ एवं १२ वर्ष राज्यं कृतं ॥ तदनु सं० १०७७ ज्येष्ठसुदि १२ भौमे अश्विनीनक्षत्रे मकरलग्ने श्रीभीमाभिधानं मातुः सुतं राज्येभिषिच्य स्वयं तीर्थोपासनवासनया वाणारसीं प्रति प्रतिष्ठासुर्मालवकमण्डलं प्राप्य तन्महाराजश्रीमुञ्जेन छत्रचामरादिराजाचिन्हानि विमुच्य कार्पटिकवे

१ 1) यियासुः    *कर्पटं कापावत्राभ्रमेन चरती ति कार्पटिकः

वेणैव पुरतो व्रजेति यद्वा युद्धं विधेहीत्यभिहिते-
ऽन्सरा धर्मान्तरायमुदितमवगम्य तं वृत्तान्तं निता-
न्तं श्रीभीमराजाय समादिश्य कार्पटिकवेषेण तीर्थे
गत्वा परलोकं साधयामास । ततः प्रभृति माळ-
विकराजभिः सह गुर्जरनृपतीनां मूलविरोधः संवृत्तः॥
अथ प्रस्तावायातं मालवकमण्डनमुञ्जराजचरित-
मेवम् ॥



१ C मालवकराज्ञां. २ B C मालवकमण्डलमण्डन.
३ D ततःप्रभृति मालवकं राजचरितमेकं.

## ॥वर्त्तमानकालीनविनिश्चितराजप्रसिद्धिर्यथा॥

## ॥ चापोत्कट (चावडा) वंशराजानः ॥

| | | इस्विसनः | प्रारम्भः | समाप्तिः | वर्षाणि |
|---|---|---|---|---|---|
| १ | वनराजः | इ० | ७४६ | ८०६ | ६०. |
| २ | योगराजः | इ० | ८०६ | ८४१ | ३५ |
| ३ | क्षेमराजः | इ० | ८४१ | ८६६ | २५ |
| ४ | भूवडः | इ० | ८६६ | ८९५ | २९ |
| ५ | वीरसिंहः (विजयसिंहः) | इ० | ८९५ | ९२० | २५ |
| ६ | रत्नादित्यः (रावतसिंहः) | इ० | ९२० | ९३५ | १५ |
| ७ | सामन्तसिंहः | इ० | ९३५ | ९४२ | ७ |

## ॥ चौलुक्य (सोलङ्की) वंशराजानः ॥

| | | | | | |
|---|---|---|---|---|---|
| १ | मूलराजः | इ० | ९४२– | ९९७– | ५५ |
| २ | चामुण्डराजः | इ० | ९९७– | १०१०– | १३ |
| ३ | वल्लभसेनः | इ० | १०१०– | १०१०– | ० |
| ४ | दुर्लभसेनः | इ० | १०१०– | १०२२– | १२ |
| ५ | भीमदेवः। प्रथमः | इ० | १०२२– | १०७२– | ५० |
| ६ | कर्णः | इ० | १०७२– | १०९३– | २२ |

७ सिद्धराजः। (जयसिंहः) } इ० १०९४—११६३—४९

८ कुमारपालः इ० ११४३—११७४—३१

९ अजयपालः इ० ११७४—११७७— ३

१० मूलराजः॥द्वितीयः इ० ११७७—११७९— २

११ भीमदेवः॥द्वितीयः इ० ११७९—१२४२—६३ (४३)

१२ त्रिभुवनपालः इ० १२४२—१२४४— २

॥व्याघ्रीय (वाघेला) वंशराजानः॥

१ विशालदेवः इ० १२४२ १२६२ १८

२ अर्जुनदेवः इ० १२६२ १२७५ १३

३ सारंगदेवः इ० १२७५ १२७९ ४

४ कर्णराजः ( कर्णघेलो ) } इ० १२७९ १३०४ २५

(ख)॥सपादलक्षीयचाहमानन्ृपवंशो लिख्यते॥

१ वसुदेवराजः संवत ६०८ वर्षे (चउहाण राजा)

२ सामन्तराजः

३ नरदेवः

४ अजयराजः। अजयमेरुदुर्गकारकः

५ विग्रहराजः

६ विजयराजः

७ चन्द्रराजः

८ गोविन्दराजः। सुरत्राणस्य बेगवरिसनाम्नो जेता

९ दुर्लभराजः

१० वत्सराजः

११ सिंहराजः। सुरत्राणस्य हाजिवदीननाम्नो जेठाणके जेता

१२ दुर्योजनः निसरदीनसुरत्राणजेता

१३ विजयराजः

१४ वप्यइराजः। शाकम्भर्यां देवता [illegible] द्यादि-खानिसंपन्नः

१५ दुर्लभराजः

१६ गण्डूराजः। महमदसुरत्राणजेता

१७ बालपदेवः

१८ विजयराजः

१९ चामुण्डराजः। सुरत्राणभङ्क्ता

२० दूसलदेवः। येन गूर्जरधराधिपतिर्बद्ध्वानीतोऽजयमेरुमध्ये तक्रविक्रयं कारितः

२१ वीसलदेवः। स च स्त्रीलम्पटो महासत्यां ब्राह्मण्यां विलग्नो बलात्तच्छापाद्दुष्टव्रणसंक्रमेण मृतः

२२ वृहत्पृथ्वीराजः। वलुगीसाहसुरत्राणभुजमर्दी

२३ आल्हणदेवः। सहावदीनसुरत्राणजेता

२४ अनालदेवः

२५ जगद्देवः

२६ वीसलदेवः। तुरुष्कजित्

२७ अमरगाङ्गेयः

२८ पेथडदेवः

२९ सोमेश्वरदेवः

३० पृथ्वीराजः संवत् १२३६ वर्षे राज्यं चकार।
संवत् १२४८ मृतः।

३१ हरिराजदेवः

३२ राजदेवः

३३ बोलणदेवः वावरीआलविरुदं तस्य

३४ वीरनारायणदेवः तुरुष्कसमसदीनगृहे मृतः

३५ बाहडदेवः मालवजेता

३६ जैत्रसिंहदेवः

३७ श्रीहम्मीरदेवः संवत् १३४२ वर्षे राज्ये स्थितः
संवत १३५८ वर्षे युद्धे मृतः

॥ इति सपादलक्षीयनृपवंशः ॥

## मुञ्जराजप्रबन्धः

पुरा तस्मिन्मण्डले श्रीपरमारवंश्यः सिंहदन्त-भटनामा[1] नृपतिः राजपाटिकायां परिभ्रमन् शरव-णमध्ये जातमात्रं रूपपात्रमतिमात्रं कमपि बाल-मालोक्य पुत्रवात्सल्यादुपादाय देव्यै समर्पयामा-स । तस्य सान्वयं मुञ्ज इति नाम निर्ममे । तदनु सीन्धलं[2] इति नाम्ना सुतः समजनि । निःशेषगुणपु-ञ्जमञ्जुलमुञ्जस्य[3] राज्याभिषेकचिकीर्नृपस्तस्य सौ-धमलंकुर्वन्नमन्दमन्दाक्षतया निजवधूं वेत्रासनान्त-रितां विधाय प्रणामपूर्वं भूपतिमाराराध । राजा तं प्रदेशं विजनमवलोक्य तज्जन्मवृत्तान्तमादित एव तस्मै निवेद्य तव भक्त्या परितोषितः सन्सुतं विहाय तुभ्यं राज्यं प्रयच्छामीति वदन् परमनेन सीन्धलनाम्ना बान्धवेन समं प्रीत्या वर्त्तितव्यमि-त्यनुशास्तिं दत्वा तस्याभिषेकं चकार । स्वजन्म-वृत्तान्तप्रसरशङ्किना तेन स्वदयितापि निजघ्ने । तदनु पराक्रमाक्रान्तभूतलः समस्तसज्जन[4]चक्रवर्त्ति-रुद्रादित्यनाम्ना महामात्येन चिन्तितराज्यश्रियं सु-

---

१ C श्रीसिंहभट D श्रीहर्षनामा. २ B सिन्धुल. D सिन्धुराज. ३ A पु-ञ्जमुञ्जस्य. D निःशेषराजगुणपुञ्ज. ४ D समस्तविद्वज्जन.

स्वमनुभवन्कस्यामपि योषित्यनुरक्ताश्चीरिकिल्लाभिध-करभमधिरुह्य द्वादशयोजनीं निशि प्रयाति प्र-त्यायाति च तया समं विश्लेषे जाते इमं दोधक-मप्रैषीत् ॥

मुँञ्ज पडल्ला दोरडी पेक्खिवसि न गम्मारि ।
असाढि घण गज्जीइं चिक्खिल्लि होसेऽवारि ॥ १ ॥

तं सीन्धलनामानं भ्रातरमुत्कटतयाज्ञाभङ्गकारिणं स्वदेशान्निर्वास्य सुचिरं राज्यं चकार । स सीन्धलो गूर्जरदेशे समागत्य काश-हृदनगरसन्निधौ निजां पल्लीं निवेश्य दीपोत्सवे रात्रौ मृगयां कर्तुं प्रयातः। चौरवधभूमेः सन्निधौ शूकरं चरन्तमालोक्य शूलि-कायाः पतितं चौरशवमजाजन् जानुनाधो विधाय यावत्प्रतिकिरि शरं सज्जीकुरुते तावत्तेन शवेन संकेतितः । ततस्तं [illegible] शूकरं तं श-रेण विदार्य यावदाकर्षति तावत्स शबोऽट्टहासपूर्व-मुत्तिष्ठन् सीन्धलेन प्रोचे तव संकेतकाले शूकरे-

---

* हे मुञ्ज स्खलिता दवरकी [रज्जुः] प्रेक्षसे न मां हे जाल्म आषाढीयो घनो गर्जति चिक्कणा भूर्भविष्यत्यधुना । इत्यन्योक्त्यो-पालम्भेनाक्रन्दन् । त्वद्विरहजन्याश्रुधाराभिः पङ्किलायां भुवि कथ-मागमिष्यामीति हिकुः]

शरप्रहारः श्रेयान्। किं वाऽवबुध्य महाप्रदत्तः प्रहार इति तद्वाक्यान्ते सच्छिद्रान्वेषी प्रेतः तन्निःसीमसाहसेन परितुष्टो वरं वृणु । इत्यभिहितो मम बाणः क्षितौ मा पतत्विति याचिते भूयोपि वरं वृणु । इति श्रुत्वा मद्भुजयोः सर्वापि लक्ष्मीः स्वाधीनेति। तत्साहसचमत्कृतः स प्रेत इत्याह । त्वया मालवमण्डले गन्तव्यमिति । तत्र श्रीमुञ्जराजा संनिहितविनाशस्तथापि तत्र त्वया गन्तव्यमेव तत्र तवान्वये राज्यं भविष्यतीति तत्प्रेषितस्तत्र गत्वा श्रीमुञ्जराज्ञः संपदः पदं कमपि जनपदमवाप्य पुनरुत्कटतया श्रीमुञ्जेन निगृहीतनेत्रः काष्ठपञ्जरनियन्त्रितो भोजं सुतमजीजनत् । सोऽभ्यस्तसमस्तराजशास्त्रः षट्त्रिंशदायुधान्यधीत्य द्वासप्ततिकलाकूपारपारंगमः समस्तलक्षणलक्षितो ववृधे । तज्जन्मनि जातकविदा केनापि नैमित्तिकेन जातकं समर्पितं ॥

पञ्चाशत्पञ्चवर्षाणि मासाः सप्त दिनत्रयम् ।
भोक्तव्यं भोजराजेन सगौडं दक्षिणापथम् ॥ १ ॥

इति श्लोकार्थमवगम्यास्मिन्सति मत्सूनो राज्यं

---

१ A O अवबुध्यमत्प्रदत्त. B अवबुध्यानि मत्.

न भविष्यतीत्याशङ्क्यान्त्यजेभ्यो वधाय तं समर्पयामास । अथ तैर्निशीथे माधुर्यधुर्यां तन्मूर्त्तिमवधार्य तैर्जातानुकम्पैः सकम्पैश्चेष्टदैवतं स्मरेत्यभिहिते ॥

मान्धाता स महीपतिः कृतयुगालंकारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः[1]।
अन्ये चापि युधिष्ठिरप्रभृतयो यावद्भवान् भूपते
नैके[2]नापि समं गता वसुमती मन्ये[3] त्वया यास्यति १

इदं काव्यं पत्रके आलिख्य तत्करेण नृपतये समर्पयामास । नृपतिस्तद्दर्शनात्खेदमेदुरमना अश्रूणि मुञ्चन् भ्रूणहत्याकारिणं स्वं निनिन्द । अथ तैस्तं सबहुमानमानीय युवराजपदवीदानपूर्वं संमान्य तिलिङ्गदेशीयराज्ञा श्रीतैलिपदेवनाम्ना सैन्यप्रेषणैराक्रान्तो रोगग्रस्तेन रुद्रादित्यनाम्ना महामात्येन निषिध्यमानोपि तं प्रति प्रतिष्ठासुर्गोदावरीं सरितमवधीकृत्य तामुल्लङ्घ्य प्रयाणकं न कार्यमिति शपथदानपूर्वं व्याषिद्धोपि तं पुरा षोढा निर्जितमित्यवज्ञया पश्यन्नतिरेकवशात्तां सरितमुत्तीर्य स्कन्धावारं निवेशयामास । रुद्रादित्यो नृप-

१ C D अन्तकृत्. २ B प्रभृतयः सर्वेपि चास्तं गताः। ३ मुञ्च.

तैर्वृत्तान्तमवगम्य कामपि भाविनीमविनीततया विपदं विमृश्य स्वयं चिंतानले[1] प्रविवेश । अथ तैलिपेन[2] तत्सैन्यं छलबलाभ्यां हतविप्रहतं कृत्वा मुञ्जरज्वा विबध्य[3] श्रीमुञ्जराजो जगृहे । कारागृहे निहितः काष्ठपञ्जरनियन्त्रितो मृणालवत्या तद्भागिन्या परिचार्यमाणस्तया सह जातकलत्रसंबन्धः । पाश्चात्यैर्निजप्रधानैः सुरङ्गादानपूर्वं तत्र ज्ञापितसंकेतः । कदाचिद्दर्पणे स्वं प्रतिबिम्बं पश्यन्नज्ञातवृत्त्या पृष्ठतःसमागताया मृणालवत्या वदनप्रतिबिम्बं जराजर्जरं मुकुरे निरीक्ष्य यूनः श्रीमुञ्जस्य वदनसामीप्यात्तद्विशेषाविच्छायतया तां विषण्णामालोक्यैवमवादीत् ॥

*मुञ्ज भणइ[4] मुणालवइ जुव्वण गयुं न झूरि[5]।
जइ सक्करसयखण्ड थिय तो इस मीठी चूरि ॥१

इति तां संभाष्य स्वस्थानं प्रति यियासुस्तद्विरहासहो भयात्तं वृत्तान्तं ज्ञापितुमशक्तो भूयो भूयः

* मुञ्जो भणति हे मृणालवती यौवनं गतं तदपि मा खिद्यस्व । तत्र दृष्टान्तः । यदि शर्करा शतखण्डा जाता, तदपिमिष्टा, ततोपीयं चूर्णिता मर्दिता मिष्टैव ! १ ॥

१ A B चिन्तानले. २ C D तैलपेन. ३ A C D मुञ्जं रज्वा बद्ध्वा. ४ C D पभणइ मुञ्ज. ५ जुव्वणु गियउं म झूरि.

प्रोच्यमानोपि तां चिन्तामनुच्चरन् । अलवणातिलवणरसवतीं भोजितोपि तदास्वादानवबोधात्तया निर्बन्धबन्धुरया गिरा सप्रणयं पृष्टः प्राह । अहमनया सुरङ्गया स्वस्थाने गन्तास्मीति चेद्भवती तत्र समुपैति तदा महादेवीपदेऽभिषिच्य प्रसादफलं दर्शयामीत्यभिहिते यावदाभरणकरण्डिकामुपनयामि तावत्क्षणं प्रतीक्षस्वेत्यभिदधानाऽसौ (कात्यायिनी[2] तत्र गतो मां परिहरिष्यतीति विमृशन्ती स्वभ्रातुर्भूपतेस्तं वृत्तान्तं निवेद्य विशेषतो विडम्बनाय बन्धनबद्धं कारयित्वा प्रतिगृहं भिक्षाटनं कारयामास । स प्रतिगृहं परिभ्रमन्निर्वेदमेदुरतयेमानि वाक्यानि पपाठ ॥ तथाहि ॥

*सउचित्तहरिसट्ठी[3] मम्मणहवंत्तीसडीहियां ।
हिअम्मिं[4] ते नर दट्ठ[6] सीझे[5] जे वीससइं थियां॥ १॥

* सर्वचित्तहर्षार्थे मणमणाक्षरैर्मन्मथवार्त्तासु दाक्षिण्यशीलायां स्त्रियां ये विश्वसन्ति ते हृदये दृढं खिद्यन्ते ॥ अत्र प्राचीनदेशीशब्दाः ! १ ॥

१ A B तद्भवती. (२ अर्न्तरती मनसा विचारयाति)

३ A चित्तहसट्ठीमणाह ४ अस्सी ते नर B हंरिसट्ठी मम्मणव्वत्ति । हिअम्मि C D पञ्चासडीहियाहअम्मी ५ सिपवे पात्तिजह तांह D अम्मी सीजै ६ पंतिप्पंहतिपांहं.

*झाली तुट्टी किं न मुउ किं न हूयउ छारपुञ्ज ।
हिण्डइ दोरीबन्धीयउ जिममक्कड तिम मुञ्जे ॥२

तथा च ॥

*गयगयरहगयतुरयगयपायकडो निभिच्च ।
सग्गट्ठिय करि मन्तण उम्मुहुं ता रुद्दाइच्च ॥ ३

अथान्यस्मिन्वासरे कस्यापि गृहपतेर्गृहे भिक्षानि-
मित्तं नीतः ॥

पडुकपाणिं तत्पत्नीं तक्रं पाययित्वा गर्वोद्धु-
रकन्धरां भिक्षादाननिषेधं विदधतीं मुञ्जः४ प्राह॥
*भोलि मुन्धि म गव्वु करि पिक्खि वि पडुगुपांइ-
चउदसइ सइं छहुत्तरइं मुञ्जह गयह गैयाइं ॥४

---

* ज्वालित्वा त्रुटित्वा किं न भवेयं भस्मपुञ्जः हिण्डति दवरक-बद्धो यथा मर्कटस्तथा मुञ्जः ॥२॥

१ C झोली तुट्टि वि किं न कउ मुयउ । छारहपुञ्ज घरिघ-रि तिम्म नचावियइ जिम । D तुटवि A झोली त्रुटी । B हुयउ.

* गतगजरथगततुरगगतपद्गो निर्भृत्यो जातोहं । तस्मात् हे रुद्रा-दित्य उन्मुखं मां स्वर्गस्थितः सन्मन्त्रणमामन्त्रणं कुर्याः। ३

२ C D पायकडा ठकुरुद्दाइच्च. ३ B उंमुऊ ४ D मतणुमहता

* हे अज्ञे हे मुग्धे मा गर्वं कुरु प्रेक्ष्य लघुपिठरकहस्तं पडु-कशब्दो देशी ० षट्सप्तत्युत्तरचतुर्दशशतानि मुञ्जस्य गजानां नान्यापि गतानि ! ४

५ C D धनवन्ती म गव्वु पंडुरुआइ A चउदइसइ C छउत्तर.

मा मङ्कुड कुरूद्वेगं यदहं खण्डितोनया ।
रामरावणमुञ्जाद्याः स्त्रीभिः के के न खण्डिताः ५

रेरे यन्त्रक मा रोदीर्यदहं भ्रामितोऽनया ।
कटाक्षाक्षेपमात्रेण कराकृष्टौ च का कथा ॥ ६॥

*जा मति पच्छइ सम्पज्जइ सा मति पहिली होइ ।
मुञ्ज भणइ मुणालवइ विघन न वेढइ कोइ ॥७

यशःपुञ्जो मुञ्जो गजपतिरवन्तिक्षितिपतिः
सरस्वत्यावासः समजनि पुरा यः कृतिरिति ।
स कर्णाटेशेन स्वसचिवबुद्धयैव विधृत।
कृतः शूलाप्रोतस्त्वहह विषमाः कर्मगतयः ॥ ८ ॥

सुहृद्देवेन्द्रस्य क्रतुपुरुषतेजोंशजनकः
प्रमीतः शय्यायां सुतविरहदुःखाद्दशरथः ।
ज्वलत्तैलद्रोण्यां निहितवपुषस्तस्य नृपते-
श्चिरात्संस्कारोऽभूदहह विषमाः कर्मगतयः ॥ ९ ॥

आपद्गतं हससि किं द्रविणान्धमूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
किं त्वं न पश्यसि घटीर्जलयन्त्रचक्रे

---

ड. C पट्टकरूपाणि. B पटुकरूपाणि. A पटुकरूपाणि.

*या मतिः पश्चात्संपद्यते सा मतिर्यदि प्रथमा भवेत्तर्हि मुञ्जो भणति हेमृणालवति विघ्नं न वेष्टति कोपि । ७॥

रिक्ता भवन्ति भरिता भरिता च रिक्ताः ॥ १० ॥

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ११

*सायर पाई लंक गढ गढवइ दससिरु राउ ।
भग्गक्खय सो भज्जिगय मुञ्ज म करि विसाउ १२

इत्थं सुचिरं भिक्षां भ्रामयित्वा वध्यभूमौ नृपादेशाद्वधविधौ नीतः । तैरुक्तमिष्टं दैवतं स्मर ।

लक्ष्मी यास्यति गोविन्दे वीरश्रीर्वीरवेश्मनि ।
गते मुञ्जे यशःपुञ्जे निरालम्बा सरस्वती ॥ १ ॥

इत्यादि तद्वाक्यानि यथाश्रुतमवगन्तव्यानि ॥ तदनु मुञ्जं निहत्य तच्छिरो राजाङ्गणे शूलिकाप्रोतं कृत्वा नित्यं दधिवेष्टितं कारयन्निजममर्षं पुपोष । अथ मालवमण्डले तद्वृत्तान्तवेदिभिः सचिवैस्तद्भ्रातृजं भोजनामानं राज्येऽभ्यषिच्यत ॥

॥इति श्रीविक्रमप्रमुखनृपवर्णनो नाम प्रथमः सर्गः॥



* सागरः परिखा । लंका दुर्गः । दुर्गपतिर्दशशिरा राजा । भाग्यक्षये तत्सर्वं भग्नं हे मुञ्ज मा कुरु विषादमिति रिपुनारिवाक्यम् १२

## भोजभीमप्रबन्धौ

अथ यदा मालवकमण्डले श्रीभोजराजा राज्यं चकार तदाऽत्र गुर्जरधरित्र्यां चौलुक्यवंशीयश्रीभीमः पृथिवीं शशास । कस्मिन्नपि निशाशेषे स श्रीभोजः श्रियश्चञ्चलतां निजचेतसि चिन्तयन् कल्लोललोलं निजं जीवितं च विमृशन् प्रातःकृत्यानन्तरं दानमण्डपेऽनुचरैराहूतेभ्योऽर्थिभ्यो यदृच्छया सुवर्णटङ्कान्दातुमारेभे । अथ रोहकाभिधानस्तन्महामात्यः कोशविनाशात्तदौदार्यगुणं दोषं मन्यमानोऽपरथा तं दानविधिं निषेद्धुमक्षमः सर्वावसरे भग्ने सभामण्डपभारपट्टे ॥

आपदर्थे धनं रक्षेत्

इत्यक्षराणि खटिकयाऽलेखि । प्रातर्यथावसरं नृपतिस्तान्वर्णान्निर्वर्ण्य समस्तपरिजने तं व्यतिकरमपन्हुवाने ।

भाग्यभाजः क्व चापदः ।

इति नृपतिना लिखिते

दैवं हि कुप्यते क्वापि

एवं मन्त्रिलिखनादनन्तरं नृपतिना तद्विलोक्य

---

१ C D चौलुक्यचक्रवर्त्ती. २ C D लिलेख. ३ A नृपः D नृपेण.

संचयोपि विनश्यति ॥ १ ॥

इति पुरो लिखिते स सचिवोऽभयं याचित्वा स्वलिखितं विज्ञपयामास[1] ॥ तदनु पण्डितानां[2] पञ्चशती मम मनोगजं ज्ञानाङ्कुशेन वशीकर्तुममात्रं[3] महामात्यसन्निभा यथायाचितं ग्रासं लभते ॥

तथाहि ॥ कङ्कणोत्कीर्णमार्याचष्टयमेतत् ॥

इदमन्तरमुपकृतये प्रकृतिचला यावदस्ति संपदियम्।
विपदि नियतोदितायां[4] पुनरुपकर्तुं कुतोवसरः ॥१॥
निजकरानिकरसमृद्ध्या धवलय भुवनानि पार्वणशशाङ्क।
सुचिरं हन्त न सहते हतविधिरिह सुस्थितं किमपि २
अयमवसरः सरस्ते सलिलैरुपकर्त्तुमर्थिनामनिशम्।
इदमपि सुलभमम्भो भवति पुरा जलधराभ्युदये ३
कतिपयदिवसस्थायी पूरो दूरोन्नतोपि चण्डरयः[5] ।
तटिनीतटद्रुमपातिनिपातकमेकं चिरस्थायि ॥४॥

किंच[6] ॥

१ C D स्वं लेखकं ज्ञापयामास. २ C D इयं पण्डितानां.
३ C D अतिमात्रं D अङ्कुशेन वशीकुर्त्ता. ४ C D उदयायां.
५ D दूरोन्नतिश्च भविता ते. (D किंच श्लोकद्वयं कुण्डलोत्कीर्णम् ॥ तद्यथा—

यदि नास्तमिते सूर्ये न दत्तं धनमर्थिनाम् ।
तद्धनं नैव जानामि प्रातः कस्य भविष्यति ॥ ५ ॥

इति स्वकृतं कण्ठाभरणीकृतं श्लोकमिष्टमन्व-वजपन्मन्त्रिन्, प्रेतप्रायेण भवता कथं विप्रलभ्यः।
अथान्यस्मिन्नवसरे राजा राजपाटिकायां संचरन् सरित्तीरमुपागतः। तन्नीरमुल्लङ्घ्यागच्छन्तं दारिद्र्यो-पद्रुतं काष्टभारवाहकं कमपि विप्रं प्राह ।

कियन्मात्रं जलं विप्र

विप्र०

जानुदघ्नं नराधिप ।

इति तेनोक्ते राजा०

कथं सेयमवस्था ते

इति नृपेणोक्तः ॥ विप्र०

न सर्वत्र भवादृशाः ॥ १ ॥

इति तद्वाक्यान्ते यत्पारितोषिकं नृपतिरस्मै अदापयत्तन्मन्त्री धर्मवाहिकायां श्लोकबद्धं लिलेख।
तद्यथा ॥

लक्षं पुनर्लक्षं मत्ताश्व दश दन्तिनः।

---

ग्रासाद् [illegible] मपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥१॥

१ A B यदनस्त. २ D इमानि सुभाषितानीष्ट. ३ D विप्रलभ्यः

दत्तं देवेन तुष्टेन जानुदघ्नप्रभाषणात्[1] ॥ १ ॥

अथान्यदा निशि निशीथसमयेऽकस्माद्विगतनिद्रो राजा राजानं गगनमण्डले नवोदितमालोक्य स्वसारस्वताम्भोधिप्रोन्मीलद्वेलानिभामिदं काव्यार्द्धमाह ।

यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते[2]
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।

इति राज्ञा भूयो२ निगद्यमाने कश्चिच्चौरो नृपसौधे खात्रपातपूर्वं कोशभुवने[4] प्रविश्य प्रतिभाभरं निषेद्धुमक्षमः ॥

अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणशतकलङ्काङ्किततनुम् ॥ १ ॥

इति तत्पठनान्तरं चोरमङ्गरक्षकैः कारागारे निवेशयामास । ततोऽहर्मुखे सभामुपनीताय तस्मै चौराय यत्पारितोषिकं राज्ञा प्रसादीकृतं तद्धर्मवहिकानियुक्तो नियोग्येवं काव्यमलिखत् ।

अमुष्मै चौराय प्रतिनिहितमृत्युप्रतिभिये
प्रभुः प्रीतः प्रादादुपरितनपादद्वयकृते ।
सुवर्णानां कोटीर्दश दशनकोटिक्षतगिरी—

१ C D प्रभाषिणे. २ चन्द्रं । ३ C ऊचे ४ कोशगृहे.

न्करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ॥ १ ॥

॥ अथ कदाचित्तस्यां वाच्यमानायां स्वमेव स्थूललक्षं मन्यमानो दर्पभूताभिभूत इव[1]

तत्कृतं यन्न केनापि तद्दत्तं यन्न केनचित् ।
तत्साधितमसाध्यं यत्तेन चेतो न दूयते ॥ १ ॥

इति स्वं मुहुर्मुहुः श्लाघ्यमानः केनापि पुरातनमन्त्रिणा तद्गर्वखर्वचिकीर्षया श्रीविक्रमार्कधर्मवहिका नृपायोपनिन्ये । तस्या उपरितनविभागे प्रथमतः प्रथमं काव्यमेतत् ॥

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मदगन्धमत्तमधुपक्रोधोद्धुराः सिन्धुराः ।
अश्वानामयुतं प्रपञ्चचतुरं[2] वाराङ्गनानां शतं
दण्डे पाण्डुनृपेण ढौकितमिदं वैतालिकस्या[3]र्पितम् १

वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं

---

१ C दर्पाभिभूतः २ D तारुण्योपचयप्रपञ्चितदशां.

३ B D वैतालिकस्य [ वैतालभट्टाय विक्रमपण्डितायेत्यर्थस्तस्मिन्पाठे ] ग०

स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपाना-
भिलाषः ॥१॥

अस्य काव्यस्य पारितोषिकदानमष्टौ हाटकामिदं
काव्यं ज्ञेयम् ॥

इति तत्काव्यार्थमवगम्य तदौदार्यविनिर्जितगर्व-
सर्वस्वस्तां वहिकामर्चयित्वा यथास्थानमस्थापयत्।
प्रतीहारेण विज्ञप्तः स्वामिन्देव दर्शनोत्सुकं सरस्व-
तीकुटुम्बं द्वारमध्यास्ते । क्षिप्रं प्रवेशयेति राजादे-
शादनुप्रथमं प्रविष्टं तत् । प्रेष्यः प्राह ॥

*बापो[1] विद्वान् बापपुत्रोपि विद्वान्
आई विउषी[2] आईधुआपि विउषी ।
काणी चेटी सापि विउषी[3] वराकी
राजन्मन्ये विज्जपुञ्जं[4] कुटुम्बम् ॥ १

इति तस्य प्रहसनप्रायेण वचसा नृपतिरीषद्विह-
स्य तज्ज्येष्ठपुरुषाय समस्यापदमाह ॥

असारात्सारमुद्धरेत् ॥

---

*[बापः पिता । हैमशेषकाण्डे । आई माता । धुआ सुता । दृशा० विद्यासमूहं)

१ B बप्पो. २ A C D विदुषी. ३ A विद्री. C विध्री. D विदुस्मी. ४ B विज्ञ D विद्द.

दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥ १

अथ नृपस्तत्पुत्राय । हिमालयो नाम नगाधिराजः। चकार मेनाविरहातुराङ्गीति नृपतिवाक्यानन्तरम् ॥

तव प्रतापज्वलनाज्जगाल
हिमालयो नाम नगाधिराजः।
चकार मेना विरहातुराङ्गी
प्रवालशय्याशरणं शरीरम् ॥ १ ॥

इति समस्यायां पूरितायां ज्येष्ठस्य पत्नीं प्रति राजा। कवणु पियावउ खीरु। इति समस्यापदे राज्ञाऽर्पिते।
*जइ यह रावणु जाईयउ दहमुहइकुशरीरु।
जणणि वियम्भी चिन्तवइ कवणुपियावउ खीरु १

सेत्थं पूरयामास ॥ अथ राज्ञः, कण्ठि विलुल्लइं काउ। इति समस्यापदं।
[काण वि विरहकरालिइं [1]पंइउड्डावियउ वराउ।

---

१ D प्रवालशय्याशरणं शरीरं

*(यदा च रावणो जातो दशमुखैकशरीरः। तदा जननी विजृम्भिणी कम्पती सतीत्यर्थः चिन्तयति कस्मै मुखाय क्षीरं पाययामि १]

१ A जेइ B जइ

सहि अच्चभूउं दिट्ठ मइं कण्ठि विलुल्लइ काउ *॥१

स इत्थं पूरयामास । सुतां विस्मृत्य राज्ञा तानि सर्वाणि सत्कृत्य विसृष्टानि ॥

अथ राजा सर्वावसरे चन्द्रशालाभुवि परिभ्रमन्विधृतातपत्रो द्वाःस्थेन विज्ञप्तसुतावृतान्तो नृप-उच्यतामिति तां प्रति प्राह ॥ अथ सा ॥

राजन्भोज कुलप्रदीप निखिलक्ष्मापालचूडामणे
युक्तं संचरणं तवात्र भुवने छत्रेण रात्रावपि ।
मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाविलक्षः शशी
मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् १

इति तद्वाक्यानन्तरं तत्सौन्दर्यापहृतचित्तस्तामुवाह्य भोगिनीं चकार । अथान्यदा यमलपत्रेषु[2] सत्स्वपि सन्धिदूषणोत्पत्तये श्रीभोजराजो गूर्जरदेशविज्ञतां जिज्ञासुः सान्धिविग्राहिककरे कृत्वेमां गाथां भीमं प्रति प्राहिणोत् ॥

---

* कथमपि विरह करालितया कलहान्तरितयेत्यर्थः पतिरुद्गापितो वराकः । हे सखि अत्यद्भुतं दृष्टं मया यतः कण्ठे विलुलति काकस्य । पतिं विना कस्यावलम्बनं करिष्ये इति तया न प्रथमं विचरितमित्यर्थः ॥ १ ॥ ]

१ C D अच्चिजू.

२ [ अन्योन्यमेवं वर्तितव्यामिति व्यवहारः ]

*हेलानिद्दलियगइंदकुम्भपयाडियपयावपसरस्स ।
सिंहस्स मएण समं न विग्गहो नेय सन्धाणं १

इति तदुत्तररूपां गाथां वाच्यमानो भीमः सर्वेषामपि महाकवीनां गाथाबन्धान्विविधान्फल्गुवल्गितांश्चिन्तयन् ।

*अन्धयसुयाण कालो पुहवी भीमो[1] यं निम्मिओ[2] विहिणा ।
जेण सयंपि न गणियं का गणना[3] तुज्झ इक्कस्स१[4]

इति गोविन्दाचार्यविरचितां तां चेतश्चमत्कारिणीं गाथां तस्य प्रधानस्य करे प्रस्थाप्य सन्धिदूषणमपाहरत् ॥ कस्मिन्नप्यवसरे प्रतिहारनिवेदितः कोपि पुरुषः सभां प्रविश्य श्रीभोजं प्रति ॥

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन्कस्य दोषोयम् १

* ( हेलानिर्दलितगजेन्द्रकुम्भप्रकटितप्रतापप्रसरस्य । सिंहस्य मृगेण समं न विग्रहो नैव सन्धानं ॥ १ ॥ )

* ( अन्धकसुतानां कालः पृथिव्यां भीमश्च निर्मितो विधिना । येन शतमपि न गणितं का गणना तवैकस्य ॥ १ )

B १ भीमो पुहवीइ २ D निम्मिअ ३ A गणना ४ C एकस्स

इति तद्वाक्यानन्तरं तदाजन्मदारिद्र्यद्रोहि पारितोषिकं दापयामास ॥ अथ[1] कस्यामपि निशि हिमसमये वीरचर्यया नृपतिः परिभ्रमन्कस्यापि देवकुलस्य पुरः कमपि पुरुषं ॥

शीतेनोद्धुषितस्य[2] माषफलवच्चिन्तार्णवे मज्जतः
शान्तोऽग्निः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता
सत्पात्रप्रतिपादितेव कमला[3] न क्षीयते शर्वरी ॥ १

इति पठन्तं । श्रुत्वा निशान्तमतिवाह्य तं प्रातराहूय पप्रच्छ। कथंभवता निशाशेषेऽत्यन्तशीतोपद्रवः सोढः । सत्पात्रप्रतिपादितेति संकेतपूर्वं समादिष्टं । स्वामिन्मया घनत्रिवेलीबलेन शीतमतिवाह्यते स इति विज्ञपयन् , का तव त्रिवेलीति

---

१ D) अथ तन्नगरनिवासी कोपि द्विजः केवलभिक्षामात्रवृत्तिः कस्मिन्नपि पर्वणि स्नानव्याकुले सकलेपि नगरलोके अलब्धभिक्षया रिक्तपात्र एवागत इति ब्राह्मण्या निर्भर्त्स्यमानः संजातकलहे तां प्रति प्रदत्तप्रहार आरक्षपुरुषैः संबध्य राजमंदिरे नीयमानो राज्ञा पृष्टः सन्नाह । अम्बा तुष्यतीति श्लोकं पपाठ । तदर्थं पण्डितेष्वनवबुध्यमानेषु राज्ञा स्वमनीषया तदभिप्रायं समुपालभ्य तस्मै लक्षत्रये दापिते सति श्लोकार्थं कलहमूलं तदापि दारिद्र्यमूलं नृपो व्याचख्यौ ॥ २ D) वह्नाविलस्य. ३ वसुधा.

भूयोभिहित इदमपाठीत् ।

रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
राजन् शीतं मया नीतं जानुभानुकृशानुभिः १

स इत्थं वदन् राज्ञा लक्षत्रयदानेन परितोषितः ।

धारयित्वा त्वया मानमहो त्यागाध्वनाधुना ।
मोचिता बलिकर्णाद्याः सत्वेतागुप्तिवेश्मनः १

इति सारस्वतोद्गारपूरपरे तत्पारितोषिकदानाक्षमेण राज्ञा सोपरोधं निवारितः । अन्यस्मिन्नवसरे राजा राजपाटिकाया गजारूढः पुरान्तरा संचरन्कमपि रोरं भूमिपतितकणांश्छिन्दन्तमवलोक्य ।

*[नियउयरपूरणम्मि य असमत्था किंपि तेहि जाएहिं ।

इति तेनार्द्धकविना पूर्वार्द्धे प्रोक्ते ।

*[सुसमत्था वि हु न परोवयारिणो तेहि वि नहि किंपि[3] ॥ १ ॥

इति तद्वचनान्ते ॥

* (निजोदरपूरणे येऽसमर्थाः तैर्जातैरपि किं ।

* ( सुसमर्था अपि निश्चयेन ये परोपकारिणो न तैर्जातैरपि किं नाहि किमपि ॥ १

[१ कारागारा. २ दरिद्रं.] ३ D न किंपि.

*परपत्थणापवत्तं मा जणणि जणेसु एरिसं पुत्तं ।
इति तद्वाक्यादनु ।
*मा पुहविं मा धरिज्जसु पत्थणभङ्गो कओ जेहिं२

स इति वदन्कस्त्वमिति राज्ञाभिहितो नगरप्रधानैर्भवद्विविधविद्वद्घटायामपरथा प्रवेशमलभमानोऽनेनैव प्रपञ्चेन स्वामिदर्शनचिकीरयं राजशेखर-
*इति ज्ञापितः ।

तदुचितमहादानैः प्रसादीकृते ।
भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्छितम् ।
तस्मिन्नेव सरस्यकालजलदेनोन्नम्य तच्चेष्टितं
येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते॥१॥

* (परप्रार्थनाप्रवृत्तमीदृशं पुत्रं हे जननि मा जनय।
* (हे मातः हे पृथिवि यैः प्रार्थनाभङ्गः कृतस्तादृशान्पुरुषान्मा धारय ॥ २) १ A मा पुगवि

* १ D इति भाषिणे विप्राय हस्तिनीं ददौ।
पुनः स विप्रः
निर्वाता न कुटी न चाग्निशकटी नापि द्वितीया पटी
वृत्तिर्नारभटी न तुन्दिलपुटी भूमौ च धृष्टा कटी ।
तुष्टिर्नैकघटी प्रिया न वधुटी तेनाप्यहं संकटी
श्रीमद्भोज तव प्रसादकरटी भङ्क्त्वां ममारत्तटी ॥ २ ॥-

इत्यकालजलदराजशेखरोक्तिः । कस्मिन्नपि संवत्सरे वृष्ट्यभावात्कणतृणानामप्राप्त्या स्थानपुरुषैर्भोजागमं ज्ञापितः श्रीभीमश्चितां प्रपन्नो डामरनामानं सन्धिविग्रहिकमादिशत् । यत्किमपि दण्डं दत्वाऽस्मिन्वर्षे श्रीभोज इहागच्छन्निवारणीयः। स इति तदादेशात्तत्र गतोऽत्यन्तविरूपवान्पराचित्तज्ञः श्रीभोजेनेत्यभिदधे[1] ।

यौष्माकाधिपसन्धिविग्रहपदे दूताः कियन्तो वद
मादृक्षा[2] बहवोपि मालवपते ते सन्ति तत्र त्रिधा।
प्रेष्यन्ते[3]ऽधममध्यमोत्तमगुणप्रेक्षानुरूपक्रमा-
त्तेनान्तःस्मितमुत्तरं विदधता धाराधिपो रञ्जितः॥१

- इति श्रुत्वा तेनैकादशसहस्राणि दत्तानि ॥

अथ राजशेखरनामा कविः संध्यायां महाकालप्रसादे सुप्तः पठति

पोतानेतान्नय गुणवति ग्रीष्मकालावसानं
यावत्तावच्छमय रुदतो येन केनाशनेन ।
पश्चादम्भोधररसपरीपाकमासाद्य तुम्बी
कुष्माण्डी च प्रभवति यदा के वयं कुत्र के ॥ १

प्रसन्नेन राज्ञा सर्वस्वदानात्तोषितेन कविनोक्तं भेकैरिति ॥.

१ D) अथैकदा डामरनामा नागरज्ञातीयो द्विजः श्रीभोजपार्श्वे गतो राज्ञोपहासपूर्व २ द्विज त्वादृक्षा. ३ प्रेक्षन्ते

४ C D) रञ्जितः ॥ १ ॥ श्रीभोजराजा गूर्जरोपरि कृतप्रस्थानो-

*इति तद्वचनचातुर्यचमत्कृतो राजा गूर्जरदेशं प्रति प्रयाणपटहदानं चक्रे। प्रयाणावसरे बन्द्योक्तं।

चौलैः[1] क्रोडं पयोधेर्विशति निवसते रन्ध्रमन्ध्रो गिरीन्द्रे
कर्णाटः पट्टबन्धं न भजति भजते गूर्जरो निर्झराणि।
चेदिर्लैलीयतेऽस्त्रैः क्षितिपतिसुभटः कन्यकुब्जोत्र कुब्जो
भोज त्वत्तन्त्रमात्रप्रसरभयभरव्याकुलो राजलोकः॥१

कोणे कौङ्कणकः कपाटनिकटे लाटः कलिङ्गोङ्गणे-
त्वं रे कोशल नूतनो मम पिताप्यत्रोषितः स्थण्डिले।

---

* बाह्यावासे कृतस्नानो भेटितः सनूराज्ञोचे डामराख्यः। जीमडीयाको नापितोऽद्य कल्ये किं करोति। तेनोक्तं। अन्येषां राज्ञां शिरोमुण्डितमेकस्य शिरो जलक्लिन्नमास्ते पश्चान्मुण्डयिष्यतीति भणिते राज्ञा चमत्कृतेन राजभुवने राजविडम्बननाटके चित्रे डामरस्वामी कर्णाटराजश्चाटूनि कुर्वन् दर्शितः। दूतेनोक्तं।

भोजराज मम स्वामी यदि कर्णाटभूपतेः[2]।
कराकृष्टो[3] न पश्यामि कथं मुञ्जशिरः करे॥ १

इति वाक्येन स्मृतपूर्ववैरः गूर्जरदेशं परित्यज्य कर्णाटोपरि प्रयाणं कृतवान्। नृपाग्रे डामरस्योक्तिः।

सत्यं त्वं भोज मार्तण्ड पूर्वस्यां दिशि राजसे।
सूर्योपि लघुतामेति पश्चिमाशावलम्बने॥ १॥

१ A B चौडः २ B D नृपतिः ३ कचाकृष्टं.

इत्थं यस्य विवर्द्धितो निशि मिथः प्रत्यर्थिनां संस्तर-
स्थानन्यासभुवा विरोधकलहः कारानिकेतक्षितौ २

प्रयाणकपटहदापनादनु समस्तराजविडम्बना-
टकेऽभिधीयमाने । सकोपः कोपि भूपः कारागारा-
न्तरास्थितं सुस्थितं तैलिपं भूपमुत्थापयंस्तेनोचे ।
अहमिहान्वयवासी कथमागन्तुकभवद्वचसा निजं
पदमुज्झामीति विहसन्नृपो डामरं प्रति नाटकरसा-
वतारं प्रशंसंस्तेनाभिदधे । देवातिशायिन्यपि रसा-
वतारे धिग्भटस्य कथानायकवृत्तान्तानभिज्ञताम् ।
यतः श्रीतैलिपदेवराजः शूलिकाप्रोतमुञ्जराजशि-
रसा प्रतीयत इति सभासमक्षं तेनोक्ते तन्निर्भ-
र्त्सनसंपन्नमन्युरनन्यसामग्र्या तदैव तिलङ्गदेशं प्र-
ति प्रयाणमकरोत् । अथ तैलिपदेवस्यातिबल-
मायान्तमाकर्ण्य व्याकुलं श्रीभोजं डामरः स-
मायातः कलि[illegible]राजादेशदर्शनपूर्वं भोगपुरे श्री-
भीमं समायातं विज्ञपयामास । तया तद्वार्त्तया
क्षते क्षारनिक्षेपसदृक्षया विलक्षीक्रियमाणः श्रीभो-
जराजो डामरमभ्यधात् । अस्मिन्वर्षे त्वया स्व-
स्वामी कथंचनेहागच्छन्निवार्य इति भूयो भूयः
सदैन्यं भाषमाणे नृपे प्रस्तावविन्नृपाद्धस्तिनीस

हितं हस्तिनमुपायने उपादाय पत्तने श्रीभीमं परितोषयामास । कस्मिंश्चिद्धर्मशास्त्राकर्णनक्षणेऽर्जुनस्य राधावेधमाकर्ण्य किमभ्यासस्य दुष्करमिति विमृशन्सतताभ्यासवशाद्विश्वविदितं राधावेधं विधाय नगरे हट्टशोभां कारयंस्तैलिकसूचिकाभ्यामवज्ञया निराकृतोत्सवाभ्यां श्रीभोजभूपो व्यज्ञप्यत। तैलिकेन चन्द्रशालास्थितेन भूमिस्थितसंकीर्णवदने मृन्मयपात्रे तैलधाराधिरोपणात् सूचिकेन च भूमिस्थितेनोर्ध्वीकृततन्तुमुख आकाशात्पतन्त्याः सूच्या विवरं नियोज्य निजाभ्यासकौशलं निवेद्य नृपं प्रति चेच्छक्तिरस्ति ततः प्रभुरप्येवं करोत्वित्यभिधाय राज्ञो गर्वं खर्वं चक्राते ॥

भोजराज मया ज्ञातं राधावेधस्य कारणम् ।
धाराया विपरीतं हि सहते न भवानिति ॥ १ ॥

विद्वद्भिरिति श्लाघ्यमानो नवनगरनिवेशं कर्तुकामः पटहे वाद्यमाने धाराभिधया पणस्त्रिया-ग्निवेतालनाम्ना पत्या सह लङ्कां गत्वा तं नगरनिवेशमालोक्य पुनः समागतया मन्नाम नगरे दातव्यमित्यभिधाय तत्प्रतिच्छन्दपटं समर्प्य सा धारां नगरीं निवेशयामास । कस्मिन्नप्यहनि स-

नृपः सान्ध्यसर्वावसरानन्तरं निजनगरान्तः परि-
भ्रमन् ॥

*एऊ जम्मु नग्गुहं गिउ भडासिरिखग्गु न भग्गु ।
तिक्खां तुरियां न माणियां गोरी गलि न लग्गु॥१

‡ इति केनापि दिगम्बरेण पठ्यमानमाकर्ण्य
प्रातस्तमाकार्य रात्रिपठितवृत्तान्तसंकेतवशेन श-
क्तिं पृष्टः सन्

देव दीपोत्सवे जाते प्रवृत्ते दन्तिनां मदे।
एकच्छत्रं करोम्येव सगौडं दक्षिणापथम् ॥ २

इति स्वपौरुषमाविः कुर्वन्सेनानीपदेऽभिषिक्तः।
सिन्धुदेशविजयप्रावृत्ते श्रीभीमे स दिगम्बरः समस्त-
सामन्तैः समं समेत्य श्रीमदणहिल्लपुरं भङ्गं कृत्वा
धवलगृहघटिकाद्वारे कपर्दिकान्वापयित्वा जयपत्रं
जग्राह । तदादि कुलचन्द्रेण मुषितमिति सर्वत्र क्षि-
तौ ख्यातिरासीत् । स जयपत्रमादाय मालवम-
ण्डले गतः श्रीभोजाय तं वृत्तान्तं विज्ञपयन्नुक्तो

* एतज्जन्म गतं नग्नोहं भटश्रीखड्गो न भग्नः तीक्ष्णाः स्त्रीकृता-
श्चम्बूलिकादिशय्योपकरणानि च नानुभूतानि देशी० यतो
गौरीगले स्त्रीकण्ठे न लग्नः ॥ १ ॥ !

‡) आउ जम्मु निग्गहं । नग्गहं [ आगर्ं जम्म यद्वागुः। निगूहं ]

भवतेङ्गालवापः कथं न कारितोऽत्रत्यमुदग्राहितं गूर्जरदेशे प्रयास्यतीति[1] श्रीसरस्वतीकण्ठाभरणेन श्रीभोजेनेत्यभिदधे ॥ कदाचिच्चन्द्रातपे उपविष्टः श्रीभोजः संनिहिते कुलचन्द्रे पूर्णचन्द्रमण्डलमवलोकमान इदमपाठीत् ॥

येषां वल्लभया सह क्षणमिव क्षिप्रं क्षपा क्षीयते
तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत्॥

इत्यर्द्धं कविना तेनोक्ते कुलचन्द्रः प्राह ।

अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिनामिन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः३

इति तदुक्तेरनन्तरमेवैकां वराङ्गनां प्रसादीचकार ॥

अथ डामरनामा सन्धिविग्रहिको मालवमण्ड-

---

१ C नवजलभरीया मग्गडा गयणि धडक्कइ मेहु ।
इत्थन्तरि जरि आविसिइ तउ जाणीसिइ नेहु ॥
[ नवजलभरिता मार्गा गगने गर्जति मेघः ।
अत्रान्तरे यद्यागमिष्यासि ततो ज्ञायते स्नेहः ॥ ]

एषां भावि (धर्म)जभया सह राज्ञा तन्निजपुत्रीस्वरूपं दृष्टं प्रातराकार्य गूर्जरदेशोपरि सेनाधिपत्यं ददौ तदा तेनोक्तं । देव दीपेति॥ ततो गूर्जरदेशः समग्रोपि तेन विनाशितः । श्रीपत्तनचतुःपथे कपर्दिका वापितास्तस्यागतस्य राज्ञोक्तं । न कृतं रम्यं । अद्य प्रभृति मालवदेशदण्डः श्रीगूर्जरे यास्यतीति ॥ कपर्दिका मालवकदेशीयनाणकम्॥
। ।

लादायातः श्रीभोजस्य सभां वर्णयन्महान्तमायल्लकं[1] जनयति। तत्र गतश्च श्रीभीमस्यामात्रां रूपपात्रतां वर्णयंस्तद्दिदृक्षातरलितः श्रीभोजस्तमिहानय तत्र मां नयेति वेत्यभ्यर्थ्यमानः। सभादर्शनोत्कण्ठितेन भीमेन तथैवोच्यमानश्च कस्मिन्नपि वर्षे उपायविन्महदुपायनमादाय विप्रवेषधारिणं ताम्बूलकरण्डकवाहिनं श्रीभीमं स गृहीत्वा सदसि गतः प्रणमन्,श्रीभोजेन श्रीभीमानयनवृत्तान्तं व्याहृतः स विज्ञपयांचक्रे। स्वतन्त्राः स्वामिनोऽभिमतं कार्यं केन बलात्कार्यन्ते, इति सर्वथाप्येके दासा देवेन नावधीरणीया[2] इत्यभिधाय, श्रीभीमस्य वयोवर्णाकृतीनां सादृश्यं पृच्छञ्श्रीभोजस्तान्सभासदो लोकानवलोकयन्स्थगीधरं लक्षीकृत्य डामरणेत्यभिदधे। स्वामिन्

इमाकृतिरयं वर्ण इदं रूपमिदं वयः।
अन्तरं चास्य भूपस्य काचचिन्तामणेरिव ॥ १ ॥

इति तेन विज्ञप्ते चतुरचक्रवर्ती श्रीभोजस्तत्सामुद्रिकाविलोकनान्निश्चलदृग्तादृशं नृपं विमृश्योपायनवस्तून्युपनेतुं स सन्धिविग्रहिकस्तं प्राहिणोत्।

---

१ आश्चर्यं. २ न तिरस्कर्तुं योग्याः

तेषु वस्तुषूपनीयमानेषु तद्गुणवर्णनवार्तान्तरव्याक्षेपेण च भूयसि कालविलम्बे संवृत्ते स्थगीवाहको ऽद्यापि कियच्चिरं विलम्बत इति राज्ञा समादिष्टः स तं भीममिति विज्ञपयामास। राजा तदा तदनुपदिकानि सैन्यानि प्रगुणयन् डामरेणाभिदधे। द्वादश २ योजनानां प्रान्ते प्रावहणिका हया घटिकायोजनगामिन्यः करभ्योनया समग्रसामग्र्या श्रीभीमो भुवमाक्रमन्कथं भवता गृह्यते इति विज्ञप्तस्तेन पाणी घर्षयित्वा चिरं तस्थे। अथ श्रीभोजः श्रीमाघपण्डितविद्वत्तां[1] पुण्यवत्तां च सततमाकर्ण्य[2] तद्दर्शनोत्सुकतया राजादेशैः सततं प्रेष्यमाणैः श्रीमालनगराद्धिमसमये समानीय सबहुमानं भोजनादिभिः सत्कृत्य तदनु राजोचितान्विनोदान्दर्शयन्, रात्रावारात्रिकावसरानन्तरं संनिहिते स्वसंनिभे पल्यङ्के माघपण्डितं नियोज्य तस्मै स्वशीतरक्षामुपनीय प्रियालापांश्चिरं कुर्वाणः सुखं सुखेन सुष्वाप। प्रातर्माङ्गल्यतूर्यनिर्घोषैर्विनिद्रं नृपं स्वस्थानगमनाय माघपण्डित आपृष्टवान्। विस्मयापन्नहृदयेन राज्ञा दिने भोजनाच्छादनादिसुखं पृष्टः स क-

१ D कुमुदपण्डितसुतमाघ. २ C आकर्णयन्.

दन्नसदन्नवार्त्ताभिरलं शीतभारेण[1] श्रान्तं विज्ञपयन्निवद्यमानेन राज्ञा कथं कथञ्चिदनुज्ञातः पुरोपवनं यावद्भूभुजानुगम्यमानः माघपण्डितेन स्वागमनप्रसादेन संभावनीयोऽहमिति विज्ञप्तो नृपानुज्ञातः स्वं पदं भेजे । तदनु कतिपयादिनैः श्रीभोजस्तद्विभवभोगसामग्रीदिदृक्षया श्रीश्रीमालनगरं प्राप्तः । माघपण्डितेन प्रत्युद्गमादियथोचितभक्त्याऽऽवर्जितः ससैन्यस्तन्मन्दुरायां ममौ । स्वयं तु माघपण्डितस्य सौधमध्यास्य संचारकभुवं काञ्चनबद्धामवलोक्य स्नानादनु देवतावसरोर्व्यां मणिमरकतकुट्टिमशैवलवल्लरीयुग्जलभ्रान्त्या धौताम्बरीयं संवृण्वन् सौवस्तिकेन[2] ज्ञापितवृत्तान्तस्तदैव तद्देवतार्चानन्तरं निवृत्ते मन्त्रावसरेऽशनसमयसमागतां रसवतीमास्वादमान आकालिकैरदेशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमाणमानसः संस्कृतपयःशालिशालिनीं रसवतीमाकण्ठमुपभुज्य भोजनान्ते चन्द्रशालामधिरुह्य श्रुतादृष्टपूर्वकाव्यकथाप्रबन्धप्रेक्ष्यादीनि प्रेक्षमाणः शिशिरसमयेपि संजाताकस्मिकग्रीष्मभ्रान्त्या संवीतासितस्वच्छवसनस्तालवृन्तकैरनुचैर-

---

१ C शीतरक्षाभारेण. २ स्वामिवत्का सेवकेन.

वीज्यमानोऽमन्दचन्दनालेपनेपथ्यः सुखनिद्रया तां क्षणदां क्षणमिवातिवाह्य प्रत्यूषे शङ्खनिस्वना-द्विगतनिद्रो हिमसमये ग्रीष्मावतारव्यतिकरो माघपण्डितेन ज्ञापितः प्रतिसमयं सविस्मयः क-ति दिनान्यवस्थाय स्वदेशगमनायापृच्छन् स्वयं करिष्यमाणनव्यभोजस्वामिप्रसादप्रदत्तपुण्यो[1] मा-लवमण्डलं प्रति प्रतस्थे। तथा निजजन्मदिने जन-केन नैमित्तिकाज्जातके कार्यमाणे पूर्वमुदितोदित-समृद्धिर्भूत्वा प्रान्ते गलितविभवः किंचिच्चरणयो-राविर्भूतश्वयथुविकारः पञ्चत्वमाप्स्यतीति । नि-मित्तविदा निवेदितां विभवसंभारेण तां ग्रहगतिं निराचिकीर्षुणा माघपित्रा संवत्सरशतप्रमाणे म-नुजायुषि षट्त्रिंशत्सहस्राणि दिनानि भविष्यन्तीति विमृश्य नाणकपरिपूर्णास्तावत्संख्यान् हारकान् कारितनव्यकोशेषु निवेश्य तदधिकां परां भूतिं श-तशः समर्प्य प्रदत्तमाघनाम्ने सुताय कुलोचितां शिक्षां वितीर्य कृतकृत्यमानिना तेन विपेदे । तद-नन्तरमुत्तराशापतिरिव [illegible]साम्राज्यो विद्वज्जने-भ्यः श्रियं तदिच्छया यच्छन्मानैर्मानैरर्थिसार्थं

---

१ तन्नामकग्रन्थस्यापि श्रेयः

कृतार्थयंस्तैर्भोगविधिभिः स्वममानुषावतारमिव द-
र्शयन् विरचितशिशुपालवधाभिधानमहाकाव्यच-
मत्कृतविद्वज्जनः स प्रान्ते पुण्यक्षयात्क्षीणवित्तो वि-
पत्तिपाते स्वविषये स्थातुमप्रभूष्णुः सकलत्रो मा-
लवमण्डले गत्वा धारायां कृतावासः पुस्तकग्रहणका-
र्पणपूर्वकं श्रीभोजात्किंचिद्यदपि द्रव्यमानेयमिति तत्र
पत्नीं प्रस्थाप्य यावत्तदाशया माघपण्डितश्चिरं त-
स्थौ । तावत्तथावस्थां श्रीभोजस्तत्पत्नीं विलोक्य-
ससंभ्रमाशलाकान्यासेन तत्पुस्तकमुन्मुद्य काव्य-
मद्राक्षीत् ॥

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ १ ॥

अथ काव्यार्थमवगम्य का कथा ग्रन्थस्य केव-
लमस्यैव काव्यस्य विश्वम्भरामूल्यमल्यं समयो-
चितस्यानुच्छिष्टस्य हीशब्दस्य पारितोषिके क्षिति-
पतिर्लक्षद्रव्यं वितीर्य तां विससर्ज । सापि ततः सं
चरन्ती विदितमाघपण्डितपत्नी कैश्चिद्भिरर्थिभिर्याच्य-
माना तत्पारितोषिकं तेभ्यः समस्तमपि वितीर्य

यथावस्थिता गृहमुपेयुषी तद्वृत्तान्तं विज्ञापनापूर्वं किञ्चिच्चरणस्फुरच्छोफाय पत्ये निवेदयामास । अथ त्वमेव मे शरीरिणी कीर्त्तिरिति श्लाघमानस्तदा स्वगृहमागतं कमपि भिक्षुं वीक्ष्य भुवने तदुचितं किमपि देयमपश्यन् संजातनिर्वेद इदमवादीत् ॥

अर्था न सन्ति न च मुञ्चति मां दुराशा
दानद्धि सङ्कुचति दुर्ललितः करो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ॥ १ ॥
दारिद्र्यानलसंतापः शान्तः संतोषवारिणा ।
दीनाशाभङ्गजन्मा तु केनायमुपशाम्यतु ॥ २ ॥
व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते ।
पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥ १ ॥
न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं
लभन्ते कर्माणि क्षितिपरिवृढान्कारयति कः[1] ।
अदत्त्वापि ग्रासं ग्रहपतिरसावस्तमयते
क्व यामः किं कुर्मो गृहिणि गहनो जीवितविधिः २
क्षुत्क्षामः पथिको मदीयभवनं पृच्छन्कुतोप्यागतः

[1] D द्विज.

तत्किं गेहिनि किंचिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः ।
वाचास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः
स्थूलस्थूलविलोललोचनजलैर्बाष्पाम्भसां बिन्दुभिः
॥ ३ ॥

इति तद्वाक्यान्त[1] एव स माघपण्डितः[2] पञ्चत्व-मवाप । प्रातस्तं वृत्तान्तमवगम्य श्रीभोजेन श्रीमालेषु सजातिषु धनवत्सु सत्सु तस्मिन्पुरुषरत्ने विनष्टे क्षुधाबाधिते सति भिल्लमाल इति तज्ज्ञातं[*] नाम[3] निर्ममे ॥

पुरा समृद्धिविशालायां विशालायां पुरि मध्यदेशजन्मा काश्यपगोत्रः सर्वदेवनामा द्विजो निवसन् जैनदर्शनसंसर्गात्प्रायः प्रशान्तमिथ्यात्वो धनपाल-शोभनपुत्रद्वयेनान्वितः कदाचिदागतान् श्रीवर्द्धमान-सूरीन्गुणानुरागान्निजोपाश्रये निवास्य निर्द्वन्द्वभक्त्या परितोषितान्सर्वज्ञपुत्रानिति धिया तिरोहितं निजपूर्वजनिधिं पृच्छंस्तैर्वचनच्छलेनार्द्धविभागं याचितः संकेतनिवेदनाल्लब्धनिधिस्तदर्द्धं यच्छंस्तैः पुत्रद्वयादर्द्धं याचितो ज्यायसा धनपालेन मिथ्या-

१ B C गजद्वाण्प. २ क सार्थः पुनर्दिश इति वाक्यान्ते ३ इति ज्ञानात्तज्ज्ञातेर्नाम

* तेन कर्मणा प्रसिद्धं

त्वान्धमतिना जैनमार्गनिन्दापरेण निषिद्धः कनीयसि शोभने कृपापरः स्वप्रतिज्ञाभङ्गपातकं तीर्थेषु क्षालयितुमिच्छुः प्रतितीर्थं प्रतस्थे। अथ पितृभक्तेन शोभननाम्ना लघुपुत्रेण तं तदाग्रहान्निषिध्य पितुः प्रतिज्ञां प्रतिपालयितुमुपात्तव्रतः स्वयं तान्गुरूननुससार। अभ्यस्तसमस्तविद्यास्थानेन[1] धनपालेन श्रीभोजप्रसादसंप्राप्तसमस्तपण्डितप्रकृष्टप्रतिष्ठेन निजसहोदरामर्षभावाद्द्वादशाब्दीं यावत्स्वदेशनिषिद्धजैनदर्शनप्रवेशेन तद्देशोपासकैरत्यर्थमभ्यर्थनया गुरुपुरुषेष्वाहूयमानेषु सकलसिद्धान्तपारावारपारदृश्वा स शोभननामा तपोधनो गुरूनापृच्छ्य तत्र प्रयातो धारायां प्रविशन् पण्डितधनपालेन राजपाटिकायां व्रजता तं सहोदरमित्यनुपलक्ष्य सोपहासं गर्दभदन्त भदन्त नमस्ते इति प्रोक्ते कपिवृषणास्य वयस्य सुखं ते इति शोभनमुनेर्वचसान्तश्चमत्कृतो मया नर्मणापि नमस्ते इत्युक्तेऽनेन तु वयस्य सुखं ते इत्युच्चरता वचनचातुर्यान्निर्जितोऽस्मीति। तत्कस्यातिथयो यूयमिति धनपालस्यालापैर्भवत एवातिथयो वयमिति शोभनमुने-

---

१ पठितपुराणन्यायमीमांसाधर्मशास्त्रवेद४वेदाङ्गेन ६.

र्वाचमाकर्ण्य वटुना सह निजसौधे प्रस्थाप्य तत्रैव स्थापितः । स्वयं सौधे समागत्य धनपालः प्रियालापैः सपरिकरमपि तं भोजनाय निमन्त्रयंस्तैः प्रासुकाहारसेवापरैर्[1]निषिद्धः । बलाद्दोषहेतुं पृच्छन्

भजेन्माधुकरीं वृत्तिं मुनिर्म्लेच्छकुलादपि ।
एकान्नं नैव भुञ्जीत बृहस्पतिसमादपि ॥ १ ॥

तथाच । जैनसमये दशवैकालिके ॥

*महुकारसमा बुद्धा जे भवन्ति अणिस्सिया ।
नाणापिण्डरया दन्ता तेण वुच्चन्ति साहुणो ॥ १

इति स्वसमयपरसमयाभ्यां निषिद्धं कल्पितं[2]माहारं परिहरन्तः शुद्धाशनभोजिनो वयमिति तच्चरित्रचित्रितमनाः सतुष्णीकमुत्थाय सौधमाप । मज्जनारम्भे गोचरचर्यया समागतं तन्मुनिद्वन्द्वमवलोक्य सिद्धेऽन्नपाके तद्ब्राह्मण्योपढौकिते दधिमुनिभ्यां, व्यतीतकियद्दिनमेददिति पृच्छ्यमाने, धनपालः किमत्र पूतराः सन्तीति सोपहासमभिदधानो, व्य-

* मधुकरसमा भ्रमरवृत्तयः, बुद्धा ये भवन्ति, अनिश्रिता मिश्रादोषरहिताः, नानापिण्डरता दान्ताः तेन हेतुना साधव उच्यन्ते ॥

१ जिनोक्तजीवहिंसारहिताहारसेवनतत्परैः २ कमपि मान्वादिकमुद्दिश्य निष्पादितं.

तीतदिनद्वयमेदिति ब्राह्मण्या निर्णीय प्रोक्तं ताभ्यां पूतराः सन्तीत्यत्रेत्यभिहिते स्नानासनात्तद्दर्शनार्थमुत्थाय तत्रागतः सन्, स्थालेऽधिरोपितदधिसंनिधौ यावद्यावकपुम्भेऽधिरूढैस्तद्वर्णजन्तुभिर्दधिपिण्ड इव पाण्डुरतामालोक्य जिनधर्मे जीवदयाप्राधान्यं तत्रापि जीवोत्पत्तिज्ञानवैदग्ध्यं ॥ यतः॥

*मुग्गमासाइपमुहं[2] विदिलं कच्चम्मि[3] गोरसे पडइ।
ता तसजीवुप्पत्ती भणन्ति दहिए तिदिणुव्वरिए[4] १

तज्जिनशासने एवेति निश्चित्य शोभनमुनेः शोभनबोधात्सम्यक्त्वप्रतिपत्तिपुरःसरं सम्यक्त्वं भेजे। कर्मप्रकृत्यादिजैनविचारग्रन्थेषु प्रकृत्या प्राज्ञः परं प्रावीण्यमुद्वहन्, प्रातः प्रातर्[5]जिनार्चावसरप्रान्ते

कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहो
मतिवितरता मोहेनाहो मयानुसृतः पुरा।
त्रिभुवनपतिर्बुद्ध्याराध्योऽधुना स्वपदप्रदः।
प्रभुरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः॥ १ ॥

---

[ * मुद्गमाषादिप्रमुखं द्विदलं अपक्वे गोरसे पतति तदा त्रसजीवोत्पत्तिं भणन्ति दधि त्रिदिनोद्धरिते च ]

१ सालक्तककार्पासतूलवर्तिकायामित्यर्थः    २ (° पमुहं.

३ कच्चम्मि  ४ तिदिणुव्वरि  ५ प्रातिप्रातः

*सव्वत्थ[1] अत्थि धम्मो जा मुणियं जिन न सासणं तुम्ह ।
कणगाउराण कणगुव्व[2] सासियपयमलम्भमाणाणं ॥१॥

देशाधीशो ग्राममेकं ददाति
ग्रामाधीशः क्षेत्रमेकं ददाति ।
क्षेत्राधीशः शिम्बिकाः[3] संप्रदत्ते
सार्वः[4] तुष्टः संपदं स्वां ददाति ॥ १ ॥

इत्यादीनि वाक्यानि पठन्स धनपालः
कदाचिन्नृपेण सह मृगयां नीतो धनपालोऽभिहितः
किं कारणं नु धनपाल[5] मृगा यदेते
व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः ।
देव त्वदस्त्रचकिताः श्रयितुं स्वजाति-
मेके मृगाङ्कमृगमादिवराहमन्ये ॥ १ ॥

राज्ञा बाणेन मृगे विद्धे सति तद्वर्णनाय विलोकितमुखो धनपालः प्राह ।

---

* सर्वत्र धर्मोऽस्ति यावत् ज्ञातं हे जिन न शासनं तव । कनकातुराणां कनकमिव श्वसितपदमलभमानां ॥ यथा धत्तूररसमत्ताः सर्वत्र कनकं पीतवर्णं पश्यन्ति यतः स्वस्य धवलपदं शुद्धपदं न प्राप्ता विपरीतं पश्यन्तीत्यर्थः। यद्वा श्वासितपदं विश्वासयोग्यं स्थानं यामुणियं मात्शुग्संवर्मिति वा (घ) ]

१ C सव्वत्थ २ कणगं व. ३ A सैनिकां B शाकमात्रं
४ सर्वज्ञः ५ B C कविराज.

रसातलं यातु तवात्र पौरुषं
कुनीतिरेषा शरणो[1] ह्यदोषवान् ।
निहन्यते यद्बलिनापि दुर्बलो
हहा महाकष्टमराजकं जगत् ॥ २ ॥

इति तन्निर्भर्त्सनात्क्रुद्धो नृपः किमेतदित्यभिदधाने

[2]वैरिणापि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् ।
तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ॥ १ ॥

इत्यूचेऽतोऽद्भुतसंजातकृपेण नृपेण धनुर्बाणभङ्गमङ्गीकृत्याजीवितान्तं संन्यस्तमृगयाव्यसनेन पुरं प्रत्यागच्छता तत्र यज्ञमण्डपे यज्ञस्तम्भनियन्त्रितच्छागस्य दीनां गिरमाकर्ण्य किं पशुरसौ व्याहरतीत्यादिष्टः स धनपालोऽवधेहीति प्राह ॥

नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गं याति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥ १ ॥

इति तद्वाक्यानन्तरं राज्ञा किमेतदिति भूयोभियुक्तः ।

१ शरणागतः । २ ( अत्र धनपालः । रसातलमित्यादि० तन्निर्भर्त्सनात्क्रुद्धो नृपः किमेतदित्यभिदधानः वैरिणोपि

यूपं कृत्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥ २ ॥
सत्यं यूपं तपो ह्यग्निः कर्माणि समिधो[1] मम ।
अहिंसामाहुतिं दद्यादेवं यज्ञः सतां मतः[2] ॥ ३ ॥

इत्यादि शुकसंवादोदितानि[3] वचांसि नरेन्द्रस्य पुरतः पठन् हिंसाशास्त्रोपदेशिनो हिंसकप्रकृतीन्ब्राह्मणरूपेण राक्षसांस्ताञ्ज्ञापयन्नृपमहर्द्धर्माभिमुखं चकार ॥ अथ कस्मिन्नप्यवसरे नरेश्वरः सरस्वतीकण्ठाभरणप्रासादे व्रजन्सदा सर्वज्ञशासनप्रशंसापरं पण्डितं धनपालमालपत् । सर्वज्ञस्तावत्कदाचिदासीत्तद्दर्शने साम्प्रतं कश्चिज्ज्ञानातिशयोस्तीत्यभिहिते, अर्हत्कृतेऽर्हच्चूडामणिग्रन्थे[4] विश्वत्रयस्यत्रिकालवस्तुविषयस्वरूपपरिज्ञानमद्यापि विद्यत इति तेनोक्ते, त्रिद्वारमण्डपे स्थितः कस्मिन्द्वारेऽस्माकं निर्गम इति शास्त्रकलङ्कारोपणोद्यते नृपे बुद्धिमात्रा त्रयोदशीति पाठं सत्यापयता भूर्जपत्रे नृपप्रश्ननिर्णयमालिख्य मृण्मयगोलके निधाय च

१ C प्राणाः समिधयो २ एष यज्ञः सनातनः ३ श्रुतिसंवाद० ४ D) अर्हन्नश्रीचूडामणिनामानि. (५ निर्णयस्तु बुद्धिमात्रगम्य इति लोकोक्तिः, तत्स्थानेऽधुना सर्वसिद्धा त्रयोदशीति ज्योतिर्विदः ।.

छगिकाधरस्य तं समर्प्य देव पादोऽवधार्यतामिति नृपं प्राह । नृपस्तद्बुद्धिसंकटे निपतितं स्वं मन्यमान एतद्द्वारत्रयस्य मध्यात्किमपि निर्णीतं भविष्यतीति विमृश्य सूत्रभृद्भिर्मण्डपपद्मशिलातलमपनीय तन्मार्गेण निर्गत्य तं गोलकं भित्वा तेष्वक्षरेषु तमेव निर्गमनिर्णयं वाचयंस्तत्कौतुकेनाकलचित्तः श्रीजिनशासनमेव प्रशशंस ।

तथाहि ॥

द्वाभ्यां यन्न हरिस्त्रिभिर्न च हरः स्रष्टा न चैवाष्टभि-
र्यन्न द्वादशभिर्गुहो न दशकद्वन्द्वेन लङ्कापतिः ।
यन्नेन्द्रो दशभिः शतैर्न जनता नेत्रैरसंख्यैरपि
तत्प्रज्ञानयनेन पश्यति बुधश्चैकेन वस्तु स्फुटम् ॥१

अथ धनपालः ऋषभपञ्चाशिकास्तुतिं निर्माय, सरस्वतीकण्ठाभरणप्रासादे स्वनिर्मितप्रशस्तिपट्टिकां राज्ञे कदाचिद्दर्शयामास[1] तत्र ।

[2]अभ्युद्धृता वसुमती दलितं रिपूरः
क्रोडीकृता बलवता बलिराज्यलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
जन्मत्रये यदकरोत्पुरुषः पुराणः ॥ १ ॥

१ (१ पट्टिकायां कदाचिन्नृपः (२ खण्डप्रशस्तावपिदम्

काव्यमिदं निर्वर्ण्य पारितोषिके तस्याः पट्टिकायाः काञ्चनकलशं ददौ नृपः। तस्मात्प्रासादादपसरंस्तदीयद्वारखत्तके[1] रत्या सह हस्ततालदानपरं स्मरं मूर्त्तिमन्तमालोक्य नृपेण हासहेतुं[2] पृष्टः पण्डितः प्राह ।

स एव भुवनत्रयप्रथितसंयमः शंकरो
बिभर्त्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥ १

*अन्नदिणे सिवभवणे दुवारदेसे निए वि भङ्गिगणं ।
किं दुब्बलो पलोइअ निवपुट्ठो भणइ धणपालो २

दिग्वासा यदि तत्किमस्य धनुषा तच्चेत्कृतं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं पुनर्द्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमहो पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरापिनद्धपरुषं[3] धत्तेऽस्थिशेषं वपुः १

[4]पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति ।

---

* अन्यदिने शिवभवने द्वारदेशे निजेपि भृङ्गिगणं । ( वीक्ष्य )
किं दुर्बलः प्रलोकयते एवं नृपपृष्टो भणति धनपालः ॥ ३ ॥

१ प्रवेशविशेषे. (२ C D हास्य.) ३ घननाडीनिबद्धकार्कश्यं.
४ गोवर्द्धनसप्तशत्यामिदम्.

अङ्कुरित इव मनोभूर्यस्मिन्भस्मावशेषोपि ॥ ३

अमध्यमश्नाति विवेकशून्या
स्वनन्दनं कामयतेऽतिसक्ता ।
खुराग्रशृङ्गैर्विनिहन्ति जन्तून्
गौर्वन्द्यते केन गुणेन राजन् ॥ ४ ॥

पयःप्रदानसामर्थ्याद्वन्द्या चेन्महिषी न किम् ।
विशेषो दृश्यते नास्या महिषीतो मनागपि ॥ ५

इत्यादिभिः प्रसिद्धासिद्धसारस्वतोद्गारैर्नृपं रञ्जयन् यावदास्ते तावत्कोपि सांयात्रिको द्वाःस्थनिवेदितः सभां प्रविश्य नृपं नत्वा मदनपट्टिकायां[1] प्रशस्तिकाव्यानि दर्शयामास । नृपेण तल्लाभस्थानके पृष्टे स एवमवादीत् । नीरधावकस्मादेव मम वाहने स्खलिते निर्यामकैः शोध्यमाने समुद्रे तन्मग्नं[2] शिवायतनमालोक्य परितः परिस्फुरज्जलमप्यन्तः सलिलविकलमवलोक्य कस्यामपि भित्तौ वर्णान्निर्वर्ण्य च तज्जिज्ञासया मदनपट्टिकां[3] तत्र प्रस्थाप्य तत्कान्ताक्षरमयी[4] पट्टिकेयमिति नृपतिर्निशम्य तदुपरि मृन्मयीं पट्टिकां नियोज्य तत्र

---

१ मेणपट्टीति लोकोक्तौ.

२ B) तन्निमग्नं. ३ मदनमयपट्टिकायां ४ तत्संकेताक्षरमयी.

पतितान्[1]वर्णान्पण्डितैर्वाचयामास ॥

आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नते-
रस्मत्संकथयैव पार्थिवसुतः सम्प्रत्यसौ लज्जते ।
इत्थं खिन्न इवात्मजेन यशसा दत्तावलम्बोम्बुधे-
र्यातस्तीरतपोवनानि तपसे वृद्धो[2] गुणानां गणः १

देवे दिग्विजयोद्यते धृतधनुःप्रत्यर्थिसीमन्तिनी-
वैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति ।
आस्तामन्यनितम्बिनी रतिरपि[3] त्रासात्स पार्श्वे करे
भर्तुर्हर्तुमशन्मदान्धमधुपीनीलीनिचोलं* धनुः २

चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्ट-
व्याकृष्टं निःश्वसन्त्यः पृथु[4]नयनघटीयन्त्रमुक्ताश्रु-
धारम् ।
नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेतत्[5]
देव त्वद्वैरिनार्यः स्तनकलशयुगेनाऽविरामं[6] वहन्ति ३

इति संपूर्णेषु काव्येषु वाच्यमानेषु ॥

अयि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ।

अस्य काव्यस्योत्तरार्द्धं छिन्नपादिभिः[7] परःशतै-

---

* भ्रमरीश्यामिकाप्रच्छदपटमिव यस्य तत्पुण्यं

१ A B विपरीतान्. (२ वृद्धिं प्राप्तो जरठश्च) ३ D रतिरति.
४ मृदु. ५ एतत्. ६ अविरामं. ७ छिन्नपदसंपादनशीलैः

रपि पण्डितैः परिपूर्यमाणमपि विसंवदतीति राज्ञा धनपालपण्डितः पृष्टः ।

हरशिरसि शिरांसि यानि रेजु-
र्हरिहरितानि लुठन्ति गृध्रपादैः ॥ १ ॥

इदमेवोत्तरार्द्धं संवदतीति नृपेणोक्ते सति स पण्डितः प्रोवाच । यदि गुम्फार्थाभ्यां श्रीरामेश्वरप्रशस्तिभित्ताविदं न भवति तदतःपरमाजीवितान्तं कवित्वस्य संन्यास एवेति तत्प्रतिश्रवसमकालमेव यानपात्रे निर्यामकान्निक्षेप्यावगाह्यमाने नीरधौ षड्भिर्मासैस्तं प्रासादमासाद्य पुनर्मदनपट्टिकायां न्यस्तायामिदमेवोत्तरार्द्धमागतमालोक्य तस्मै तदुचितं पारितोषिकं प्रसादीचकार ॥ इति खण्डप्रशस्तेर्यथाश्रुतानि बहूनि काव्यानि मन्तव्यानि ॥

कदाचिद्राज्ञा सेवाश्लथतां पृष्टः, स्वं[1] पण्डितस्तिलकमञ्जरीगुम्फवैयग्र्यं जगौ । शिशिरयामिन्याश्चरमयामे निर्विनोदत्वात्तां प्रथमादर्शप्रतिमानीय पण्डितेन व्याख्यायमानां तिलकमञ्जरीकथां वाचयंस्तद्रसनिपातभीरुः पुस्तकस्याधः कच्चोलकयुतसुवर्णस्थालस्थापनापूर्वं तां समाप्य तच्चित्रकविताचि-

१ G D सः

म्रीयमाणचित्तो नृपः पण्डितं प्राह । मामत्र कथानायकं कुर्वन् विनतायाः पदेऽवन्तीमारोपयन् शक्रावतारतीर्थस्य पदे महाकालमाकलयन् यद्याचसे तत्तुभ्यं ददामीत्यभिदधाने नृपे खद्योतप्रद्योतनयोः सर्षपकनकाचलयोः काचकाञ्चनयोः धत्तूरकल्पपादपयोरिव तेषां महदन्तरमित्युच्चरन्

*दोमुहय निरक्खर लोहमइय[1] नाराय तुज्झ किं[2] भणिमो ।

गुञ्जाहि समं कणयं तोलन्तु न गउसि पायालं १

इत्याक्रोशपरे तस्मिन्नजाज्वल्यमानेऽग्नौ श्रीभोजे तां मूलप्रतिमिन्धनीचकार। अथ स द्विधा निर्वेदभाग् द्विधाऽवाङ्मुखो निजसौधपश्चाद्भागे जीर्णमञ्चाधिरूढो निःश्वसन् भृशं सुष्वाप । वालपण्डितया तत्सुतया सभक्तिकमुत्थाप्य स्नानपानभोजननिर्मापणानन्तरं तिलकमञ्जरी प्रथमादर्शलेखदर्शनात्[3] संस्मृत्य ग्रन्थस्यार्द्धं लेखयांचक्रे तदुत्तरार्द्धं नूतनीकृत्य ग्रन्थः समर्थितः ॥

---

* रे द्विमुखक निरक्षर लोहमय नाराचतुल्य त्वां किं भणामः गुञ्जाभिः समं कनकं तोलयन् न गतोऽसि पाताले ।

१ A लोहमयी २ C किंत्तिय. ३ C D प्रथमादर्शलेखनात्

अन्यदा भोजसभायां काव्यमिदमुक्तं तेन ।
धाराधीश धरामहीशगणने कौतूहलीयानथं
वेधास्त्वद्गणनां चकार खटिकाखण्डेन रेखां दिवि ।
सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमिधवा-
भावात्तत्त्यजति स्म सोयमवनीपीठे तुषाराचलः १
अपरपण्डितैरस्मिन्काव्ये उपहसिते धनपालेनोक्तम्
शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।
वस्तु प्रस्तुतमेव किंचन वयं ब्रूमस्तथाप्युच्चकै-
र्लोकोयं हसति प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥

एकदा राजन्महाभारती कथा श्रूयतामित्युक्ते प-
ण्डितं प्रति परमार्हतेन तेन प्रत्युक्तं
कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नेतारः किल पञ्च गोलकसुताः कुण्डाः* स्वयं पा-
ण्डवाः ।
तेमी पञ्च समानजातय इति ख्यातास्तदुत्कीर्त्तनं
पुण्यं स्वस्त्ययनं भवेद्यदि नृणां पापस्य कान्या
गतिः ॥ २ ॥

शोभनमुनेश्चतुर्विंशतिका[1] स्तुतिः प्रतीतैव[2] ॥

(* अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः)

१ B D तु शोजनचतु. २ धनपालस्य धनपालपञ्चाशिकाविद्याने.

अधुना किमपि प्रबन्धादि क्रियमाणमास्ते नृपेणेत्युक्ते धनपालः प्राह ।

आरनाल[1]गलदाहशङ्कया

मन्मुखादपगता सरस्वती ।

तेन वैरिकमलाकचग्रह—

व्यग्रहस्त न कवित्वमस्ति मे ॥ १ ॥

वचनं धनपालस्य चन्दनं मलयस्य च ।

सरसं हृदि विन्यस्य कोभून्नाम न निर्वृतः ॥ १ ॥

अन्यदा सर्वाण्यपि दर्शनानि एकत्राहूय मुक्तिमार्गे पृष्टे ते स्व२दर्शनपक्षपातं ब्रुवाणाः सत्यमार्गजिज्ञासयैकीक्रियमाणाः षाण्मासीमवधीकृत्य श्रीशारदाराधनतत्पराः । कस्या अपि निशः[2] शेषे जागर्मीति व्याहृति[3]पूर्वमुत्थाप्य[4] सा नृपं ॥

श्रोतव्यः सौगतो धर्मः कर्त्तव्यः पुनरार्हतः ।

वैदिको व्यवहर्त्तव्यो धातव्यः परमः शिवः ॥ १ ॥

अथवा धातव्यं पदमक्षयं । श्लोकममुं राज्ञे दर्शनेभ्यश्च समादिश्य श्रीभारती तिरोदधे ।

अहिंसालक्षणो धर्मो मान्यादेवी च भारती[5] ।

---

१ आरनालं काञ्जिकमुष्णोदकं वा उपदंशकं वा

२ C निशा. ३ C D व्याहृतः ४ स्तुत्या. ५ G D सरस्वती.

ध्यानेन मुक्तिमाप्नोति सर्वदर्शनिनां मतम्[1] ॥ २ ॥
इति श्लोकयुग्मं[2] निर्माय नृपाय निरपायनिर्णयं प्राहुः ॥

अथ तन्नगरनिवासिनी शीताभिधाना रन्धनी कमपि विदेशवासिनं कार्पटिकं सूर्यपर्वणि जलाश्रये कङ्गुणीतैलमास्वाद्य गृहमुपेत्य पाकप्राशनमुपादाय[3] तद्वमनाद्विपन्नमालोक्य[4] सद्रव्यमित्युत्पद्यमानकलङ्कशङ्काकुलतया पश्चात्ताय तद्वमनमेव[5] बुभुजे । तस्मिन्स्थिरे प्रादुर्भूत[6]प्रातिभवैभवा विद्यात्रयीं रघुवात्स्यायनकामशास्त्रचाणाक्यनीतिशास्त्रमीपत्सम[7]भ्यस्य च नवयौवनया विजयाभिधानया विदुष्या स्वसुतया सार्द्धं श्रीभोजस्य सदः शृङ्गारयन्ती श्रीभोजं प्रति प्राह ॥

शौर्य[8] शत्रुकुलक्षयावधि यशो ब्रह्माण्डभाण्डावधिस्त्यागस्तर्कुकवाञ्छितावधिरियं[9] क्षोणी समुद्रावधिः।
श्रद्धा पर्वतपुत्रिकापतिपदद्वन्द्वप्रमाणावधिः

---

१ B D मुक्तिमार्गः स्यादेवं २ D युग्मश्लोकमुक्त्वा देवी निरगच्छत् ३ उपनीय. ४ कार्पटिकं पाकाय तस्या गृहेऽन्नं कारयित्वा निशि घृतकुपिकाव्यत्ययेन काङ्गुणीतैलं परिवेषितं तं विपन्नं विलोक्य ५ तदशनमेव. ६ C D प्रभूत. ७ त्रयीमापन्. ८ लोकोत्सैा त्यागडो ९ रिति.

श्रीमद्भोजमहीपतेर्निरवधिः शेषो गुणानां गणः ॥१

अथ विनोदप्रियेण राज्ञा कुचवर्णनाय नियुक्ता[1] विजया प्राह ॥

उन्नाहश्चिबुकावधिर्भुजलतामूलावधिः संभवो
विस्तारो हृदयावधिः कमलिनीसूत्रावधिः संहतिः।
वर्णः स्वर्णकथावधिः[2] कठिनता वज्राकरक्ष्मावधि-
स्तन्वङ्ग्याः स्तनमण्डले यदपरं[3] लावण्यमस्तावधि १

इति तद्वर्णनाकर्णनाद्[4] कविना राज्ञा ॥

किं वर्ण्यते कुचद्वन्द्वमस्याः कमलचक्षुषः ।

तयोक्तम्

सप्तद्वीपकरग्राही भवान् यत्र करप्रदः ॥ २

राज्ञा.

प्रहतमुरजमन्द्रध्वानवद्भिः पयोदैः
कथमलिकुलनीलैः सैव दिग् संप्ररुद्धा ।

तयोक्तम्

प्रथमविरहखेदम्लायिनी यत्र बाला
वसति नयनवान्तैरश्रुभिर्धौतवक्त्रा ॥ ३ ॥

राज्ञा.

---

१ अनुयुक्ता २ A B कषावधिः ३ D कुचमण्डले किमपरं
४ (G D) तद्वर्णनाकर्णनात्

सुरताय नमस्तस्मै जगदानन्ददायिने ।
इति प्रोक्ते ॥
आनुषङ्गि फलं यस्य भोजराज भवादृशाः ॥ १ ॥
इति विजययोक्ते राजा सत्रपमधोमुखं[1] तस्थौ।
ततो राजा तां भोगिनीं चक्रे
अन्यदा तया जालान्तरे, चन्द्रकरस्पर्शेऽपाठि ।
अलं कलङ्कशृङ्गार करस्पर्शनलीलया ।
चन्द्र चण्डीशनिर्माल्यमसि न स्पर्शमर्हसि ॥ १ ॥
इत्यत्र बहु वक्तव्यं परंपरया तत्तु ज्ञातव्यम् ॥
इति शीतां[2]पण्डिताप्रबन्धः ॥
॥ अथ मयूरबाणाभिधानौ भावुकशालकौ पण्डितौ निजविद्वत्तया मिथः स्पर्द्धमानौ नृपसदसि लब्धप्रतिष्ठावभूतां । कदाचिद्बाणपण्डितो जा[3]मिमिलनाय तद्गृहं गतो निशि द्वारप्रसुप्तो भावुके[4]नानुनीयमानां जामिं निशम्य तत्र दत्तावधान इत्यशृणोत् ॥
गतप्राया रात्रिः कृशतनुशशी शीर्यत इव
प्रदीपोयं निद्रावशमुपगतो घूर्णित इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो

१ C D मुखः २ सीता ३ कन्या ४ जामात्रा ५ इमां

इति भूयो भूयस्तेन त्रिपदीमुदीर्यमाणामाकर्ण्य ।
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् । १

इति भ्रातृमुखात्तूर्यं पदमाकर्ण्य क्रुद्धा सा सत्रपा च कुष्ठी भवेति तं भ्रातरं शशाप । इति पतिव्रताव्रतप्रभावात्तदात्वप्रभृतिरोगोभूत्[1] । प्रातः शीतरक्षापिहिततनुर्नृपसभायातो मयूरेण मयूरेणेव कोमलगिरा वरकोढीति[2] तं प्राकृतशब्दे प्रोक्ते चतुरचक्रवर्ती नृपो बाणं सविस्मयं प्रेक्ष्यमाणस्तेन[3] प्रस्तावान्तरे देवताराधनोपायश्चेतस्यवतारयांचक्रे[4] बाणस्तु सापत्रपस्तत[5] उत्थाय नरगसीमानि स्तम्भमारोप्य खदिराङ्गारपूर्णमधःकुण्डं विधाय स्तम्भाग्रवर्त्तिनि सिक्कके[6] स्वयमाधिरूढः सूर्यस्ततो प्रतिकाव्यप्रान्ते सिक्ककपदं छुरिकया छिन्दन् पञ्चभिः काव्यैस्तेन पञ्चसु पदेषु छिन्नेषु सिक्काग्रे विलग्नः षष्ठेन काव्येन प्रत्यक्षीकृतभानुस्तत्प्रसादात्सद्यः संजातजात्यकाञ्चनकायः[7]। अन्यस्मिन्नहनि स सुवर्णचन्दनावलिप्ताङ्गः संवीतसितदिव्यवसनः समाजगाम । तद्वपुःपाटवं पश्यता नृपेण सूर्यवरप्रसादं म-

---

१ C D तदात्वे प्रसूतप्रजूनरोगः २ B वरकोढी D बकोढी ३ ततः
४ C चिन्तयांचक्रे ५ सत्रपः ६ शिक्यके ७ कायकान्तिः

यूरे विज्ञपयति बाणो बाणनिभया गिरा तं मर्मणि विव्याध । यदि देवताराधनं[1] सुकरं तदा त्वमपि किमपीदृक् चित्रमाविःकुरु । इत्यभिहिते तेन मयूरेण तं प्रति प्रतिवचः संदधे । निरामयस्य किमायुर्वेदाविदा तथापि तव वचः सत्यापयितुं निजपादौ च पाणी छुर्या विदार्य त्वया षष्ठे काव्ये सूर्यः परितोषितोऽहं तु पूर्वस्य काव्यस्य षष्ठेऽक्षरे भवानीं परितोषयामीति प्रतिश्रुत्य सुखासनमासीनश्चण्डिकाप्रासादपश्चाद्भागे निविष्टो माभ्राङ्क्षीर्विभ्रममिति षष्ठक्षरे प्रत्यक्षीकृतचण्डिकाप्रसादात्प्रत्यग्रप्रथमानवपुःपल्लवः स्वसन्मुखं च तत्प्रासादमालोक्याभिमुखागतैर्नृपतिप्रमुखराजलोकैः कृतजयजयारवो महता महेन पुरं प्राविक्षत् । [2]एतस्मिन्नवसरे मिथ्यादृशां शासने विजयिनि सम्यग्दर्शनद्वेषिभिः कैश्चित्प्रधानपुरुषैर्नृपोऽभिदधे। यदि जैनमते कश्चिदीदृग्प्रभावविर्भावः प्रभवति तदा सिताम्बराः स्वदेशे स्थाप्यन्ते नो चेन्निर्वास्यन्ते इति तद्वचनानन्तरं श्रीमानतुङ्गाचार्यास्तत्राकार्य निजदेवतातिशयं कमपि दर्शयन्तु[3] इति राज्ञा भणितं । ते प्राहुः ।

---

१ A आराधनाद्यं २ D ततस्तौ स्पर्द्धया काश्मीरं गतौ ३ दर्शयत.

मुक्तानामस्मद्देवतानामत्र कोऽतिशयः संभवति तथापि तत्किंकराणां सुराणां प्रभावाविर्भावः कोपि विश्वचमत्कारकारी दर्श्यत इत्यभिधाय चतुश्चत्वारिंशतां निगडैर्निजमङ्गं नियमितं कारयित्वा तन्नगरवर्त्तिनः श्रीयुगादिदेवस्य प्रासादपाश्चात्यभागे स्थितो मन्त्रगर्भं भक्तामरेति नवं स्तवं कुर्वन्प्रतिकाव्यं भग्नैकैकनिगडः शृङ्खलासंख्यैः काव्यैः पर्याप्तस्तवोऽभिमुखीकृतप्रासादः शासनं प्रभावयामास ॥ इति श्रीमानतुङ्गाचार्यप्रबन्धः ॥

॥ अथ कदापि राजा स्वदेशपण्डितानां पाण्डित्यं श्लाघमानो गूर्जरदेशमविदग्धतया निन्दन् स्थानपुरुषेणाभिदधे । अस्मद्देशीयाबालगोपालस्यापि भवदीयपण्डिताग्रणीः कोपि तुलां नारोहतीति। ततः[3] ज्ञापितवृत्तान्तः श्रीभीमः कदापि गोवेषधा-

---

१ C D) ततश्चत्वारिंशत् २ C देशीयबालगोपालयोः

३ विज्ञप्ते नृपस्तं वृथा भाषिणं चिकीर्षुः आकारसंवृत्या कियन्तमपि कालं विलम्बमानः स्थानपुरुषेण तद्वृत्तान्तं ज्ञापितः श्रीभीमः स्वदेशसीमान्तनगरे विदग्धाः काश्चित्पण्यस्त्रियः कांश्चन गोपवेषधारिणः पण्डितांश्च मुक्तवान् । अन्यदा श्रीभोजदौवारिकेण, तत्रागत्य कश्चिद्विधो गोपः प्रतापदेवीनाम्नीं पण्यस्त्रियं स गृहीत्वा विदग्धलोकसुवासारां धारामागादवाप्य तां क्वापि सज्जनाकृते विमुच्य प्रत्यूषमुखे भूपाय गोपे निवेदिते श्रीभोजेन किमपि वदेत्यादिष्टः

रिणं पण्डितं पणस्त्रियं च तत्र प्रहितवान् । तत्र प्रत्यूषे नृपसमीपे नीतो गोपालः श्रीभोजेन किमपि निवेदयेत्यादिष्टः

*भोय ए हु गलिं[1] कण्ठुलउ भण केहउं[2] पडिहाइ।
उर लच्छिहि[3] मुह सरसति सीम निबद्धि काइँ[4]

सरस्वतीकण्ठाभरणगोप इत्याह ततो राजा तदुक्तिविस्मितः । सभायामलंकृतायां नेपथ्यधारिणीं पणस्त्रियं पुरो विलोक्य तां प्रति 'इह किं' इत्याकस्मिकं वचः श्रीभोजः समादिक्षत् । अथ स्वजातिपक्षपातादिव सरस्वत्याः प्रसादपात्रं शेमुषीनिधिः सा सुमुखीशिरोमणी प्रतिभेव गम्भीरमपि तद्वचनतत्त्वमवगम्य[5], पृच्छन्तीति नृपं प्रति वचः प्रथितवती[6]त्युचिततद्वचनविकसितास्येन[7] भोजेन लक्षत्रये दाप्यमानेऽज्ञाततत्त्वतया त्रिरुक्तोपि कोशाधिपो यदा न ददाति तदा तं प्रकाशमाह । देश-

* हे भोज एतत्कण्ठाभरणं वद कीदृशं प्रतिभाति ।
उरसि लक्ष्मीर्मुखे सरस्वती स्थिता तयोः सीमा निबद्धा किम् ॥

१ A भोज एव हु कण्ठलउ २ भंभलउ कंचुल. ३ लच्छिहिं ४ कांइं C उरि लच्छिहि मुहि B सीम विहलों कोइ
५ C तद्वचोवगम्य ६ वचसा D ७ विकसितवदनाम्भोजेन

सात्म्यात्प्रकृतिकार्पण्यनैपुण्याच्च लक्षत्रयमस्यै दाप्यते। औदार्यात्तु साम्राज्यमपि दीयमानमल्पतरमेव स्यादित्यादिष्टे समस्तसमाजलोकैः प्रेर्यमाणः स तयोर्वचनयोरन्वयं पृष्ट इत्यभिदधे । कर्णान्तविश्रान्तमपाङ्गाञ्जनरेखायुगं युगपदम्या निरूप्य मयेह किमित्यभिहितं ।अनया तु द्विवचनस्य बहुवचनमिति प्राकृतलक्षणात्पृच्छन्तीति कर्णाभ्यर्णेञ्जनरेखामिषात् । यो भवद्भ्यां श्रुतपूर्वः स एवायं श्रीभोज इति निर्णेतुं दृशौ गते इत्युत्तरं प्रतिपादितं तादियं प्रत्यक्षरूपा भारती तदस्याः पारितोषिके लक्षत्रयं कियदिति ततो लक्षत्रयस्य त्रिर्व्याहारान्नवलक्षास्तस्यै दापयामास ॥ अथाबाल्यादेव स नृपो ।

मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः ।
आहारोपि न रोचेत किमुताकार्यकारिता ॥ १ ॥

इति विज्ञाततत्त्वो धर्मेऽप्रमत्तोभूत् । कदाचिन्निद्राभङ्गानन्तरं कश्चिद्विपश्चित्समेत्य वेगवति तुरगेऽधिरूढस्त्वां प्रति प्रेतपतिरुपैतीत्यनुसारेण धर्मकर्मणि सज्जीभवितव्यमिति वचनाधिकारिणे पण्डि-

---

१ B गत इत्याशङ्कयोत्तरं दत्तवती प्रज्ञावदातवाक्पतीनामपि पण्डितानां योर्थोऽविषयस्तं सहसैवोद्गिरन्ती २C प्रकृत्य.

ताय प्रत्यहमुचितदानं ददानः कदापि पराह्णे स-
भासिंहासने उपविष्टः । स्थगिकावित्तसमर्पितबीट-
कात्प्रागेव मुखे पत्रं क्षिप्त्वाभ्यवहरन् व्यवहारवे-
दिभिस्तत्कारणं पृष्ट इत्यवदत्[1] । कृतान्तदन्तान्तरव-
र्त्तिनां मनुष्याणां यद्दत्तं यच्च भुक्तं तदेवात्मीयं पर-
स्य तु संशयः तथाच ॥

उत्थायोत्थाय बोधव्यं किमद्य सुकृतं कृतम् ।
आयुषः खण्डमादाय रविरस्तं प्रयास्यति ॥ १ ॥
लोकः पृच्छति मे वार्त्तां शरीरे कुशलं तव ।
कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ २ ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्[2] ।
मृत्युर्न हि परीक्षेत कृतं वास्य न वा कृतम् ॥ ३
मृतो मृत्युर्जरा[3] जीर्णा विपन्नाः किं विपत्तयः ।
व्याधयो बाधिताः[4] किं तु हृष्यन्ति[5] यदमी जनाः ४
इत्यनित्यताश्लोकचतुष्कप्रबन्धः ॥

अथान्यदा श्रीभोजः श्रीभीमभूपतेः पार्श्वाद्दूत-
मुखेन वस्तुचतुष्टयमयाचिष्ट । एकं वस्तु इहास्ति

---

१ A पत्रं मुखबीटिकयाभ्यवहरन् व्यवहारवेदिभिर्विज्ञप्त इति श्लोकचतुष्टयं जगाद

२ C पूर्वाह्णे चापराह्णिकम् ३ व्याधिताः ४ मान्यन्ति

परत्र नास्ति १ द्वितीयं परत्रास्ति अत्र नास्ति २ तृतीयमुभयत्रास्ति ३ चतुर्थमुभयत्रापि नास्ति ४ इति विदुषां संदिग्धेऽर्थे पटहे वाद्यमाने गणिकावचनाद्वेश्यातपस्विदानेश्वरद्यूतकाररूपं वस्तुचतुष्टयं प्रहितमि[1]ति वस्तुचतुष्टयप्रबन्धः ॥

अन्यदा भोजनृपो वीरचर्यया परिभ्रमन्निशि कयाचिदपि दरिद्र[2]वध्वा ।

*माणुसडा[3] दसदसदसा[4] सुणियइ[5] लोयपसिद्ध ।
मह[6] कन्त ह इक्क ज दसा अवरि नवोरहिं लिद्ध[7]॥१

इति पठ्यमानमाकर्ण्य तस्या दुस्थावस्थया संजातकृपो नृपः प्रातस्तत्पतिं सदस्यानीय तस्याः किमप्यायतिहितं विमृश्य बीजपूरकद्वये प्रत्येकलक्ष्यमूल्यं रत्नं तदुपकारायान्तर्विधाय तस्मै प्रसादीकृतवान् । तेनापि तं वृत्तान्तमजानता मूल्येन पत्रशाकापणे विक्रीतं तेनाप्युपायनाय तन्मातु-

---

* मनुष्या दशदशवर्षेषु गतेषु दशावन्तो भिन्नभिन्नावस्थावन्तो लक्ष्यन्ते इति लोकप्रसिद्धम् । मम स्वामिनस्तु एकैव दशा या निकृष्टा तदनन्तरमुत्कृष्टा दशा कदापि न लब्धा सदैव दारिद्र्यमित्यर्थः १

D) १ प्रहीयतां २ दुर्विध. ३B माणसडी ४ D) हवइ ५ C माणसडा दसइं देवेहि निम्मावियाइं ६ मुज्झ ७ नवोगिहिं हरियाइं ते वोरहिं

लिङ्गद्वयं कस्यापि समर्पितं तेन श्रीभोजस्यैव समर्पितं[1] ॥

*वेलामहल्लकल्लोलपल्लिट्टं[2] जइ वि गिरिनई पत्तं ।
अणुसरइ मग्गलग्गं पुणोवि रयणायरे रयणं ॥ १

इत्यनुभवाद्भाग्यं नृपस्तथ्यमेव मेने

यतः

प्रीणिताशेषविश्वासु वर्षास्वपि पयोलवम् ।
नाप्नुयाच्चातको नूनमलभ्यं लभ्यते कुतः ॥ १ ॥

इति बीजपूरकप्रबन्धः ॥

अथान्यदा कस्यामपि निशि नृप एको न भव्य इति प्रच्छन्नं क्रीडाशुकं पाठयित्वा प्रातस्त्वया वाक्यमिदमुच्चारणीयमिति शिक्षितवान् । अथ तेन तथाभिधीयमाने नृपेण पृष्टाः पण्डिता निर्णयमजानन्तः षाण्मासीमवधिं याचितवन्तः। ततस्तन्मुख्यो वररुचिस्तन्निर्णयाय देशान्तरं परिभ्रमन्केनापि पशुपालेनाहमेवामुं निर्णयं भवत्स्वामिने निवेदयिष्यामि। परममुं श्वानं वृद्धतया नोद्वोढुं वत्सल-

* समुद्रवेलामहाकल्लोलैः पर्यस्तलुण्ठितं सन् यद्यपि गिरिनदीप्राप्तं पुनरपि मार्गलग्नं रत्नं रत्नाकरमनुसरतीत्यन्योक्त्यावबुद्धम्॥ ?

१ D उपढौकितम् २ A पल्लियं C D पिल्लियं.

तया न मोक्तुं च शक्नोमीति तेनोक्ते तं श्वानं निजस्कन्धे समारोप्य पशुपालं सह नीत्वा नृपसभामुपागतस्तमुत्तरकारिणं निवेदयामास । अथ स पशुपालो नृपेण तदेव वचनं पृष्टः । अस्मिन् जीवलोके राजन् लोभ एवैको न भव्यः । राज्ञा कथमिति भूयोपि पृष्टः । यद्ब्राह्मणः श्वानं स्कन्धदेशेनास्पृश्यमपि वहति तल्लोभस्यैव विजृम्भितमतो लोभ एव न भव्यः ॥ अथान्यदा मित्रमात्रसहायो नृपतिर्निशि परिभ्रमन्पिपासाकुलतया पणरमणीगृहं गत्वा मित्रमुखेन जलं याचितवान् । ततोऽतुच्छवात्सल्याच्छम्भल्या कालविलम्बेनेनेक्षुरसपूर्णः करकः सखेदमुपानीयत । मित्रेण खेदकारणे पृष्टे, एकस्यामिक्षुलतायां[1] पुरा रसः संपूर्णः सवाहटिको घट आसीत् साम्प्रतं तु प्रजासु विरुद्धमानसाय चिरकालेन केवला वाहटिकैव भृतेति खेदकारणं नृपस्तदाकर्ण्य केनापि वणिजा शिवायतने महति नाटके कार्यमाणे तल्लुण्टनेचित्तमात्मानं विमृश्य तदे-

---

१ C शूलेन भिद्यमानायां रसः परिपूर्णः सवोहटिको घट आसीत्. २ लुण्ठन.

व तथ्यमेवेति[1] ततो व्यावृत्य स्वस्थानमासाद्य निद्रां सिषेवे । अपरेद्युः प्रजासु संजातकृपो नृपः पणाङ्गनागृहं गतः । तदा च तयाद्य प्रजासु वत्सलो नृपतिरिति प्रचुरेक्षुरससंकेतादिति व्याहरन्त्या राजा तोषितः ॥

इतीक्षुरसप्रबन्धः ॥

अथ धारानगर्याः शाखानगरे प्रासादस्थितायाः गोत्रदेव्या नमश्चिकीर्षया नित्यमागच्छन् कदापि तद्भक्तिरञ्जितया देव्या स नृपः साक्षादभ्यधायि परबलं संनिहितमागतं ततः शीघ्रं व्रजेति विसृष्टः क्षणाद्गूर्जरसैन्यैः स्वं वेष्टितमालोक्य[2] जवाधिकेन वाजिना व्रजन् धारानगरगोपुरे प्रविशन्नालूयाकोलूयाभिधानाभ्यां गूर्जराश्ववाराभ्यां तत्कण्ठे धनुषी

१ C दृष्टौ पुनः स वसुधाधवः सौधमध्यास्य निद्रावसरे संजातकृपः प्रजासु । परस्मिन्नहानि पणाङ्गनागृहमुपगतस्तत्कालागतयातयाद्य प्रजासु वत्सलो नृपतिरिति.

२ C D कदाचिद्वेलाव्यतिक्रमे जाते सति प्रत्यक्षीभूतया देवतया मितपरिच्छदं द्वारप्रदेशमागतमकस्मान्नृपमालोक्य ससंभ्रमान्निषेदुषी निजासनमतिचक्राम । नृपः प्रणामपूर्वकं तं वृत्तान्तं पृच्छन् सन्निहितं परबलमागतं विचिन्त्य शीघ्रं व्रजेति विसृष्टो देवतया क्षणात् गूर्जरसैन्यैर्वेष्टितं स्वमपश्यत् ।

प्रक्षिप्य, एतावता व्यापादितोसीति वद्भ्यां त्यक्तः॥

असौ गुणी नमत्वेव भोजः कण्ठमुपेयुषा ।
धनुषा गुणिना यश्चापश्यदश्वान्निपातितः ॥ १ ॥

॥ इत्यश्ववारप्रबन्धः ॥

अथान्यदा स एव राजा राजपाटिकायाः प्रत्यावृत्तः पुरगोपुरे सुमुखमुक्तेन तुरगेण प्रविशन् व्याकुलीकृतेषु लोकेषु, इतस्ततः पलायमानेषु[1] जनेषु कामपि तक्रविक्रयिणीं जनसंमर्देन मौलिकम्याद्भूतलपातितभग्नभाण्डामपि गोरसे सरित्प्रवाह इव प्रसरति विकसितमुखां तां प्राह । तवाविषादे किं कारणमिति नृपेण पृष्टे सा प्राह ।

हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
देशान्तरे विधिशाद्गणिकास्मि जाता ।
पुत्रं भुजगमधिगम्य चितां प्रविष्टा
शोचामि गोपगृहिणी कथमद्य तक्रम् ॥ १ ॥

तस्मात्प्रदेशान्महीनदी प्रादुरासेत्यवादिषुः॥[2]

॥ इति गोपगृहिणीप्रबन्धः ॥

अन्यदा प्रीतो भोज उपशिलामेकां लक्षीकृत्य धनुर्वेदमनिर्वेदमभ्यसंस्तत्कालदर्शनार्थमागतन सि-

---

१ C लोकेषु. २ C इति लोका वदन्ति

ताम्बरवेषधारिणा श्रीचन्दनाचार्येण प्रत्युत्पन्नप्रतिभाभिरामतयौचित्यमभिदधे ॥

विद्धा विद्धा शिलेयं भवतु परमतः कार्मुकक्रीडितेन
राजन्याषाणवेधव्यसनरसिकतां मुञ्च देव प्रसीद ।
क्रीडेयं चेत्प्रवृद्धा कुलशिखरिकुलं केलिलक्षं करोषि
ध्वस्ताधारा धरित्री नृपतिलक तदा याति पातालमूलम् ॥ १ ॥

इति तत्कवितातीशयचत्कृतोपि किंचिद्विचिन्त्य नृपतिरित्युवाच । भवता सर्वशास्त्रपारगतेनापि ध्वस्ता धारेति यत्पदमपाठि ततः कमप्युत्पातं सूचयति ॥इतश्च॥ डाहालदेशीयराज्ञो राज्ञी देमतीनाम्नी महायोगिनी कदाचिदासन्नप्रसवा सदैव दैवज्ञानिति पप्रच्छ । कस्मिन्सुलग्ने जातः सुतः सार्वभौमो भवतीति। अथ तैः सम्यगवगम्योच्चराशिषु केन्द्रस्थेषु सौम्यग्रहेषु त्रिषडायगेषु क्रूरेषु चामुकलग्ने जातः सुतः सार्वभौमो भवतीत्युक्तं तन्निशम्य[1] निश्चितप्रसवदिनादूर्ध्वं षोडशप्रहराण्यावद्योगयुक्त्या गर्भस्तम्भं कृत्वा नैमित्तिकनिर्णीते लग्ने सुतं कर्णनामानं प्रासूतं[2] । तद्गर्भधारणदोषादष्टमे यामे सा विपन्ना[3] । सुल,

1 D इति निशम्य 2 सुतमसूत 3 संयमिनीं पुरीं जगाम

अजातत्वात्पराक्रमाक्रान्तादिग्चक्रः षट्त्रिंशदधिकेन राज्ञां शतेन सेव्यमानश्चतुर्षु राजविद्यासु परं प्राविण्यमावहन् विद्यापतिप्रमुखैर्महाकविभिः स्तूयमानः । तद्यथा

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिकलमभूत्याणियुगलम् ।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशा-
दपूर्वोयं भूषाविधिरहह जातः किमधुना ॥ १ ॥
गोपीपीनपयोधराहतमुरः संत्यज्य लक्ष्मीपतेः
शङ्के पङ्कजशङ्कया नयनयोर्विश्राम्यति श्रीस्तव ।
श्रीमत्कर्णनरेन्द्र यत्र चलति भ्रूवल्लरीपल्लव-
स्तत्र त्रुट्यति भीतिभङ्गुरतया दारिद्र्यमुद्रा यतः ॥१

इति स्तूयमानः स कर्णनृपः कदाचिद्दूतमुखेन श्रीभोजमुवाच । भवन्नगर्यां भवत्कारिताश्चतुरुत्तरं शतं प्रासादाः।एतावन्त एव गीतप्रबन्धा भवदीयाः। एतावन्ति तव बिरुदानि । अतश्चतुरङ्गयुद्धेन द्वन्द्वयुद्धेन वा चतसृषु विद्यासु वादिवत्, त्यागशक्त्या

---

१ C कुन्तलकलापेन २ D पत्रालिः ३ स्तूयमाननानावदातः श्रीभोजं प्रति प्रधानानि प्राहिणोत्

वा मां निर्जित्य पञ्चोत्तरशतं[1]विरुदानां भाजनं भूयाः। नो वाहं त्वां विजित्य सप्तत्रिंशताधिकस्य राज्ञां शतस्य नाथो भवामीति तद्वचसा [2]परिम्लान मुखाम्भोजः श्रीभोजः सर्वेष्वपि प्रकारेषु जितकासिनं[3] श्रीकाशिपुराधीशं विमृशन् स्वं विजितं मन्यमानस्तानुपरोधपूर्वमभ्यर्थ्यैवमङ्गीकारयामास। मयावन्त्यां श्रीकर्णेन वाणारस्यामेकस्मिन्नहनि लग्ने गर्तापूरपूर्वमारभ्याहंपूर्विकया कार्यमाणयोः पञ्चाशद्धस्तप्रमाणयोः प्रासादयोः यस्मिन्प्रासादे प्रथमं कलशध्वजारोपो भवति तस्मिन्नुत्सवे परेण नरेन्द्रेण त्यक्तच्छत्रचामरेण करेणुमधिरूह्य समागन्तव्यमित्थं भोजस्य यथारुच्यङ्गीकारे कर्णगोचरंगते श्रीकर्णस्तेनापि प्रकारेण भोजमधश्चिकीर्षुरेकस्मिन्नेव लग्ने पृथग् २ प्रारब्धयोरुभयोः प्रासादयोः सर्वाभिसारेण निजप्रसादं निर्मापयतोस्तत्र कर्णः सूत्रभृतं पप्रच्छ। एकस्मिन्नहन्युदयास्तयोरन्तरे कियान्कर्मोच्छ्रायो[4]भवतीति निवेद्यतां। अथ तेन चतु-

---

१ वादस्थलेन त्यागेन च मां विनिर्जित्य पञ्चोत्तरशत.

२ इतिप्रज्ञावाविर्भावादीषत्पारि. ३ जयनशीलं. ४ कर्मस्थायो (तोपारखाना जोकोत्को जैनागमु कोशेषु)

देश्यनध्याये तत्र सप्तहस्तप्रमाणा एकादश प्रसादा दिनोदये प्रारभ्य दिनान्ते कलशारोपपर्यन्ताः कारयित्वा नृपाय दर्शितास्तया समग्रसामग्र्या नृपः प्रमुदितचित्तो[1] निजप्रासादकलापबन्धे संजायमाने निजप्रासादेऽनलसः कलशमधिरोप्य निर्णीते ध्वजाधिरोपलग्ने तया प्रतिज्ञया श्रीभोजं दूतमुखेन निमन्त्रयामास। ततः स्वप्रतिज्ञाभङ्गभीरुर्मालवमण्डलप्रभुस्तथा प्रयातुमप्रभुश्च श्रीभोजस्तूष्णीमासीत्। अथ प्रासादध्वजाधिरोपानन्तरं श्रीकर्णस्तावद्भिरेव नृपैः समं प्रस्थितः श्रीभोजमभिषेणयितुं तदा च[2] श्रीभोजराज्यार्द्धं प्रतिश्रुत्य श्रीमालवकमण्डलपार्ष्णिघाताय श्रीकर्णः श्रीभीममाजूहवत्। अथ ताभ्यां नरेन्द्राभ्यां मन्त्रेणाक्रान्तो व्याल इव भोजभूपालो विगलितदर्पविषो बभूव। तदा चाकस्मिके संजाते भोजवपुरपाटवेऽपाह्रियमाणेषु[3] सर्वेष्वपि घाटमार्गेषु निजानियुक्तमानुषैः सर्वथा निषिध्यमाने परपुरुषप्रवेशे श्रीभीमः कर्णाभ्यर्णवर्त्तिनं निजसान्धिविग्राहिकं डामरं भोजवृत्तान्तज्ञानाय

१ C चित्तो भोजप्रसादे कलापबन्धे जायमाने २ अभिषेणयन् तस्मिन्नवसरे ३ तस्मिन्नृपस्य वपुरपाटवेऽपह्रियमाने

स्वपुरुषेण पप्रच्छ तेनापि स पुरुषो गाथामध्याप्य प्रहितः श्रीभीमसभामुपागतः ॥

*अम्बयफलं सुपक्कं बिण्टं सिढिलं समुब्भडो पवणो।
साहा मिल्हणसीला[1] न याणिमो कज्जपरिणामो[2] ॥१

अनया गाथया श्रीभीमे तथास्थिते श्रीभोजः सन्निहितपरलोकपथप्रयाणः कृततदुचितकर्तव्यो[3] मम पञ्चत्वानन्तरं मत्करौ विमानाद्बहिर्विधेयाविति त्यादिश्य दिवं[4] गतः ॥

*कसु करु रे पुत्र कलत्र धी कमु करु रे करसणवाडी ।
एकला आइवो एकला जाइवो हाथपग बे झाडी १

इति भोजवाक्यं वेश्यया कथितं लोकानां प्रति तद्वृत्तान्तविदा कर्णेन दुर्गभङ्गपूर्वं समग्रायां भोजलक्ष्म्यामुपात्तायां श्रीभीमेन डामर आदिष्टो य-

---

*आम्रफलं सुपक्वं वृन्तं शिथिलं समुद्भटः पवनः शाखा म्लानशीला न जानीमः कार्यपरिणामम् ॥ १ ॥

---

* किं करोमि रे पुत्र कलत्र किं करोमि कृत्स्नवाटीं सकलपरिजनोपकरणादिमित्यर्थः । एकाकी आगम्यते एकाकी गम्यते हस्तपादं द्वयं घर्षित्वा ( खंखेरीने इति भाषा. )

१. B C उद्धतसाहा मल्हणसीला. २. परिणामे.
३ कृत्यो राज्यस्यानुशास्तिं समस्तराजलोकस्य वितीर्य ।
४ C दिवमुपेयिवान्.

च्छ्रीकर्णात्त्वया मत्यारिकलितं[1] निजं शिरो वोपने-तव्यमितिराजादेशविधित्सुर्द्वात्रिंशता पत्तिभिः सह गुरूदरे प्रविश्य मध्याह्नकाले प्रसुप्तं श्रीकर्णं छान्यं जग्राह। अथ तेन राज्ञ एकस्मिन्विभागे नीलकण्ठचिन्तामणिगणाधिपप्रमुखदेवतावसरे निर्णीते परस्मिन्नुत्तरार्द्धे समस्तराज्यवस्तूनि स्वेच्छयैकमर्द्धमादत्स्वेत्यभिहिते षोडशप्रहरांस्तथा स्थित्वा पुनः श्रीभीमराजादेशाद्देवतावसरमादाय श्रीभीमायोपायनीचकार ॥ अथैतत्प्रबन्धसंग्रहकाव्ययुग्मं यथा ॥

पञ्चाशद्धस्तमाने सुर[2]भवनयुगे तुल्यलग्नक्षणे प्राक्
प्रारब्धे यस्य शीघ्रं भवति हि कलशारोपणं तत्र राज्ञा।
अन्येन च्छत्रवालव्यजनविरहितेनाभ्युपेतव्यमेवं
संवादे भोजराजो व्ययविमुखमतिः कर्णदेवेन जिग्ये॥ १ ॥

भोजे राज्ञि दिवं गतेतिबलिना कर्णेन धारापुरी-
भङ्गं सूत्रयतोपरुध्य नृपतिर्भीमः सहायीकृतः।
तद्भृत्येन च डामरेण जगृहे बन्दीकृतात्कर्णतो

१ राज्यार्द्धं. २ D शिव.

हैमी मण्डपिका गणाधिपयुतः श्रीनीलकण्ठेश्वरः॥ २

अथ श्रीकर्णस्याग्रे इदं काव्यमुक्तं कर्पूरकविना मुखे हारावाप्तिरित्यादि.। अपशब्दकथनाद्राज्ञा तस्य कवेः किंचिन्न प्रदत्तं ।

कुक्षेः कोटर एव कैटिभरिपुर्धत्ते त्रिलोकीमिमा-
मन्तर्भूरिभरं बिभर्त्ति तमपि प्रीतो भुजङ्गाधिपः ।
श्रीकण्ठस्य स कण्ठसूत्रमभवद्देव त्वया तं हृदा
बिभ्राणेन परेषु विक्रमकथा श्रीकर्ण निर्नाशिता१

श्रीनाचिराजकविनोक्तमेतद्राज्ञा प्रदत्तम् ।

दत्ता कोटी सुवर्णस्य मत्ताश्च दश दन्तिनः ।
दत्तं श्रीकर्णदेवेन नाचिराजकवेर्मदात् ॥ २ ॥

भार्यया हक्कितेन कर्पूरकविना समागच्छतो नाचिराजकवेरग्रे मार्गे इदं काव्यं भणितं । यत्

कन्ये कासि न वेत्सि मामपि कवे कर्पूर ।किं भारती
सत्यं किं विधुरासि वत्स मुषिता केनाम्ब दुर्वैधसा।
।किं नीतं तव मुञ्जभोजनयनद्वंद्वं कथं वर्त्तसे
दीर्घायुर्भजतेन्धयष्टिपदवीं श्रीनाचिराजः कविः १

श्रीनाचिराजकविना संतुष्टेन यद्राज्ञा प्रदत्तं तत्सर्वमपि कर्पूरकवये प्रदत्तं ।

इत्यादि भोजस्य नानाविधाः प्रबन्धा अवशे-

षा यथाश्रुतं मन्तव्याः ॥

देव त्वत्करनीरदे दशदिशि प्रारब्धपुण्योन्नतौ
चञ्चत्काञ्चनकङ्कणद्युतितडित्स्वर्णामृतं वर्षति।
वृद्धा कीर्त्तितरङ्गिणी समभवत्प्रीता गुणग्रामभूः
पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः १
त्यागैः कल्पद्रुम इव भुवि त्रासिताशेषदौस्थ्यः
साक्षाद्वाचस्पतिरिव जनान्द्वव्धनानाप्रबन्धः।
राधावेधेऽर्जुन इव चिरात्तस्य कीर्त्त्यौत्कचित्ते-
राहूतः श्रागमरनिकरैः स्वर्ययौ भोजराजः ॥ ३ ॥

इति श्रीमेरुतुङ्गाचार्यविरचिते प्रबन्धचिन्ताम-
णौ श्रीभोजश्रीभीमभूपयोर्नानावदातवर्णनो नाम
द्वितीयः प्रकाशः ॥

---

A C D पुस्तकेषु न B प्रान्तभागे लिखितानि काव्यानि यथा ॥
धाराधरस्त्वदसिरेव नरेन्द्र चित्रं
वर्षन्ति वैरिवनिताजनलोचनानि ।
कोशेन सन्ततमसंगतिराहवेऽस्य
दारिद्र्यमभ्युदयति प्रतिपार्थिवानाम् ॥ १ ॥
कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्ता-
मादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः ।
दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः
सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ २ ॥

अये लाजा उच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यास्मात्सुपिहितवती दीनवदना ।
मयि क्षीणोपाये यदकृत दृशावश्रुबहुले
तदन्तः शल्यं मे त्वमसि पुनरुद्धर्तुमुचितः ॥ ३ ॥
आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दिताश्छायया ।
स्कन्धैर्गन्धगजास्त्वयैव विहिताः सर्वे कृतार्थास्ततः
त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्ये द्रुमाः ॥ ४ ॥
हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्द्धालुश्चेदहह कविना वश्यवचसा ।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ ५ ॥
मुक्ताभूषणमिन्दुबिम्बमजनि व्याकीर्णतारं नभः
स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते ।
व्यालीनं कलकठणमन्दरणितं मन्दानिलैः स्पन्दितं
निष्पन्दस्तबका च चम्पकलता साभून्न जाने ततः ॥ ६ ॥
खिन्नं मण्डलमैन्दवं विलुलितस्रग्भारनद्धं तमः
प्रागेव प्रथमानकैतकशिखालीलायितं सुस्मितम ।
शान्तं कुण्डलताण्डवं कुवलयद्वन्द्वं तिरो मीलितं
वीतं विद्रुमसत्कृतं नहि ततो जाने किमासीदिति ॥ ७ ॥
अहो मे सौभाग्यं मम च भवभूतेश्च भणितिं
तुलायामारोप्य प्रतिफलति तस्यां लघिमनि ।
गिरां देवी सद्यः श्रुतिकलितकल्हारकलिका-
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥ ८ ॥
लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां

पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम् ।
पिण्डीभूतं हरस्य स्मितममरधुनीपुण्डरीकं मृगाङ्को
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोधनस्य ॥ ९ ॥
महाराज श्रीमन् जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते
कपर्दी कैलासं करिवरमभौमं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना ॥ १० ॥
नीरक्षीरं गृहीत्वा निखिलखगततिं याति नालीकजन्मा
तक्रं धृत्वा तु सर्वानटति जलनिधींश्चक्रपाणिर्मुकुन्दः ।
सर्वानुत्तुङ्गशैलान् दहति पशुपतिर्भालनेत्रेण पश्यन्
व्याप्तत्वत्कीर्त्तिकान्तौ त्रिजगति नृपते भोजराज क्षितीन्द्र ॥ ११ ॥
विद्वद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः
कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान् पूर्त्तये ।
उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥ १२ ॥
स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनो—
र्वत्सस्यानेतुकामस्तृणचयमधुना मुग्धदुग्धं न तस्याः ।
श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा
व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमूर्व्याम् ॥ १३ ॥
अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् ।
शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ १४ ॥
निजानपि गजान् भोजं ददानं प्रेक्ष्य पार्वती ।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः ॥ १५ ॥
घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं
वने वासः कन्दादिकमशनमेवंविधगुणः ।

अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ १६ ॥
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः० ॥१७॥
विजेतव्या लङ्का चरणतरणीयो जलनिधि—
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः० ॥ १८ ॥
धनुः पौष्यं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धि० ॥ १९ ॥
अर्द्धं दानववैरिणा गिरिजयाप्यर्द्धं शिवस्याहृते
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गासागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २० ॥
शुक्तिद्वयपुटे भोज यशोऽब्धौ तव रोदसी ।
मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ २१ ॥
अभूत्प्राची पिङ्गा रसपतिरिव प्राप्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात्क्षीणास्तारा नृपत इवानुद्यमपरा
न राजन्ते दीपा द्रविणरहितानामिव गृहाः ॥ २२ ॥
समुन्नतघनस्तनस्तबककुम्भितुम्बीफल—

क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर—
त्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥२३ ॥

बल्लालक्षोणीपाल त्वदहितनगरे संचरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी ।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुपातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्त्ति ॥ २४ ॥

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोङ्गराजस्वसु—
र्द्यूतैरात्रिरियं जिता कमलया देव्या प्रसाद्याधुना ।
इत्यन्तःपुरसुन्दरीजनगणे न्यायाधिकं ध्यायता
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थिता नाडिकाः ॥ २५ ॥

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्टं सदा स च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोनिधिरादरा—
दहह महतां निःसीमानश्चरित्रविभूतयः ॥ २६ ॥

दृष्टे श्रीभोजराजेन्द्रे गलन्ति त्रीणि तत्क्षणात् ।
शत्रोः शस्त्रं कवेः कष्टं नीवीबन्धो मृगीदृशाम् ॥

कविषु वादिषु भोगिषु योगिषु
द्रविणदेषु सतामुपकारिषु ।
धनिषु धन्विषु धर्मपरेषु च
क्षितितले नहि भोजसमो नृपः ॥ २७ ॥



# सिद्धराजप्रबन्धः

अथ कदाचिद्गूर्जरदेशे अवग्रहनिगृहीतायां वृष्टौ राजदेयविभागनिर्वाहाक्षमो देशलोकः तन्नियुक्तैर्व्यापारिभि[1]ः श्रीपत्तने समानीय भीमभूपाय न्यवेद्यत। ततः कदाचिदहर्मुखे श्रीमूलराजकुमारस्तत्र चङ्क्रममाणो नृपपत्तिभिः सस्यनिदानीभूतसंबन्धे व्याकुलीक्रियमाणं सकललोकमालोक्य पारिपार्श्विकेभ्योऽधिगतवृत्तान्तः कृपया किंचिदश्रुमिश्रलोचनो *वाहवाल्यां[2] तदतुल्यया[3] कलया नृपं परितोष्य वरं वृणीष्वेति नृपादेशमासाद्य भाण्डागार एव वरोऽयमस्तु इति विज्ञपयामास। राज्ञा किमिति न याचसे इत्युक्तः प्राप्तिप्रमाणाभावादित्युदीरयन् भृशं निर्बन्धपराद्धराधिपात्तेषां कुटुम्बिकानां दानीमोचनवरं ययाचे। ततो हर्षबाष्पाविललोचनेन राज्ञा तत्तथेति प्रतिपद्य भूयोऽप्यर्थयेत्यभिहितः।

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः

---

१ C निगृहीतवर्षेण विशोपकदण्डाहिंदशग्रामकौटुम्बिकेषु राजदेयविभागनिर्वाहाक्षमेषु तन्नियुक्तैर्व्यापारिभिः सकलोऽपि स ज्ञातवित्तो देशलोकः २ वाहवाल्यां A वाहाल्यां. * अश्ववालनपरिभ्रामणादिक्रियायां वा तत्स्थल्यां ३ B अतुलया.

स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः।
दुःपूरोदरपूरणाय पिबति श्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृत जगत्संतापविच्छित्तये ॥ १

इति काव्यार्थबलेन[1] निगृहीतप्रभूतलोभस्ततो भूयः किमप्यभ्यर्थ्यमानोऽपि[2] मानोन्नततया स्वस्थानमगमत्। ततश्च कौटुम्बिकलोकैः स्तूयमानस्तृतीयेऽहनि स श्रीमूलराजः स्वर्लोकं जगाम। तच्छोकाम्बुधौ स राजलोको राजा स च पूर्वमोचितलोकश्च निमग्नश्चिरेण चतुरैर्विविधबोधबलादपकृष्टशोकशङ्कुश्चक्रे। अथ द्वितीयवर्षे कर्षुकलोकैर्वषाबलान्निःपन्नेषु समस्तसस्येषु व्यतीततद्वर्षयो राजदेयभाग विभागे प्रदिश्यमाने राज्ञि चानाददाने सति तैरुत्तरसभा मेलिता। तत्र सभ्यानां लक्षणमेवं ॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मः स नो यत्र न चास्ति सत्यं
सत्यं न तद्यत्कृतकानुविद्धम् ॥ १ ॥

---

१ D सूक्तार्थ. २ प्रार्थयमानो मानोन्नततया स्वसौधमध्यास्य बन्धमोचितैस्तैर्लोकैः सदैव तदुपास्यमानः स्वसौधगतैश्च स्तूयमानस्तृतीयेऽहनि तदीयसन्तोषदृशा श्रीमूलराजः

इति निर्णयात्सभ्यैर्गतवर्षतद्वर्षयोर्दानीं राजा ग्राहितः। ततस्तेन द्रव्येण कोशद्रव्येण च श्रीमूलराजकुमारश्रेयसे नव्यस्त्रिपुरुषप्रासादः श्रीभीमेन कारितः। अनेन श्रीपत्तने श्रीभीमेश्वरदेवभट्टारिकाभीरुआणीप्रासादौ कारितौ॥ सं० १०७७ प्रारभ्य वर्ष ४२ मास १० दिन ९ राज्यं कृतं॥ श्री उदयमतिनाम्न्या तद्राज्ञ्या श्रीपत्तने सहस्रलिङ्गसरोवरादप्यातिशायिनी नव्या वापी कारिता॥अथ सं. ११२० चैत्रवदि ७ सोमे हस्तनक्षत्रे मीनलग्ने श्री कर्णदेवस्य राज्याभिषेकः संजातः॥ इतश्च शुभकेशिनामा कर्णाटराट् तुरगापहृतोऽटव्यां नीतः कुत्रापि पत्रलवृक्षच्छायां सेवमानः प्रत्यासन्नदावपावके कृतज्ञतया विश्रामोपकारकारिणं तमेव तरुमजिहासुस्तेनैव सह तस्मिन्दहने प्राणानाहुतीचकार। ततस्तत्सूनुर्जयकेशिनामा तद्राज्ये सचिवैरभिषिक्तः क्रमेण तत्सुता मयणल्लदेवी समजनि। सा च शिवभक्तैः सोमेश्वरनामानि गृहीतमात्र एवेति पूर्वभवमस्मार्षीत्। यदहं प्राग्भवे ब्राह्मणी द्वा-

---

१ D दानीं नृपतेः पार्श्वाद्ग्राहित्वा आपूर्यमाणकोश. २ पूर्वं वर्ष. ९२ सं० ११२८ B सं० १०८० पूर्वं व० ४२ अथ सं. ११२०

दशमासोपवासान्कृत्वा प्रत्येकं द्वादशवस्तूनि तदु-
द्यापने दत्वा श्रीसोमेश्वरनमस्याकृते प्रस्थिता बा-
हुलोडनगरमागता तत्करं दातुमक्षमाग्रतो गन्तुम-
लभमाना तन्निर्वेदादहमागामिनि जन्मनि अस्य
करस्य मोचयित्री भूयासमिति कृतनिदाना विप-
द्यात्र कुले जातेतिपूर्वभवस्मृतिः । अथ बाहुलोड-
करमोचनाय सा गूर्जरेश्वरं प्रवरं वरं कामयमाना
तं वृत्तान्तं पित्रे निवेदयामास । अथ जयकेशिरा-
जा तं व्यतिकरं ज्ञात्वा तेन श्रीकर्णः स्वप्रधानैः स्व-
सुताया मयणल्लदेव्या अङ्गीकारं याच्यते स्म। अथ
श्रीकर्णे तस्याः कुरूपताश्रवणादुदासीने[1] सति त-
स्मिन्नेव निर्बन्धपरां तां मयणल्लदेवीं पिता स्वयंव-
रां प्राहिणोत् । अथ श्रीकर्णनृपो गुप्तवृत्त्या स्वय-
मेव तां कुत्सितरूपां निरूप्य[2] सर्वथा निरादर एव
जातः। ततोऽष्टभिः[3] सहचरीभिः सह नृपतिहत्याकृ-
ते मयणल्लदेवीं प्राणान्परिजिहीर्षुं मत्वा श्रीकर्ण-
जनन्या देयमतिराज्ञ्या तासां विपदं द्रष्टुमक्षमया
ताभिः सह प्राणसंकल्पश्चक्रे ॥ यतः ॥

---

१ B श्रीकर्णः प्रधानपुरुषैर्मयणल्लदेव्याः कुरूपतां निशम्य मन्दा-
दरे राज्ञि. २ D विलोक्य. ३ A दिक्कन्याभिरिव मूर्त्तिमतीभिः

स्वापदि तथा महान्तो न यान्ति खेदं यथा परापत्सु।
अचला निजोपहतिषु प्रकम्पते भूः परव्यसने॥ १

इति महोपप्लवमुपस्थितमवगम्य मातृभक्त्या तां परिणीय श्रीकर्णः पश्चाद्दृष्टिमात्रेणापि न संभावयामास ॥ अन्यदा कस्यामप्यधमयोषिति साभिलाषं नृपं मुञ्जालमन्त्री कञ्चुकिना विज्ञाय तद्वेषधारिणीं कृत्वा मयणल्लदेवीमृतुस्नातां रहसि प्राहिणोत्। तामेव स्त्रियं जानता नृपतिना सप्रेमभुज्यमानायास्तस्या आधानं समजनि। तदा च तया संकेतज्ञापनाय नृपकरान्नामाङ्कितमङ्गुलीयकं निजाङ्गुल्यां न्यधायि। अथ प्रातस्तद्दुर्विलसितात्प्राणपरित्यागोद्यतो नृपतिः स्मार्तांस्तत्प्रायश्चित्तं पप्रच्छ। तैस्तप्तताम्रमयपुत्तलिकालिङ्गनमिति[२] निवेदिते प्रायश्चित्ताय तथैव चिकीर्षवे स मन्त्री यथावदवदत्॥ सुलग्ने तस्य जातस्य सूनोर्नृपतिर्जयसिंह इति नाम निर्ममे। स बालस्त्रिवार्षिकः कुमारैः सवयोभिः सह रममाणः सिंहासन

१ C इति न्यायात्तदाग्रहादेवानिच्छुनापि सर्वथा श्रीकर्णेन सा परिणिन्ये। तदनन्तरं दृग्मात्रेण सर्वथा तामसंभावयन् कस्यां

२ उद्यताय नृपतये स्मार्तैस्तप्तताम्रमयपुत्तलिकालिङ्गनमिति प्रायश्चित्ते.

मलंचक्रे । निमित्तिकैस्तस्मिन्नेवाभ्युदयिके[1] लग्ने निवेदिते राजा तदैव तस्य सूनो राज्याभिषेकं चकार ॥ सं० ११५० वर्षे पौषवद ३ शनौ श्रवणनक्षत्रे वृषलग्ने श्रीसिद्धराजस्य पट्टाभिषेकः। स्वयं तु, आशापल्लीनिवासिनमाशाभिधानं भिल्लमभिषेणयन् भैरवदेव्याः शकुने जाते तत्र कोछरबाभिधानदेव्याः प्रासादं च करयित्वा षट्लक्षाधिपं भिल्लं विजित्य तत्र जयन्तीं देवीं प्रासादे स्थापयित्वा तथा कर्णेश्वरदेवतायतनं कर्णसागरतडागालंकृतं चकार। कर्णावतीपुरं निवेश्य स्वयं तत्र राज्यं चक्रे। श्रीपत्तने तेन राज्ञा श्रीकर्णमेरुः प्रासादः कारितः॥ सं० ११२० चैत्रसुदि ७ प्रारभ्य सं० ११५० पौषवदि २ यावत् वर्ष २९ मास ८ दिन २१ अनेन राज्ञा राज्यं कृतं। अथ दिवं गते श्रीकर्णे श्रीमदुदयमतिदेव्या भ्राता मदनपालोऽसमञ्जसवृत्त्याऽवर्त्तत। तेन लीलाभिधानो राजवैद्यो दैवतवरलब्धप्रसादः सकलनागरिकैस्तत्कलाचमत्कृतचित्तैः[2] काञ्चनदानपूजयाऽभ्यर्च्यमानः कदाचिन्नि-

१ B D तद्व्यवहाराविरुद्धं विमृशता नृपेण पृष्टैर्नैमित्तिकैस्तस्मिन्नेवाभ्युदयिके २ C तत्कलाहृतहृदयैः

जसौधे समानीतः कृतके[1] शरीरामये नाडीदर्शनात्पथ्यासज्ञतां निवेदयन्निदमूचे। तदेव नास्तीति। ततस्त्वं मया रोगप्रतीकाराय नाकारितः किं तु पथ्यदानेन बुभुक्षाप्रतीकारार्थमेव । ततो द्वात्रिंशत्सहस्राण्युपनयेत्युक्त्वा तेन बन्दीकृतस्तत्तथेति[2] निर्मायेत्याभिग्रहमग्रहीत् । यदतः परं प्रतीकारानिमित्तं नृपतेः सौधमपहाय नान्यत्र गन्तव्यमिति । ततः परमातुराणां प्रश्रवणालोकनान्निदानचिकित्सितं कुर्वाणः केनापि मायाविना कृतकामयचिकित्सितकौशलं बुभुत्सुना वृषभप्रश्रवणे दर्शिते सम्यक् तदवगम्य शिरोधूननपूर्वकं वृषभः स बहुखादनेन गोण्डितः[3] इत्यस्मै सत्वरमेव तैलनाली दीयतां नोचेद्विपत्स्यत इति तच्चित्ते चमत्कारमारोपयामास । अन्यदा राज्ञा निजग्रीवाबाधाप्रतीकारं पृष्टः । पलद्वयप्रमाणमृगमदपङ्कलेपेन शिरोर्त्तिरुपशाम्यतीति व्याहृते तथाकृते ग्रीवा सज्जीभूता । ततो नृपसुखासनवाहिना पामरेण नरेण शिरोबाधाप्रतीकारं पृष्टः । वृद्धकरीरमूलरसेन तन्मृत्तिकासहितेन लेपं

---

१ समानीय कृत्रिमे २ B D इत्यादिष्टस्तत्तथेति ३ गोडितः [ रुग्णः ]

विधेहीत्यभिदधे। ततो राज्ञा किमेतदिति पृष्टे देश-कालौ बलं शरीरप्रकृतिं च विमृश्यायुर्वेदविदा चिकित्सा क्रियत इति विज्ञपयति स्म॥ अन्यदा धूर्तैः कैश्चिदेकसंमत्या पृथक् २ युगलीभूय तत्प्रथमयुगलिकया विपणिमार्गे किमद्य यूयं वपुष्यपटव इति पृष्टः द्वितीययुगलिकया श्रीमुञ्जालस्वामिप्रासादसोपाने पृष्टः तृतीययुगलिकया तु राजद्वारे चतुर्थयुगलिकया द्वारतोरणे तथैव ततो भूयो भूयः पृच्छोत्पन्नेन शङ्कादूषणेन तत्कालोत्पन्नमाहेन्द्रज्वरस्त्रयोदशदिने विपेदे स वैद्य इति वैद्यलीलाप्रबन्धः।

अथ सान्तूमन्त्रिण उपायाद्राजपाटिकाव्याजेन श्रीकर्णाङ्गजेनान्यायकारी मदनपालो व्यापादितः॥ अथ कश्चिन्मरुमण्डलवास्तव्यः श्रीमालदेश्य उदाभिधानो वणिक् प्रावृट्काले प्राज्याज्यक्रयाय निशीथे व्रजन् कर्मकरैरेकस्मा-

१ BD भूयो राज्ञा विप्रलब्धः २ विज्ञप्य गृहं गतः ३ विपणिमार्गे पृष्टः ३ द्वारतोरणे ४ आकस्मिकं वपुरपाटवं पृष्टः ५ श्रीमुञ्जालस्वामिप्रासादे चापृच्छ्यमानः शङ्काविपदोषेणैव मृतः ६ अथ सान्तूनामा मन्त्री अन्यायकारिणं तं मदनपालं कालमिव जिघांसुः कदाचित्कर्णाङ्गजं गजेविरोप्य राजपाटिकाव्याजेन तद्गृहे नीत्वा पत्तिभिस्तं व्यापादयामास

स्केदारादपरास्मिन् जलैः पूर्यमाणे[1] तान्केयूयमिति[2] पप्रच्छ। तैर्वयममुकस्य कामुका इत्युक्ते ममापि क्वापि सन्तीति पृच्छन्, तैः कर्णावत्यां सन्तीत्यभिहिते स सकुटुम्बस्तत्र गतः वायटीयजिनायतने विधिवद्देवान्नमस्कुर्वन्कयापि लाछिनाम्न्या छिम्पिकया श्राविकया साधर्मिकत्वाद्ववन्दे। तया भवान् कस्यातिथिरित्युदीरितः, वैदेशिकोहमिति भवत्या एवातिथिरिति वदन् तया सह नीत्वा कस्यापि वणिजो गृहे कारितान्नपाकेन भोजयित्वा निजतनके क्वापि गृहे निवासितः। कालक्रमेण संपन्नसंपदिष्टिकाचितं गृहं चिकीर्षुः खातावसरे निरवधिं सेवधिमाधिगम्य तामेव स्त्रियमाहूय समर्पयन् तया निषिद्धः। तत्प्रभावेण ततः प्रभृति स उदयनमन्त्रीति नाम्ना पप्रथे।*तेन कर्णावत्यामतीतानागतवर्त्तमानचतुर्विंशातिजिनसमलंकृतः श्रीउदनविहारः कारितः। तस्यापरमातृकाश्चत्वारः सुताः वा-

* D यतः

कृतप्रयत्नानपि नैव कांश्चन स्वयं शयानानपि सेवते परान्।
द्वयेपि नास्ति द्वितयेपि विद्यते श्रियः प्रचारो न विचारगोचरः॥ १

१ B C पोषमाणे. २ अपरस्मिन्पूर्यमाणेम्भोभिः के यूयमिति.

हडदेवआम्बडबोहडसोलाकनामानोऽभूवन् ।

अथान्यस्मिन्नवसरे सान्तूनामा महामात्यः करेणुस्कन्धारूढो राजपाटिकायां व्रजन् व्यावृत्तः स्वकारितसान्तूवसाहिकायां देवनमश्चिकीर्षया तत्र प्रविशन् वारवेश्यास्कन्धन्यस्तहस्तं कमपि चैत्यवासिनं सितवसनं ददर्श । ततो गजादवरुह्य कृतोत्तरासङ्गः पञ्चाङ्गप्रणामेन तं नमश्चकार । तत्र क्षणं स्थित्वा भूयस्तं प्रणम्य प्रतस्थे। ततः स लज्जयाऽधोवदनः पातालं प्रविविक्षुरिव तत्कालं सर्वमेव परिहृत्य मलधारिश्रीहेमसूरीणां समीपे उपसंपदमादाय संवेगरससंपूर्णः श्रीशत्रुंजये गत्वा द्वादशवर्षाणि तपस्तेपे। किंच तेनान्ये समानाः प्रतिबोधिताः मुनिश्चिन्तयति ।

रे रे चित्त कथं भ्रातः प्रधावसि पिशाचवत् ।
अभिन्नं पश्य चात्मानं रागत्यागात्सुखी भव ॥ १

संसारमृगतृष्णासु मनो धावासि किं वृथा ।
सुधामयमिदं ब्रह्मसरः किं नावगाहसे ॥ २ ॥

३कदाचित्स मन्त्री श्रीशत्रुंजये देवपादानां नमस्कर-

१ C आस्थडदेवआम्बडदेवबाहडसोल्लाः D सोलदेवभट. १

२ D गौतममिव नमश्चक्रे. ३ इति ध्यायन्स मुनिः कायोत्सर्गे तस्थौ।

णायोपगतो दृष्टपूर्वमिव मुनिं तं प्रणम्य तच्चरित्रवि-
चित्रितमनास्तं गुरुकुलादि पप्रच्छ। तत्त्वतो भवानेव
गुरुरिति तेनोक्ते कर्णौ पिधाय पाणिभ्यामेवं मा-
दिशेत्यज्ञातवृत्त्यैवं विज्ञपयंस्तेन मन्त्र्यूचे ॥

जो जेण शुद्धधम्मम्मि ठाविउ संजएण गिहिणा वा।
सो चेव तस्स जायइ धम्मगुरू धम्मदाणाउ ॥१॥

इति तस्मै मूलवृत्तान्तं निवेद्य तस्य दृढधर्मतां नि-
र्ममे ॥

इति मन्त्रिसान्तूदृढधर्मताप्रबन्धः ॥

अथानन्तरं श्रीमयणल्लदेव्या जातिस्मरणात्पूर्व-
भववृत्तान्ते श्रीसिद्धराजस्य निवेदिते श्रीमयणल्ल
देवी श्रीसोमनाथयोग्यां सपादकोटिमूल्यां हेममयीं
पूजामादाय यात्रायां प्रस्थिता। बाहुलोडनगरं प्राप्ता
पञ्चकुलेन कदर्थ्यमानेषु कार्पटिकेषु राजदेयविभा-
गस्याप्राप्त्या सबाष्पं पश्चान्निवृत्यमानेषु मयणल्लदे-
वी हृदयादर्शसंक्रान्ततद्बाधा स्वयमेव पश्चाद्व्याघु-
टन्ती अन्तरान्तरायभूतेन श्रीसिद्धराजेन विज्ञप्ता स्वा-
मिन्यलममुना संभ्रमेण कुतो हेतोः पश्चान्निवर्त्यते
इति राज्ञोक्ते यदैव सर्वथाऽयं करमोक्षो भवति तदैवा-

---

१ B C तद्गुरु. २ (यात्रिकेषु) ३ D तद्बाधपचारा

हं श्रीसोमेश्वरं प्रणमामि अशनं गृह्णामि नान्यथेति[1] श्रुत्वा राज्ञा पञ्चकुलमाकार्य तत्पट्टकस्याङ्कद्वासप्ततिलक्षानुत्पद्यमानान्विमृश्य तं पट्टकं विदार्य मातुः श्रेयसे करं मुक्त्वा करे जलचुलकं मुञ्चति स्म । ततः श्रीसोमेश्वरं गत्वा तया सुवर्णपूजया देवमभ्यर्च्य तुलापुरुषदानादीनि दानानि दत्त्वा

संग्रहैकपरः प्राप समुद्रोपि रसातलम् ।
दाता तु जलदः पश्य भुवनोपरि गर्जति ॥ १ ॥
सेनाङ्गपरिवाराद्यं सर्वमेव विनश्यति ।
दानेन जनितानन्दे कीर्तिरेकैव तिष्ठति ॥ २ ॥
दातुर्नाथसमो बन्धुर्भारमादाय यः परात् ।
लक्ष्मीरूपादविगमं निस्तारयति तं खलु ॥ ३ ॥

अतो महादानैर्मत्सदृशी कापि नाभून्न भवितेति दर्पाध्मातशिरा निर्भरं सुप्ता । तपस्विवेषधारिणा तेनैव देवेन जगदे । इहैव मदीयदेवकुलमध्ये[2] काचित्कार्पटिकनितम्बिनी यात्रायै आयातास्ति तस्याः सुकृतं याचनीयं त्वयेत्थमादिश्य तिरोहिते तस्मिन्राजपुरुषैरालोक्य समानीता । तस्मिन्पुण्ये याचितेऽप्यददाना कथमपि यात्रायां किं व्ययीकृतमिति

१ D नान्यथा किंचातः परमशननीरयोर्नियमश्च. २ देवायतने.

पृष्टा सती सा प्राह । अहं भिक्षावृत्त्या योजनशता-
न्तरमतिक्रम्य ह्यस्तनदिवसे कृततीर्थोपवासा पा-
रणकदिने कस्यापि सुकृतिनः पिण्याकमासाद्य त-
त्खण्डेन श्रीसोमेश्वरमभ्यर्च्य तदंशमतिथये दत्त्वा
स्वयं पारणकमकार्षं । भवती पुण्यवती यस्याः पि-
तृभ्रातरौ पतिसुतौ च राजानः। या त्वं बाहुलोडक-
रं मोचयित्वा सपादकोटिमूल्यया पूजया श्रीसो-
मेश्वरं पूजितवती सा[२] कथं मदीयपुण्यलब्धेछासि[३]
यदि न कुप्यसि तदा किंचिद्वच्मि । तत्त्वतस्तव
पुण्यान्मदीयं पुण्यं महीतले महीयः । यतः ॥
संपत्तौ नियमः शक्तौ सहनं यौवने व्रतम् ।
दारिद्र्ये दानमत्यल्पमपि लाभाय भूयसे ॥ १ ॥

इति युक्तेन वाक्येन तस्या गर्वं निराचकार[४] ॥
सिद्धराजस्तु समुद्रोपकण्ठवर्ती एकेन चारणेन ॥
को जाणइ तुह[५] नाह चीत तु हालेई चक्कवइ लउ।
लंकहले[६]वाहमग्गु निहालई करणउत्तु[८] ॥ १

* को जानाति तव चित्तं हेनाथ चक्रवर्त्तित्वं लब्धं अतः परं लङ्काफलं लब्धुं वाहमार्गं निभालयति किं कर्णपुत्रः ॥ १ ॥

१ C D यात्रायां. २ C कृशेपि पुण्ये कथंलुब्धासि. ३ D अग-ण्यपुण्यमर्जयन्ती सा. ४ B CD मा गर्वं विससर्ज. C ५ कौ ६ हालंतु. ७ काले. ८ लहु.

इत्यादि स्तूयमानोऽभूत् ॥

एवं तत्र यात्रायां व्यावृत्ते राज्ञि छलान्वेषिणा यशोवर्मणा मालवकभूपेन गूर्जरदेशे उपद्रूयमाणे सान्तूसचिवेन त्वं कथं निवर्त्तसे इति प्रोक्तः स राजाह । यदि त्वं स्वस्वामिनः सोमेश्वरदेवयात्रायाः पुण्यं ददासीत्युदीरितस्तच्चरणौ प्रक्षाल्य तत्करतले तत्पुण्यदाननिदानं[1] जलचुलुकं निक्षिप्य तं राजानं निवर्त्तयामास ततः श्रीसिद्धराजस्तद्वृत्तान्तोपगमनेन क्रुद्धस्तं[2] मन्त्र्येवमवादीत् । स्वामिन् यन्मया दत्तं तव सुकृतं याति ततस्तस्य सुकृतमन्येषामपि पुण्यवतां सुकृतं मया भवते प्रदत्तमेव । येन केनाप्युपायेन परचक्रं स्वदेशे प्रविशद्रक्षणीयमेवेति[3] वदता तेन नृपतिरनुनीतः । ततस्तेनैवामर्षेण मालवमण्डलं प्रतिष्ठासुः[4] सचिवान् शिल्पिनश्च सहस्रलिङ्गधर्मस्थानकर्मस्थाये[5] नियोज्य त्वरितगत्या तस्मिन्निष्पद्यमाने नृपतिः प्रयाणकमकरोत् । तत्र स्वजयकारपूर्वकं द्वादशवार्षिके विग्रहे संजायमानेऽद्य[6] मया धाराभङ्गा-

१ D अनिदानं. २ D क्रुद्धो नृपः पराङ्मुखोऽजनि । एकदा राजानं. ३ निवारणीयं. ४ प्रति यियासुः ५ (धर्मस्थानस्य कार्याधिकार.) ६ कथंचिद्धारादुर्गभङ्गं कर्त्तुमप्रभूष्णुरद्य.

नन्तरं भोक्तव्यमिति सचिवैः पत्तिभिः परमारराजपुत्रैः पञ्चशतीभिर्विपद्यमानैः राज्ञः प्रतिज्ञां दिनान्तेपि पूरयितुमक्षमैः कथंचित्तस्यां कणिकामयधाराभङ्गेन पूरितायां राजा पश्चाद्व्याघुटितुमिच्छुर्मुञ्जालसचिवं ज्ञापयामास। तेनापि त्रिकचतुष्कचत्वरप्रासादेषु निजपुरुषान्नियोज्य धारादुर्गभङ्गवार्त्तायां क्रियमाणायां तद्वासिना केनापि पुरुषेण प्रतोल्यां[1] यदि परबलं ढौकते तदैव दुर्गभङ्गो नान्यथेति तद्वाचमाकर्ण्य स विज्ञप्तः सचिवस्तं व्यतिकरं राज्ञे गुप्तविज्ञप्तिकया निवेदयामास । राज्ञापि तद्वृत्तान्तवेदिना तत्र सैन्ये ढौकिते दुर्गमन्तर्दुर्गमविमृश्य[2] यशःपटहनाम्नि बलवद्दन्तावलेऽधिरूढसामलनाम्नारोहकेण पश्चाद्भागेन त्रिपोलि[3]कपाटद्वये आहन्यमाने लोहमयार्गलायां भज्यमानायां बलाधिकतयान्तस्त्रुटितात्द्गजात्कर्णाङ्गजमुत्तार्य स्वयं यावदवरोहति तावत्स गजः पृथिव्यां पपात । सुभटतया विपद्य वडसरग्रामे स्वयशोधवल एव यशोधवलनाम्ना[4] विनायकरूपेणावततार ॥

---

१ D दक्षिणप्रतोल्या. २ दुर्गमं दुर्गमन्तर्विमृश्य. ३ A त्रिपोल.
४ C यशोधलो नाम.

सिद्धेस्तनशैलतटीपरिणतिदलितद्वितीयदन्त इव।
बिभ्राणो रदमेकं गजवदनः सृजतु वः श्रेयः ॥१॥
इति तदीया स्तुतिः ॥ इत्थं दुर्गभङ्गे सूत्रिते सति समराधिरूढं यशोवर्माणं षड्गुणैराबध्य तत्र भ
निजामाज्ञां जगन्मान्यां दापयित्वा यशोवर्मरूपया प्रत्यक्षयशःपताकया रोचिष्णुः श्रीपत्तनं प्राप । प्रतिदिनं सर्वदर्शनेष्वाशिर्वाददानायाहूतेषु यथावसरमाकारिता जैनाचार्याः श्रीहेमचन्द्रमुख्याः श्रीसिद्धराजमासाद्य नृपेण दुकूलदानादिभिरावर्जितोस्तैः सर्वैरप्यप्रतिमप्रतिभाभिरामैर्द्विधापि पुरस्कृतो नृपायेत्याशिषं श्रीहेमचन्द्रः पपाठ ॥
*भूमिं कामगवि स्वगोमयरसैरासिंच रत्नाकरा
मुक्तास्वस्तिकमातनुध्वमुडुप त्वं पूर्णकुम्भी[1]भव।
धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा-
न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः१
अस्मिन्काव्ये निःप्रपञ्चे प्रपश्यमाने तद्वचनचातुरीचमत्कृतचेता नृपस्तं प्रशंसन्, कैश्चिदसहिष्णुभिरस्मच्छास्त्राध्ययनबलादेतेषां विद्वत्तेत्यभिहिते

* (हैम प्राकृत व्याकरणेप्ययमस्ति) १ C कुम्भो.

राज्ञा पृष्ठाः श्रीहेमचन्द्राचार्याः । पुरा[1] श्रीजिनेन

---

१ D कैश्चिदसहिष्णुभिर्न मेन ॥ हेमचन्द्रनामा शिष्यः कदाचिन्नवलुञ्चिताशिरा जलविहरणाय व्रजन् गजभयात्सौधाभित्तिस्थितो गवाक्षस्थेनालिंगपुरोहितेन सारिणा पराभूतः[1] गुरवो विज्ञप्तास्तैरुक्तो मिथ्या दुःकृतं देहि । तद्दुःखेन निःस्टतोऽन्यगच्छीयदेवचन्द्रपद्माकराभ्यां सह श्रीकाश्मीरं प्रति । मार्गे नडोलाग्रामे सप्तमोपवासे श्रीसरस्वती प्रसन्ना जाता निजमूर्तिर्दर्शिता मित्रयोर्निवेदिते। श्लोकसप्तशत्या ग्रामो वर्णितः । मित्रद्वयस्य कार्यसिद्धिहेतोः स्तम्भतीर्थे प्रविशन्तः केनापि देशान्तरिणाकार्यविद्या[2] समर्पिता । इत्युक्तं च । मम मरणसमये मम शबोपरि त्रिभिर्नाभिमण्डले मन्त्रः स्मरणीयः शबो वरं दास्यति । एवं कृते श्मशाने मध्यरात्रौ शबेनोत्थाप्य वरो दत्तः । श्रीहेमचन्द्रेण राजप्रबोधो याचितः । देवचन्द्रेण हस्तसिद्धेराकृष्टिविद्या । पद्माकरेण पाण्डित्यं । अत्रान्तरे कृतकृत्यहेमचन्द्रो वलितः । कालभैरवीयमध्ये चाण्डिकाप्रासादे विश्रान्तस्तत्र लघुभैरवानन्दः शिष्यपञ्चशतीवृतः समेत्य, रेरे चण्डे चण्डे प्रचण्डे मह्यं मोदकान् देहीति भणित्वा सुवर्णमयकर्परमग्रे मुक्तं देव्या मोदकैर्भृतं। तेन सर्वेषां तेऽर्पिताः। हेमचन्द्रस्यापि हे शिष्य त्वमपि गृहाणेत्युक्तो। तेन तस्यापि करौ स्तम्भयित्वोक्तं । यद्यस्ति सत्त्वं तदा त्वं भक्षयेथाः । एवमुक्त चरणयोः पतितः। ततः पत्तने आयातं श्रीजयसिंहदेवः सन्मुखमेत्य समानीय हेमचन्द्रं गजाधिरूढं प्रवेश्य च पुरोहिततिरस्कृतं सूरिं, राज्ञा गुरव उपरोध्य हेमचन्द्रस्य पदस्थापना कारिता ॥ श्रीहेमचन्द्रगुरवोऽष्टम्यां चतुर्दश्यां च श्रीजयदेवभुवनं प्रयान्ति। पौषधागारे श्रीस्थूलिभद्रचरितं वाचयन्तः पुरोहितेन राज्ञाग्रे उपहसिताः, महाराज कोऽयमसत्प्रलापः. सर्वेर-

---

(१ सर्वथा बलवताऽत एव तिरस्कृतः) ( २ देवाकर्षणविद्या.)

श्रीमन्महावीरेणेन्द्रस्य पुरतः शैशवे यद्व्याख्यातं तज्जैनव्याकरणमधीयामहे वयमिति तद्वाक्यानन्तरमिमां पुराणवार्तामपहायास्माकमेव सन्निहितं नृपं व्याकरणकर्त्तारं कमपि ब्रूतेति तत्पिशुनवाक्यादनु ते प्राहुः। यदि श्रीसिद्धराजः सहायीभवति तदा कतिपयैरेव दिनैः पञ्चाङ्गमपि नूतनं व्याकरणं रचयामः ॥ अथ नृपेण प्रतिपन्नमिदं निर्वहणीयमित्यभिधाय तद्विसृष्टाः सूरयः स्वं स्थानं ययुः। ततो यशोवर्मराज्ञः करे निःप्रतीकारां क्षुरीं

---

सभोजने पूर्वपरिचितवेश्यागृहे कामनिग्रहः। परं किं क्रियते भवद्दृक्षुभाः। राज्ञोक्तं। आचार्या अत्र समेष्यन्ति तदा वक्तव्यं परोक्षे न। सूरिष्वागतेषु राज्ञोक्तं। किं२ वाचयन्तो वर्तध्वे यूयं। सूरिभिः समग्रमपि संक्षेपतः स्थूलिभद्रचरितं कथितं। आलिगेनोक्तं। महाराज,

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशिन—
स्तेपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा—
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥ १

गुरुभिरुक्तं। सिंहो बलीयो द्विरद[१] इत्यादि॰

आलिगेनोक्तं। अस्माकमेव शास्त्राणि पठित्वास्माकमेव पतयः संजाताः। गुरुभिरुक्तं। जैनेन्द्रव्याकरणं किं भवदीयं यत्पुरा

---

(१ सिंहादयश्चिरकाले श्वानस्तु न तथाऽत एव न मैथुने केवलमाहारः कारणं)

समर्प्य तदग्रासने वयं गजाधिरूढाः पुरमध्ये प्रवेशं करिष्याम इति राज्ञः प्रतिश्रवमाकर्ण्य मुञ्जालमन्त्रिणा प्रधानवृत्तिं मुञ्चता किमिति राज्ञा निर्बन्धपृष्टेन

मा स्म सन्धिं विजानन्तु मा स्म जानन्तु विग्रहम्।[1]
आख्यातं यदि शृण्वन्ति भूपास्तेनैव पण्डिताः ॥१॥

इति नीतिशास्त्रोपदेशात्स्वबुद्ध्यैव स्वामिना प्रतिज्ञातोयमर्थः सर्वथायतौ न हित इत्युक्तं। ततो वरमसून्परिहरामि न तु विश्वविदितं प्रतिश्रवं[2]मिति नृपेणोक्ते मन्त्री दारुमयीं क्षुरिकां[3] पाण्डुवर्णसर्जरसेन पिहितां पृष्ठासनस्थस्य यशोवर्मणः करे समर्प्य तदग्रासनस्थो नृपतिः श्रीसिद्धराजः परमोत्सवेन श्रीमदणहिल्लपुरं प्रविवेश। प्रावेशिकमङ्गलानन्तरं[4] नृपेण स्मारिते व्याकरणवृत्तान्ते बहुभ्यो देशेभ्यस्तद्वेदिभिः पण्डितैः सह सर्वाणि व्याकरणानि समानीय श्रीहेमाचार्यैः श्रीसिद्धहेमाभिधानं पञ्चाङ्गमपि व्याकरणं सपादलक्षग्रन्थप्रमाणं संवत्सरेण रचयांचक्रे। राजवाह्यकुम्भिकुम्भे

१ [ पण्डितपक्षे राजपक्षे च प्रसिद्धोर्थः ] २ C विश्रुतं प्रतिश्रुतं
३ C D छुरिका. ४ B C व्याकुलतानन्तरं.

तत्पुस्तकमारोप्य सितातपत्रारणे ध्रियमाणे चामरग्राहिणीचामरयुग्मवीज्यमानं नृपमन्दिरमानीय प्राज्यवर्यपूजापूर्वं कोशागारे न्यधीयत । ततो राजाज्ञयान्यानि व्याकरणान्यपहाय तस्मिन्नेव व्याकरणे सर्वत्राधीयमाने केनापि मत्सरिणा भवदन्वयवर्णना विरहितं व्याकरणमित्युक्ते श्रीहेमाचार्यैः क्रुद्धं राजानं राजमानुपादवगम्य द्वात्रिंशच्छ्लोकान्नूतनान्निर्माय द्वात्रिंशत्सूत्रितपादेषु तान्संबन्धं[1] दधानानेव लेखयित्वा प्रातर्नृपसभायां वाच्यमाने व्याकरणे चौलुक्यवंशोपश्लोककेन श्लोकान्वाचयन्नृपं संतोषयामास ॥ यथा ॥

हरिरिव बलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव।
कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः १

इत्यादि[2]॥ तथा च श्रीसिद्धराजदिग्विजयवर्णने द्व्याश्रयनामा ग्रन्थः कृतः ॥

भ्रातः संवृणु पाणिनि प्रलपितं कातन्त्रकन्था वृथा
मा कार्षीः कटु शाकटायन वचः क्षुद्रेण चान्द्रेण किम् -
कः कण्ठाभरणादिभिर्बठरयत्[3]यात्मानमन्यैरपि

(१) संबद्धान् २ चौलुक्यवंशोपश्लोकान् द्वात्रिंशत्सूत्रपादान्तेषु द्वात्रिंशत् श्लोकानवलोक्य प्रमुदितो राजा व्याकरणं विस्तरयामास. (३ मूर्खयति)

श्रूयन्ते यदि तावदर्थमधुराः श्रीहेमचन्द्रोक्तयः ॥१॥
अथ श्रीसिद्धराजेन पत्तने यशोवर्मराज्ञस्त्रिपुरुषप्रभृती-
न्सर्वानपि राजप्रासादान्सहस्त्रलिङ्गप्रभृतीनि च धर्म-
स्थानानि दर्शयित्वा प्रतिवर्षं देवदायपदे कोटिद्रव्य-
व्ययं निवेद्यैतत्सुन्दरमसुन्दरं वेति यशोवर्मा पृष्ट इ-
त्यवादीत्। अहं ह्यष्टादशलक्षप्रमाणमालवदेशाधिप-
स्त्वत्तः पराभवपात्रं कथं भवेयं, परं महाकालदेवस्य
दत्तपूर्वत्वाद्देवद्रव्यं मालवकः। तद्भुञ्जानास्तत्प्रभा-
वादुदितास्ताम्यिता वर्त्तामहे। भवदीयान्वयराजानोऽ
प्येतावद्देवद्रव्यव्ययनिर्वाहाक्षमौ[2] लुप्तसर्वदेवदायपदा
विपदां पदं भविष्यन्ति[3]। अथ सिद्धराजः कदा-
पि सिद्धपुरे रुद्रमहाकालप्रासादं कारयितुकामः
कमपि स्थपतिं स्वसंनिधौ स्थापयित्वा प्रासाद-
प्रारम्भलग्ने तदीयकलासिकां लक्षद्रव्येणोत्तमर्णगृ-
हीतां मोचयामास। तां वंशशलाकामयीमालोक्य
किमेतदिति राजा पप्रच्छ। ततो मया प्रभोरौदार्य-
परिक्षानिमित्तमेतत्कृतमिति स्थपतिरुक्तवान्। तत-
स्तद्द्रव्यमनिच्छतेऽपि नृपतिनार्पितं। ततः क्रमेण[4]

१ उद्धापयित्वा. २ देवद्रव्यव्ययमनिर्वहन्तो. ३ मूलनाशं वि-
नङ्क्ष्यन्ति. ४ तद्द्रव्यप्रत्यर्पणापूर्वं.

त्रयोविंशतिहस्तप्रमाणे परिपूर्णे प्रासादेऽश्वपतिगज-
पतिनरपतिप्रभृतीनामुत्तमभूपतीनां मूर्त्तीः कारयि-
त्वा तत्पुरो योजिताञ्जलिं स्वां मूर्त्तिं निर्माप्य देशभ-
ङ्गेपि प्रासादस्याभङ्गं याचितवान्। तस्य प्रासादस्य
ध्वजारोपप्रस्तावे सर्वेषामपि जैनप्रासादानां पता-
कावरोहं कारितवान्। यथा मालवकदेशे महा-
कालवैजयन्त्यां सत्यां जैनप्रासादेषु न ध्वजारोप
इति। अन्यदा सिद्धराजस्य मालवकमण्डलं प्रति
थियासतः केनापि व्यवहारिणा सहस्रलिङ्गकर्म-
स्थाये याच्यमाने विभागे तत्सर्वथाऽदत्ते च
कृतप्रयाणस्य कतिपयदिनानन्तरं कोशाभावा-
त्कर्मस्थायस्य विलम्बमवगम्य तेन व्यवहा-
रिणा सुतस्य पार्श्वात्कस्यापि धनाधिपस्य
वध्वास्ताडङ्कमपहार्य[1] तद्दण्डपदे द्रव्यलक्षत्रयं द-
त्तं तेन कर्मस्थायः स जात इति वार्त्तां शृण्वतो
मालवके वर्षाकालं तस्थुषो राज्ञो वचनगोचरा-
तीतः प्रमोदः संजातः। अथ प्रावृषेण्ये घने प्रगल्भ-
वृष्ट्या क्षोणीमेकार्णवां कुर्वति वर्द्धापनिकाहेतोः
प्रधानपुरुषैः प्रहितः मरुदेशीयपुरुषो नृपतिपुरतः

१ A D ताडङ्केन्यहारिते

सविस्तरं वर्षास्वरूपं व्यज्ञपयत्। तदा त्वागतेन-गूर्जरधूर्त्तेण नरेण सहस्रलिङ्गसरोभृतामिति स्वामिन् वर्द्धाप्यसे[1] इति तद्वाक्यानन्तरमेव सिक्कक-पतितमार्जारस्येव मरुवृद्धस्य पश्यतः सर्वाङ्गलग्न माभरणं नृपतिर्गूर्जराय ददौ। अथ वर्षान्तरं[2] प्रत्यावृत्तः क्षितिपतिः श्रीनगरमहास्थाने दत्तावासो नगरप्रासादेषु ध्वजस्यालोके[3] के एते प्रासादा इति ब्राह्मणान्पप्रच्छ। तैर्जिनब्रह्मादीनां प्रासादस्वरूपे निवेदिते सामर्षो राजा मया गूर्जरमण्डले जैन-प्रासादानां पतकासु निषिद्धासु किं भवतामिह नगरे पताकावज्जिनायतनामित्यादिशं तैर्विज्ञपयांचक्रे। अवधार्यतां श्रीमन्महादेवेन। कृतयुगप्रारम्भे महा-स्थानमिदं स्थापयता श्रीऋषभदेवनाथश्रीब्रह्मप्रा-सादयोः सुकृतिभिरुद्ध्रियमाणयोश्चत्वारो युगा व्य-तीताः। अन्यच्च श्रीशत्रुंजयमहागिरेर्नगरमिदमुपत्य-काभूमिः। यतो नगरपुराणे उक्तं॥

पञ्चाशदादौ किल मूलभूमे—
र्दशोर्ध्वभूमेरपि विस्तरोस्य।

---

१ A B C वर्द्धापयसे   २ B मञ्चरचनाकृतसर्वावसरस्तत्र
३ C ध्वजव्रजमालोक्य

उच्चत्वमष्टैव तु योजनानि
मानं वदन्तीह जिनेश्वराद्रेः॥ १

इति कृतयुगे आदिदेवश्रीऋषभस्तत्सूनुर्भरतस्तन्नाम्ना भरतखण्डमिदं प्रतीतम्॥

*नाभेः सुतः[1] स वृषभो मरुदेविसूनु-
र्यो वै चचार समदृग् मुनियोगचर्याम्।
तस्यार्हसत्यमृषय[3]ः पदमामनन्ति
स्वच्छः प्रशान्तकरणः समदृक् सुधीश्च[4]॥ १॥

*अष्टमो[5] मरुदेव्यां तु नाभेर्जात उरुक्रमः।
दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम्॥ ३॥

इत्यादिपुराणोक्तान्युदीर्य विशेषप्रत्ययाय श्रीवृषभदेवप्रासादकोशाच्छ्रीभरतभूपनामाङ्कितं पञ्चजनवाह्यं कांस्यतालमानीय नृपाय दर्शयन्तो जिनधर्मस्याद्यत्वं स्थापयामासुः। ततः स्व-

* श्रीभागवतपुराणे स्कन्ध. २ अ. ७ श्लो. १० मुद्रिते असावृषभ आस सुदेविसूनुः। यत्पारमहंस्यमृषयः। इति पाठौ॥

* तत्रैव स्कन्धः १ अ. ३ श्लो. १३ अष्टमे मेरुदेव्यामिति पाठः।

१ C इति. २ A B अथो ३ A B D आर्हतश्च ऋषयः ४ D सुधीः सः ५ अष्टमे ६ C D कृतः ७ यथावस्थिततदाद्यत्वस्थापनाय श्रीऋषभ: ८ D द्विजा जैनधर्मस्याद्यधर्मत्वं स्थापयांचक्रुः

दुर्मेदुरमनसा राज्ञा हायनान्ते जैनप्रासादेषु ध्वजारोपः कारितः । अथ श्रीपत्तने प्राप्तो नृपः । प्रस्तावे सरोवरपेदेषु[1] वाच्यमानेषु[2] सापराधव्यवहारिसुतदण्डपदाल्लक्षत्रयं कर्मस्थाये[3] व्यवकलितमिति श्रुत्वा लक्षत्रयं तस्य गृहे प्रस्थापयामास । ततः स व्यवहारी, उपायनपाणिर्नृपोपान्तमुपेत्य, किमेतदिति विज्ञपयन् राज्ञादिष्टः । यः कोटिध्वजो व्यवहारी स कथं तादृक्चौरस्त्वयाऽस्य धर्मस्थानस्य धर्मविभागः प्रार्थितोपि यन्न लब्धस्ततः प्रपञ्चचतुरेण मृगमुखव्याघ्रेणान्तःशठेन प्रत्यक्षसरलेन त्वयेदं कर्म निर्मितम् ॥ यतः

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥

मुखं पद्मदलाकारं वाचश्चन्दनशीतलाः ।
हृदयं कर्त्तरीभूतमेतद्धूर्त्तस्य लक्षणम् ॥ २ ॥

यस्यान्तर्गिरिशागाररदीपिकाः[4] प्रतिबिम्बिताः ।
शोभन्ते निशि पातालव्यालमौलिमणिश्रियः[5] ॥३॥

---

(१ आयव्ययावशिष्टाख्येषु) २ C D सरोवरकर्मस्थायत्रिपदेषु (३कार्यस्थाने कारखाना भाषायाम्. ४ श्मशानं ५सर्पाणां श्रीरिव श्रीर्यासां ताः।निशातुल्ये राज्ये शोभन्ते न तु दिवसतुल्ये मद्राज्ये इति भावः)

इत्यादि वाक्यैर्भृशं खण्डितः

एकदा श्रीसिद्धेन रामचन्द्रः पृष्टो। ग्रीष्मे दिवसाः कथं गुरुतराः। रामचन्द्रः प्राह।

देव श्रीगिरिदुर्गमल्ल भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गवल्गनखुरक्षुण्णक्षमामण्डली।
वातोद्धूतरजोमिलत्सुरसरित्संजातपङ्कस्थली-
दूर्वाचुम्बनचञ्चुरा रविहयास्तेनैव वृद्धं दिनम् ॥१॥

लब्धलक्षा विपक्षेषु विलक्षास्त्वयि मार्गणाः।
तथापि तव सिद्धेन्द्र दातेत्युत्कन्धरं यशः ॥ २ ॥

अथ कदाचिद्राज्ञा ग्रथिलाचार्या जयमङ्गलसूरयः पुरवर्णनं पृष्टा ऊचुः ॥

एतस्यास्य पुरस्य पौरवनिताचातुर्यतानिर्जिता
मन्ये हन्त सरस्वती जडतया नीरं वहन्ती स्थिता।
कीर्तिस्तम्भमिषोच्चदण्डरुचिरामुत्सृज्य बाहोर्बलात्तन्त्रीकां गुरुसिद्धभूपतिसरस्तुम्बां निजां कच्छपीम् ॥ १ ॥

अन्यच्च

महालयो महायात्रा महास्थानं महासरः।
यत्कृतं सिद्धराजेन धरिण्यां तत्करोतु कः ॥ १ ॥

॥ अथ श्रीपालकविना सहस्रलिङ्गसरोवरस्य

रचितायां प्रशस्तिपट्टिकायामुत्कीर्णायाम् ।

तत्स्थकाव्यमिदम् ।

न मानसे माद्यति मानसं[1] मे
पम्पा न संपादयति प्रमोदम् ।
अच्छोदकाच्छोदकमत्र[2] सारं
विराजते कीर्तितसिद्धि भर्तुः ॥ १ ॥

तत्प्रशस्तिशोधनाय सर्वदर्शनेष्वाहूयमानेषु श्रीहेमचन्द्राचार्यैः सर्वविद्वज्जनानुमते प्रशस्तिकाव्ये भवता वैदग्ध्यं किमपि न प्रकाश्यमित्युक्त्वा पण्डितरामचन्द्रोनुशिष्यस्तत्र[3] प्रहितः । ततः सर्वविद्वद्भिः शोध्यमानायां प्रशस्तौ नृपोपरोधाच्छ्रीपालकवेर्दक्ष्यदाक्षिण्याच्च सर्वेषु काव्येषु मन्यमानेषु ॥

कोशेनापि युतं दलैरुपचितं नोच्छेत्तुमेतत्क्षमं
स्वस्यापि[4] स्फुटकण्टव्यतिकरं पुंस्त्वं च धत्ते नहि ।
एकोप्येष करोति कोशरहितो निष्कण्टकं भूतलं
मत्वैवं कमला विहाय कमलं यस्यासिमाशिश्रियत् १

विशेषणास्मिन्काव्ये प्रशस्यमाने श्रीसिद्धराजे-

(१ मानससरो मनसि न हर्षं करोति २ अच्छोदकनामकात्सरसो निर्मलोदकं) ३ B अनुशिक्ष्यः (४ असिपक्षे कमलपक्षे च; सैन्यैः पत्रैश्च )
५ A D स्वस्थापि

न पृष्टः श्रीरामचन्द्रश्चिन्त्यमेतदित्यवादीत् अथ तैरेव सर्वैरनुयुक्तः, एतस्मिन्काव्ये सैन्यवाचको दलशब्दः कमलशब्दस्य नित्यक्लीबत्वमिति दूषणद्वयं चिन्त्यं। ततः सर्वानपि पण्डितानुपरुध्य दलशब्दो राजसैन्यार्थे प्रमाणीकारितः[1] कमलशब्दस्य तु लिङ्गानुशासनसिद्धं नित्यक्लीबत्वं केन निर्णीयते[2] इति पुंस्त्वं च धत्ते न वेत्यक्षरभेदः कारितस्तदा श्रीसिद्धराजस्य संजातदृष्टिदोषेण पं॰रामचन्द्रस्य वसतौ प्रविशत एव लोचनमेकं स्फुटितम् ॥

अथ कदाचित् ॥

आयुक्तः प्राणदो लोके वियुक्तो मुनिवल्लभः ।
संयुक्तः सर्वथानिष्टः केवली[3] स्त्रीषु वल्लभः ॥ १

इति डाहलदेशीयनरपतियमलपत्रान्ते लिखितश्लोकव्याख्यानावसरे तूष्णींस्थितेषु पण्डिते[4]-

---

१ A B D प्रमाणीकृतः २ A निर्णीयते ३ A C श्रमणाप्रियः। प्रयुक्तः सर्वविद्विष्टः केवलः D ४ सन्धिविग्रहिकैरानीतयमलपत्रेषु श्लोकमेनं लिखितं निशम्य किमेतदिति पृष्टास्ते प्राहुः । तत्रैकैकप्रधाना भूयांसो विद्वांसस्तत्पार्श्वाद्बुधोऽयं श्लोको व्याख्येय इति तद्वाचमाकर्ण्य सर्वैरपि विद्वद्भिरज्ञाततदर्थैर्विमृशद्भिर्नृपेण पृष्टा हेमाचार्या हारशब्दमध्याहार्य व्याचख्युः

षु श्रीहेमचन्द्राचार्यैं राज्ञा पृष्टैर्हारशब्दमध्याहार्य व्याख्यातः[1]। अन्यदा सपादलक्षक्षितिपतिना।

*पइली ताव न अणुहरइ गोरीमुहकमलस्स।

इति समस्या दोधकार्द्धे प्रहिते तैः कविभिरपूर्यमाणे।

*अदिठी किमु उम्मीयइ पडिपयली[2] चन्द्रस्स॥१॥

इति श्रीहेमचन्द्रनामा मुनीन्द्रस्तां पूरयामास॥

अन्यदा श्रीसिद्धराजो नवघणाभिधानमाभीरराणकं निगृहीतुकामः पुरैकादशवारं निजसैन्यैः पराजिते सति श्रीवर्द्धमानादिषु पुरेषु प्राकारं[3] निर्माप्य स्वयमेव प्रयाणकमकरोत्। तद्भागिनेयदत्ते संकेते सति वप्रपरावर्त्तकालेयं द्रव्यव्यापादित एव करणीयो नवघनो न पुनरस्त्रादिभिरिति परिग्रहदत्तान्तरस्थः सः विशालाघ्छालाद्बहिराकृष्य द्रव्यवासणैरेवं ताडयि-

(१ आहारः विहारः संहारः हारः)

* प्रतिपच्चन्द्रज्योत्स्ना तावन्नानुसरति गौरीमुखकमलं॥

* अदृष्टा किमून्मीयते प्रतिप्रतिपज्ज्योत्स्ना चन्द्रस्य, ॥१॥

(प्रथमकलाऽदर्शनादेव प्रतिप्रच्छब्देन द्वितीया लक्ष्यते)

२ A B ओलीतावन अहरइ अहिठी किमवन्नियइ D किमवन्नीयइ तडिपयली पडिपइली. ३ प्राकारप्रकार निरूप्य. ४ A तद्भागिनेयेन ५ A B इति याचिते राज्ञा जयसिंहदेवेन स शालात् (६ भाण्डैरेव)

त्वा व्यापादितः[1]। अयं द्रव्यव्यापादित एव कृत इति वचनविज्ञापनात् परिग्रहो[2] बोधितः। अथ तद्राज्ञ्याः शोकपतिताया वाक्यानि ॥

*सइरु[3] नहीं स राणइं[4] कुलाईउ नकुलाईं इ।
सइ सउ षङ्गारिहिं प्राणकइ वइसानरि होमीइं[5]॥१

*राणा सव्वे वाणिया जेसलु वड्डउ सेठि।
काहूं वणिजडु माण्डीयउ अम्मीणां[6] गढहेठि ॥२॥

*तइं गडूआ गिरनार काहूं मणि मत्सरु धरिउ।
मारीतां षङ्गार एक्कासिहरु न ढालिउं ॥३

---

* हे सख्यः नायं स राणकः न च कुलानि किं तु नकुलान्येव सत्यः सर्वाः खेङ्गेरो नहि किंतु अङ्गारस्तत्र वैश्वानरे प्राणान् आहुतीकुर्मः १।

* राणकाः सर्वे वणिजः यथा जेसलाख्यो महान् श्रेष्ठी अहो कथं वाणाज्यं मण्डितं अस्माकं दुर्गाधः अस्मदर्थे भाण्डवाज्यमारब्धं किं स्वामिनेत्युत्प्रेक्षा २।

* हे गिरिनार हे रैवतक यूयं गुरवः कथं तदा, यदा मनसि मत्सरं धरन्तः एवं न चेर्त्तर्हि मृतेपि खेङ्गारे एकशिखरमपि नाधो ढौकितं मृते स्वामिन्युन्नताशिरस्त्वं न शोभते इत्युपालम्भः ॥ ३ ॥

१ B तं व्यापादयामास २ C इति वचनबलात्तद्भागिनेयपरिग्रहः ३ सयरू नहि स राण ४ न कुलाई न कुलाई ५ सई सउ षंगारिहि पाण किनवइसारि होमिया ६ अम्मीणां.

*जेसल मोडि मवाह वलिवलि विरूपं भावियइ ।
नइ जिम नवा प्रवाह नवघण विणु आवइ नहि॥४
*वाढी तो वढवाणै वीसारतां न वीसरइ।
सोनासमा पराण भोगावह तइं भोगवीइ॥ ५

इत्यादीनि बहूनि वाक्यानि यथावसरं मन्तव्यानि ॥ ततो महं० जाम्बान्वयस्य सज्जनदण्डाधिपतेः श्रीसिद्धराजेन योग्यतया सुराष्ट्रविषये व्यापारो नियुक्तः । तेन स्वामिनमविज्ञाप्य वर्षत्रयोद्ग्राहितेन श्रीमदुज्जयन्ते श्रीनेमीश्वरस्य काष्टमयं प्रासादमपनीय नूतनः शैलमयः प्रासादः कारितः । चतुर्थे वर्षे सामन्तचतुष्टयं प्रस्थाप्य सज्जनदण्डाधिपतिं श्रीपत्तने समानीय राज्ञा वर्षत्रयोद्ग्राहितद्रव्यं याचि-

* जेसलाख्यं यच्छैलाख्यं वा मम मया मुक्तं वा देशस्थानं पुनः पूर्नविरूपं भाव्यते । पक्षे यः शैलं मर्दयित्वाप्यागतः प्रवाहो यत्र सा नदी नवघनं नवीनमेवं पक्षे राजानं विना नवीना पूर्णशोभावहा नास्ति किं तु विरूपा यथा ॥ ४ ॥ !

* वृश्चितोपि वर्द्धितोऽत एव तव नाम वर्द्धमानग्राम इति सत्यं एतद्विस्मारितमपि न विस्मरिष्यति कथं तदेवाह यतः सुवर्णवत्प्रियाः प्राणाः भोगावर्त्तनदेन भुक्ताः ततस्तवापि सत्यं नाम ॥ ५ ॥ !

१ C वरुण २ नवयण विण आवै नहीं ३ B वाटी तवउं वढमाण ४ सूना ५ C भोगावह पइं भोगिव्या ६ D सवनदण्ड. ७ सुराष्ट्रा.

तः । तद्देशव्यवहारिणां पार्श्वात्तावद्द्रव्यमुपढौक्योज्जयन्तप्रासादजीर्णोद्धारपुण्यमुद्राहितद्रव्यं वा द्वयोरेकमवधारयतु देवः । इति तेनोक्ते श्रीसिद्धराजस्तद्बुद्धिकौशल्यचमत्कृतस्तीर्थोद्धारपुण्यमेवाररीचकार । स पुनस्तस्य देशस्याधिकारमाधिगम्य शत्रुंजयोज्जयन्ततीर्थयोर्द्वादशयोजनयोर्यावद्दुकूलमयं[1] महाध्वजं ददौ ॥

इति रैवतकोद्धारप्रबन्धः ॥

अथ भूयः सोमेश्वरयात्रायाः प्रत्यावृत्तः श्रीसिद्धाधिपो रैवतोपत्यकायां दत्तावासस्तद्दैवस्[2]तत्कीर्त्तनं दिदृक्षुः मत्सरोत्सेकपरैर्द्विजन्मभिः सजलाधारलिङ्गाकारोयं गिरिरित्यत्र पादस्पर्शो नार्हतीति कृतकवचनैर्निषिद्धस्तत्र पूजां प्रस्थाप्य स्वयं शत्रुंजयमहातीर्थसन्निधौ स्कन्धावारं न्यधात् । तत्र पूर्वोक्तैर्जातिपिशुनैः कृपाणिकापाणिभिरकैपस्तीर्थमार्गे निरुद्धे सति श्रीसिद्धाधिपो रजनीमुखे कृतकार्पटिकवेषः[3] स्कन्धनिहितविहङ्गिकोभयपक्षन्यस्तगङ्गोदकस्तन्मध्येभूत्वाऽपरिज्ञातस्वरूप एव गिरिमधि-

१ A B द्वादशयोजनायामं २ स्वं ३ D प्राकृतवेषः ४ उभयतो बद्धशिक्यः पर्याहार्यो भारो यत्र गर्गरिकादौ ' । विहङ्गिकेत्युच्यते

रुह्य गङ्गोदकेन श्रीयुगादिदेवं स्नपयन् पर्वतस-मीपवर्त्तिग्रामद्वादशकशासनं श्रीदेवाचार्यै श्राणयामास। तीर्थदर्शनाच्चोन्मुद्रितलोचन इवा-मृताभिषिक्त इव जातः। अत्र पर्वते सल्लकीवनसरित्पूरसंकुले इहैव विन्ध्यं करिष्यामी[1]त्यवन्ध्यप्रतिज्ञो, हस्तियूथनिष्पत्त्ये विहस्तमनसं[2] मनोरथेनापि तीर्थ-विध्वंसपातकिनं धिग्मामिति श्रीदेवपादानां पुरतो राजलोकविदितं स्वं निनिन्द। सानन्दो गिरेरवत-तार॥ अथ श्रीदेवसूरिचरितं व्याख्यास्यामः॥

तस्मिन्नवसरे कुमुदचन्द्रनामा दिगम्बरस्तेषु दे-शेषु चतुरशीतिवादै[3]र्वादिनो निर्जित्य कर्णाटदेशाद्गु-र्जरदेशं जेतुकामः कर्णावतीं प्राप। तत्र भट्टारकश्री-देवसूरीणां चातुर्मासके स्थितानां श्रीअरिष्टनेमिप्रा-सादे धर्मशास्त्रव्याख्याक्षणे वचनचातुरीमनुच्छिष्टा-माकर्ण्य तत्पण्डितैस्तद्वृत्तान्ते निवेदिते कुमुदच-न्द्रस्तेषामुपाश्रये सतृणमुदकं प्रक्षेपितवान्। अथ तैर्महर्षिभिः पण्डितैः खण्डनतर्कादिप्रमाणप्रवीणै-स्तस्मिन्नर्थेऽनाकर्णिततयाऽवज्ञाते सति श्रीदेवा-

१ C विन्ध्यवनं रचयिष्यामीति. २ (व्याकुलचित्तं ३ शान्त्याचार्यकृतोत्तराध्ययनवृत्तौ]

चार्यजामिं तपोधनां चेटकैराधिष्ठितां विधाय नृ-
त्यजलानयनादिभिर्विविधाभिर्विडम्बनाभिर्विडम्ब्य
तेषु चेटकेषूपहृतेषु[१] तान् भृशं पराभवान्निर्भर्त्स-
नपरानपवार्य[२] श्रीदेवसूरिभिरुक्तं वादविद्याविनो-
दाय भवता पत्तने गन्तव्यं । तत्र राजस-
भायां भवता सह वादं करिष्याम इत्यादिष्टे
स कृतकृत्यमनाः स आशावासनः श्रीपत्तन-
परिसरं प्राप्तः । श्रीसिद्धराजेन मातामहगुरुरिति
प्रत्युद्गमादिना सत्कृतस्तत्रावासान्दत्वा तस्थौ -
श्रीसिद्धराजेन वादनिष्णाततां पृष्टाः श्रीहेमाचार्या-
श्चतस्टषु विद्यासु परं प्रावीण्यं बिभ्राणं जैनमुनि-
गजयूथाधिपं सिताम्बरशासनवज्रप्राकारं नृपस-
भाशृङ्गारहारं कर्णावतीस्थितं श्रीदेवाचार्यं वाद-
विद्याविदं वादीभकण्ठीरवं प्राहुः। अथ राज्ञा तदा-
ह्वानाय प्रेषितविज्ञप्तिकायां श्रीसंघलेखेन सममा-
गतायां श्रीदेवसूरयः पत्तनं प्राप्य नृपोपरोधाद्वाग्दे-
वीमाराधयामासुः । तया तु वादिवेतालीयश्री-
शान्तिसूरिविरचितोत्तराध्ययनबृहद्वृत्तौ दिगम्बर-
वादस्थले चतुरशीतिविकल्पजालोपन्यासे भवद्भिः

१ C उपाहृतेषु. (२ निवार्य)

प्रतन्यमाने दिग्वाससो मुखे मुद्रापयिष्यन्तीत्या-
देशानन्तरं गुप्तवृत्त्या कुमुचन्द्रसन्निधौ पण्डितान्प्र-
स्थाप्य कस्मिन् शास्त्रे विशेषकौशलमिति ज्ञापिते ।

देवादेशयं[1] किं करोमि सहसा लङ्कामिहैवानये
जम्बूद्वीपमितो नयेयमथवा[2] वारांनिधिं शोषये ।
हेलोत्पाटिततुङ्गपर्वतशिरोग्रावत्रिनेत्राचल[3]*-
क्षेपक्षोभविवर्द्धमानसलिलं बध्नामि वा वारिधिम्[4] १

इति तदुक्तिश्रवणात्सिद्धान्तकुशलतां तस्या-
ल्पीयसीमवगम्य जितं मन्यमानाभ्यां श्रीदेवचार्य-
श्रीहेमचन्द्राभ्यां प्रमुदितं । अथ देवसूरिप्रभो रत्न-
प्रभाभिधानः प्रथमशिष्यः क्षपामुखे गुप्तवेषतया
कुमुदचन्द्रस्य गुरूदरे गतः । तेन कस्त्वमित्यभि-
हिते अहं देवः । देवः कः । अहं । अहं कः । त्वं ।
त्वं कः । श्वा । श्वा कः । त्वं ॥ कः अहं देव इति
तयोरुक्तिप्रत्युक्तिबन्धे चक्रभ्रमं भ्रमति, आत्मानं
देवं दिगम्बरं श्वानं च संस्थाप्य यथागतं जगाम ॥
तेन चक्रदोषप्रादुष्करणेन विषादनिषादसंपर्कात् ।
हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसंटङ्कितैः

---

१ D देवाज्ञापय. २ C अथानये किं ३ विन्ध्यमन्दरहिमस्वर्णात्रिकूटा-
चल. *[ त्रिनेत्रस्य शिवस्याचलो हिमवान ] ४ D वारांनिधिं

संसारावटकोटरेऽतिविकटे मुग्धो जनः पात्यते ।
तत्त्वातत्त्वविचारणासु यदि वो हेवाकलेशस्तदा
सत्यं कौमुदचन्द्रमाङ्घ्रियुगलं[२] रात्रिंदिवं ध्यायत॥१॥

इमां तदुचितां कवितां निर्माप्य समादाय कुमुदचन्द्रः श्रीदेवसूरीन्प्रति प्राहिणोत् ।

तदनु तच्चरणपरमाणुर्बुद्धिवैभवावगणितचाणाक्यः पण्डितमाणिक्यः ।

कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यङ्घ्रिणा
कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ।
कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये
यः श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ १ ॥

अथ रत्नाकरपण्डितः ॥

"नग्नैर्निरुद्धा युवतीजनस्य
यन्मुक्तिरत्र प्रकटं हि तत्त्वम् ।
तत्किं वृथा कर्कशतर्ककेलौ
तवाभिलाषोयमनर्थमूलः ॥ २ ॥

---

१ (यथा केनापि स्वयं नग्नेन बलान्निरुद्धायै तरुण्यै कर्कश क्रीडाभिलापः क्रियतेऽमत्यं सोऽनर्थमूल इति समासोक्त्यलङ्कारः अभ्यासक्लेशः) २।) आं०

इति कुमुदचन्द्रं प्रति सोपहासं प्राहिणोत् ॥ अथ श्रीमयणल्लदेवी कुमुदचन्द्रपक्षिपातिनी, अभ्यासवर्त्तिनः सभ्यांस्तज्जयाय नित्यमुपरोधयन्तीति श्रुत्वा श्रीहेमचन्द्रचार्येण वादस्थले दिगम्बराः स्त्रीकृतं सुकृतमप्रमाणीकरिष्यन्ति सिताम्बरास्तं स्थापयिष्यन्तीति तेषामेव पार्श्वात्तद्वृत्तान्ते निवेदिते राज्ञी व्यवहाराद्बहिर्मुखे दिगम्बरे पक्षपातमुज्झांचकार। अथ भाषोत्तरलेखनाय सुखासनसमासीनः कुमुदचन्द्रः पण्डितरत्नप्रभश्चरणचारेणाऽक्षपटले[२] समागतौ। तदधिकृतैः ॥

*केवलिहूउं न भुञ्जइ चीवरसहिअस्स नत्थि-
निव्वाणं
इत्थी हूया न सिज्झइ ई मयमेयं कुमुदचन्दस्स१

कुमुदचन्द्र इति भाषां लेखयामास। अथ। सिताम्बराणामुत्तरम् ॥

---

* केवली भूतो न भुञ्जति वस्त्रसहितस्य नास्ति मोक्षः।
स्त्री भूता न सिद्ध्यति मतमेतत्कुमुदचन्द्रस्य ॥ १

१ C लेखनाय सुखासनसमासीनः कुमुदचन्द्रः पण्डितरत्नप्रभश्चरणचारेण आक्षिपटले समागतौ तदधिकृतैः। केवलीत्यादि०

केवँलि हूउवि भुञ्जइ चीवरसाहिअस्स अत्थि निव्वाणं
इत्थी हूयावि सिज्झइ मयमेयं देवसूरीणं॥१॥

इति भाषोत्तरलेखनानन्तरं निर्णीतवादस्थल-वासरे श्रीसिद्धराजे समाजमागतवति, षट्दर्शनप्रमाणवेदिषु सभ्येषु समुपस्थितेषु कुमुदचन्द्र-वादी पुरो वाद्यमानजयडिण्डिमो ध्रियमाणसि-तातपत्रः सुखासनसमासीनः पुरो वंशाग्रलम्बमा-नपत्रावलम्बः सिद्धराजसभायां नृपप्रसादीकृतसिं-हासने निषसाद। प्रभुश्रीदेवसूरयश्च श्रीहेमचन्द्र-मुनीन्द्रसहिताः सभासिंहासनमेकमेवालंचक्रुः। अथ कुमुदचन्द्रवादी स्वयं ज्यायान् किंचिद्-व्यतिक्रान्तशैशवं श्रीहेमचन्द्रं प्रति पीतं तक्रं भवतेत्यभिहिते श्रीहेमचन्द्रस्तं प्रति जरातरलित-मते किमेवमसमञ्जसं ब्रूषे श्वेतं तक्रं पीता हरिद्रेति वाक्येनाधःकृत.। युवयोः को वादीति पृ-च्छन्, श्रीदेवसूरिभिस्तन्निराकरणार्थायं भवतः प्रति-वादीत्यभिहिते कुमुदचन्द्रः प्राह। मम वृद्धस्यानेन

---

* केवली भूतोपि भुञ्जाति वस्त्रसाहितस्याप्यस्ति निर्वाणं।
स्त्री भूतापि सिद्ध्यति मतमेतद्देवसूरीणां॥ १

१ D तात्तिरस्करणाय

शिशुना सह को वाद इति तदुक्तिमाकर्ण्याहमेव ज्यायान् भवानेव शिशुः योद्यापि कटीदवरकमपि नाधत्से निवसनं च । इत्थं राज्ञा तयोर्वितण्डायां निषिद्धायामित्थं पणबन्धो मिथः समजनि पराजितैः श्वेताम्बरैर्दिगम्बरत्वमङ्गीकार्यं । दिगम्बरैस्तु देशत्याग इति निर्णीते पणबन्धादनु स्वदेशाकलङ्कभीरुभिर्देवाचार्यैः सर्वानुवादपरिहारपरैर्देशानुवादपरायणैः कुमुदचन्द्रं प्रति प्रथमं भवान्कक्षीकरोतु पक्षमित्यभिहिते ॥

खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय-
च्छायां[2]माश्रयते शशी मशकतामायान्ति यत्राद्रयः ।
इत्थं वर्णयतो नभस्तव यशो जातं स्मृतेर्गोचरं
तत्त[3]स्मिन्भ्रमरायते नरपते वाचस्ततो मुद्रिताः ॥१॥

इति नृपं प्रत्याशिषं ददौ । वाचस्ततो मुद्रिता इति तदीयापशब्देन सभ्यास्तं स्वहस्तबन्धनमिति विमृशन्तो मुमुदिरे ॥ अथ देवाचार्याः ॥

* नारीणां विदधाति निर्वृतिपदं श्वेताम्बरप्रोल्लस-

---

१ AC दोरकं निवसनं २ BC उर्णनाभालयछायां ३ C यस्मिन्

* नारीणां स्त्रीणां जिनशासनपक्षे । अरीणां शत्रूणां नेति राज्यपक्षे निर्वृति सुखं मोक्षं च । नयपथो नीतिमार्गस्तस्य विस्ताररचनास्थानं ।

त्कीर्तिस्फातिमनोहरं नयपथप्रस्तारभङ्गीगृहम् ।
यस्मिन्के वलिनो न निर्जितपरोत्सेकाः सदा दन्तिनो
राज्यं तज्जिनशासनं च भवतश्चौलुक्य जीयाच्चि-
रम् ॥ १ ॥

. नृपं प्रतीमामाशिषं ददौ॥ अथ वादी कुमुदचन्द्रः केवलिभुक्तिस्त्रीनिर्वाणचीरनिराकरणपक्षोपन्यासं पारापतविहङ्गमसदृशया स्खलितगिरा[3] प्रारभमाणः सभ्यैरन्तर्विहसद्भिः प्रत्यक्षप्रशंसापरैः पुरस्क्रियमाणः[4] कियदुपन्यासप्रान्ते उच्यतामित्युक्तो देवाचार्यः प्रलयकालोन्मीलितप्रचण्डपवनक्षुभिताम्भोधिनिचितवीचिसमीचीभिर्वाग्भिर्बृहद्गुर्वाध्ययनवृत्तेश्चतुरशीतिविकल्पजालोपन्यासे प्रक्रान्ते भास्वत्प्रतिभाप्रसरपरिम्लानायमानकुमुदः कुमुदचन्द्रः संभ्रमभ्रान्तचेतास्तद्वचनान्यवधारयितुमक्षमो भूय-

अन्यत्र नैगमादिसप्तनयानां० विनिर्जितः परेषां शत्रूणां च उत्सेक उन्नत्यमहंकारश्च यैः । के पुरुषाः प्रशस्तबलवन्तो न अपि तु सर्वे दन्तिनो गजा अन्यत्र केवलिनः केवलज्ञानवन्तो नादन्तीति नो किं त्वदन्ति भुञ्जन्त्येव सदा छद्मस्थसाधुवदित्यर्थः ॥ १

१ A C विनिर्जित. २ A B भवतोः ३ C उपमया स स्खलितस्खलितागिरा ४ B पुरस्क्रियमाणैः (५ तरङ्गोज्ज्वलाभिः) ६ A उपन्यासप्रक्रमे प्रश्यत.

स्तमेवोपन्यासं समभ्यर्थितवान् । सिद्धराजसभ्येषु निषेधपरेष्वपि । अप्रमेयप्रमेयलहरीभिस्तं प्रमाणाम्भोधौ मज्जयितुं प्रारब्धे षोडशे दिने आकस्मिके देवाचार्यस्य कण्ठावग्रहे मान्त्रिकैः श्रीयशोभद्रसूरिभिरंतुल्यंकुरुकुल्लादेवीप्रसादलब्धवरैस्तत्कण्ठपीठात्क्षणात्क्षपणककृतकार्मणानुभावात्केशचण्डुकः पातयांचक्रे। तच्चित्रनिरीक्षणाच्चतुरैः श्रीयशोभद्रसूरिभिः श्लाघ्यमानः कुमुदचन्द्रश्चामन्दं निन्द्यमानः प्रमोदविषादौ दधाते। अथ श्रीदेवसूरिभिरुपन्यासोपक्रमे कोटाकोटिरिति शब्दे प्रोच्यमाने तच्छब्दव्युत्पत्तिं कुमुदचन्द्रे पृच्छति कण्ठपीठे लुठिताष्टव्याकरणः पण्डितः काकलः टापटीपसूत्रनिष्पन्नं शाकटायनव्याकरणोदितं कोटाकोटिः कोटीकोटिः कोटिकोटिरिति सिद्धं शब्दत्रयनिर्णयं प्राह ॥ अथ प्रथममेव वाचस्ततो मुद्रिता इति स्वयं पठितामिति स्वयमपशब्दप्रभावात्तदा तु प्रादुर्भूतमुखमुद्रः श्रीदेवाचार्येण निर्जितोऽहमिति स्वयमुच्चरन् श्रीसिद्धराजेन पराजितव्यवहारादऽपद्वारेणापसार्यमाणः संभवत्पराभवाविर्भावादुद्दिस्फोटं[3] प्राप्य विपेदे ॥

१ C वीरसूरिभिश्च. २ कार्मुकानुभावाद्बहिः केशकण्डुकः ३ D ऊर्ध्वस्फोटं

अनन्तरं तु श्रीसिद्धराजः प्रमोदमेदुरमना दे-
वाचार्यप्रभावप्रभावनाचिकीर्मूर्ध्नि धारितासितातपत्र-
चतुष्टयः प्रकीर्णकप्रकरवीज्यमानः स्वयं दत्तहस्ताव-
लम्बः पूर्यमाणेषु यमलशङ्खेषु रोदःकुक्षिंभरिविभ्रमं
बिभ्रति निःस्वाननिस्वनैः स्फूर्जद्वर्यतूर्यपूर्यमाणदि-
गन्तराले थाहडनाम्नोपासकेन लक्षत्रयप्रमितद्रव्य-
व्ययकृतार्थीकृतार्थिसार्थे वादिचक्रवर्तिनः पादाव-
धार्यतामिति स्तुतिव्रातैरमन्दानन्दकन्दकन्दलनका-
रिणि मङ्गले मुहुर्मुहुरुच्यमाने श्रीदेवाचार्यान् थाहडेन
तेनैव कारितप्रासादे श्रीमन्महावीरनमस्करणपूर्वं
वसतौ प्रावेशयत्। तत्पारितोषके नृपतिः सूरिभ्योऽ
निच्छद्भ्योपि छालाप्रभृति ग्रामद्वादशकं ददौ ॥ तदु-
पश्लोकेन श्लोका एवं ॥

वस्त्रप्रतिष्ठाचार्याय नमः श्रीदेवसूरये ।
यत्प्रसादमिवाख्याति सुखप्रश्नेषु दर्शनम् ॥ १ ॥

इति श्रीप्रद्युम्नाचार्यः ॥

यदि नाम कुमुदचद्रं नाजेष्यद्देवसूरिरहिमरुचिः ।
कटिपरिधानमधास्यत्कतमः श्वेताम्बरो जगति ॥१

---

१ C प्रभावनां चिकीर्षुः २ D पूर्यमाणेषु दिगन्तरालेषु ३ D ऊर्ज-
तूर्य. ४ A चाहड. ५ A B चाहडेन ६ A D प्रावेशयन् ७ दर्शनः

इति हेमाचार्यः ॥

भेजेऽवकीर्णितां*नग्नः कीर्तिकन्थामुपार्जयन्[1] ।
तां देवसूरिराच्छिद्य तं निग्रन्थं[2] पुनर्व्यधात् ॥१॥

इति श्रीउदयप्रभदेवः ॥

*वादविद्यावतोऽद्यापि लेखशालामनुज्झतां
देवसूरिप्रभोः साम्यं कथं स्याद्देवसूरिणा ॥ ॥

इति श्रीमुनिदेवाचार्यः ॥

नग्नो यत्प्रतिभाघर्मात्कीर्तियोगपटं त्यजन् ।
ह्रियेवात्याजि भारत्या देवसूरिर्मुदेऽस्तु वः ॥ १ ॥

सत्रागारमशेषकेवलभृतां भुक्तिं तथा स्थापय-
न्नारीणामपि मोक्षतीर्थमभवत्तद्युक्तियुक्तोत्तरैः ।
यः श्वेताम्बरशासनस्य विजिते नग्ने प्रतिष्ठागुरु-
स्तद्देवाद्गुरुतोऽप्यमेयमहिमा श्रीदेवसूरिप्रभुः[7] ॥२॥

---

*[क्षतव्रततां, अवकीर्णी क्षतव्रत इत्यमरः)

* मुनिदेवसूरिकृत शान्तिनाथचारित्रे श्लोकबद्धेऽप्ययं श्लोकः १२। देवसूरिणा बृहस्पतिना लेखनशालास्थितेनाद्यापीति विरोधः परिहारस्तु लेखानां देवानां शाला स्थानं स्वर्गमिति शाला स्थाने सभायां चेतिविश्वः

१ A कण्ठामुपार्ज्य यः २ C D निर्ग्रन्थं ३ A B विदः ४ B अ-मुञ्चता ५ A धर्मात् ६ C स्पर्द्धावान् गुरुतो D लग्नप्रतिष्ठागुरु-श्रीदेवाद्गुरुत: ७ श्रीदेवसूरिः प्रभुः B श्रीदेवसूरिप्रभोः

इति मेरुतुङ्गसूरिणां द्वयामिति देवसूरीणां प्रबन्धः॥

॥ अथ श्रीपत्तनवास्तव्य उच्छिन्नवंशकः आभडनामा वणिक्पुत्रः[1] कांस्यकारकहट्टे घर्घरकघर्षणं कुर्वंस्तत्र पञ्च विशोपकान[2]र्जयित्वा दिनव्ययं कुर्वाणो द्विसन्ध्यमपि श्रीहेमसूरिणां चरणमूले प्रतिक्रमन्[3] प्रकृतिचतुरतयाऽधीतागस्त्यबौद्धमतादिरत्नपरीक्षाग्रन्थो रत्नपरीक्षकाणां सान्निध्यात्परीक्षादक्षः कदाचिच्छ्रीहेमचन्द्रसन्निधौ धनाभावात्परिग्रहप्रमाणनियमान्संकुचितान् गृह्णन् सामुद्रिकवेदिभिः प्रभुभिरायतौ तद्भाग्यवैभवप्रसरं विमृशद्भिस्तस्य लक्षत्रयद्रम्माणां परिग्रहमानं कारयद्भिः सह संतुष्टतया व्यवहरन्, कस्मिन्नप्यवसरे क्वापि ग्रामे यियासुरन्तरालेऽजाव्रजं व्रजन्तमालोक्यैकस्या अजायाः कण्ठे पाषणखण्डे रत्नपरीक्षकतया रत्नजातीयं परीक्ष्य तल्लोभात्तां मूल्येन क्रीत्वा मणिकारपार्श्वात्समुत्तेजितं निर्माप्य सिद्धराजमुकुटघटनाप्रस्तावे लक्ष्यमूल्यद्रव्येण तं नृपायैव ददौ। तेन नीवीधनेन मञ्जिष्ठास्थानकानि[4] कदाचिदागतानि क्रीत्वा तद्विक्रयावसरे

(१ श्रीमालज्ञातीयः २ (ख) पञ्च लोष्टिकानीति पाठः तत्समययोग्यनाणकविशेषान् ) ३ B D प्रतिक्रामन् [४ मञ्जिष्ठागोणीः]

सांयात्रिकैर्जलचोरभयात्तदन्तर्निहिताः काञ्चनकम्बिकाः पश्यन् सर्वेभ्यः स्थानकेभ्यस्ताः संजग्राह। तदनन्तरं सर्वनगरमुख्यः श्रीसिद्धराजमान्यो जिनशासनप्रभावकः श्रावकः प्रतिदिनं प्रतिवर्षं यदृच्छया जैनमुनिभ्योऽन्नवस्त्रादि ददानो गुप्तवृत्त्या नव्यानि धर्मस्थानानि जीर्णानि च प्रशस्तिरहितानि स्वदेशेषु विदेशेषु च समुद्दधार॥

वल्लीछन्नद्रुम इव मत्स्नाच्छादितसमस्तबीजमिव।
प्रायः प्रच्छन्नकृतं सुकृतं शतशाखतामेति॥ १॥

इति साह[2] आभडप्रबन्धः॥

अथान्यस्मिन्नवसरे श्रीसिद्धराजः संसारसागरं तितीर्षुः प्रत्येकं सर्वदेशेषु सर्वदर्शनेषु देवतत्त्वधर्मतत्त्वपात्रतत्त्व जिज्ञासया पृच्छमानेषु निजस्तुतिपरनिन्दापरेषु सन्देहदोलाधिरूढमानसः श्रीहेमाचार्यमाकार्य विचार्यकार्ये पप्रच्छ। आचार्यैस्तु चतुर्दशविद्यास्थानरहस्यं विमृश्येति पौराणिकनिर्णयो वक्तुमारेभे। यत्पुरा कश्चिद्व्यवहारी पूर्वं परिणीतां पत्नीं परित्यज्य संग्रहणीसात्कृतसर्वस्वैः सदैव पूर्वपत्न्या पतिवशीकरणाय तद्वेदिभ्यः का-

---

१ A C छल्लीछन्न. २ A वसाह C D वसा (३ वेश्याधीनकृतसर्ववित्तः)

र्मणककर्मणि पृच्छ्यमाने कश्चिद्गौडदेशीयो रश्मि-
नियन्त्रितं तव पतिं करोमीत्युक्त्वा किंचिदाचिन्त्य-
वीर्थं भेषजमुपानीय भोजनान्तर्देयमिति भाषमाणः
स गतः। कियद्दिनान्ते समागते क्षयाहानि तस्मिं-
स्तथा कृते स प्रत्यक्षवृषभतां प्राप। स च तत्प्रती-
कारमनवबुध्यमाना विश्वविश्वाक्रोशान्सहमाना
निजं दुश्चरितं शोचन्ती कदाचिन्मध्यंदिने। दिने-
श्वरकठोरतरकरनिकरप्रसरतप्यमानापि शाड्वल-
भूमिषु तं पतिं वृषभरूपं चारयन्ती कस्यापि तरो-
र्मूले विश्रान्ता निर्भरं विलपन्ती, आलापं नभस्य-
कस्माच्छुश्राव। तदा तत्रागतो विमानाधिरूढः
पशुपतिर्भवान्या तद्दुःखकारणं पृष्टो यथावस्थितं नि-
वेद्य तस्यैव तरोश्छायायां पुंस्त्वनिबन्धनमौषधं त-
न्निर्बन्धादादिश्य तिरोदधे। सा तदनु तदीयां छायां
रेखाङ्कितां निर्माय तन्मध्यवर्त्तिन ऊषधाङ्कुरानुच्छेद्य
वृषभवदने क्षिपन्ती तेनाप्यज्ञातस्वरूपेणौषधाङ्कु-
रेण वदनन्यस्तेन स वृषभो मानुष्यतां प्राप। यथा
तदज्ञातस्वरूपोपि भेषजाङ्कुरः समीहितकार्यसिद्धिं
चकार तथा कलियुगे मोहात्तदपि तिरोहितं पात्र-

परिज्ञानं सभाक्तिकं सर्वदर्शनाराधनेनाऽविदितस्वरूपमपि मुक्तिप्रदं भवतीति निर्णयः। इति हेमचन्द्राचार्यैः। सर्वदर्शनसन्माने[1]निवेदिते सति श्रीसिद्धराजः सर्वधर्माराधनां चकार ॥

इति सर्वदर्शनमान्यताप्रबन्धः ॥

॥अथान्यदा निशि कर्णमेरुप्रासादे नृपतिर्नाटकं विलोकयन् केनापि चणकविक्रयकारिणा वणिग्मात्रेण स्कन्धेन स्कन्धन्यस्तहस्तेन तल्लीलायितेन चित्रयिमाणमानसः स भूयो भूयस्तद्दीयमानं सकर्पूरबीटकं परितोषिते गृह्णन् नाटकविसर्जनावसरेनुचरैस्तद्गृहादि सम्यगवगम्य सौधमासाद्य सुष्वाप। प्रत्यूषे भूपः कृतप्राभातिककृत्यः सर्वावसरेऽलंकृतसभामण्डपस्तं चणकविक्रयकारिणं विपणिनमाकार्य निशि स्कन्धन्यस्तहस्तभारेण ग्रीवा बाधते इत्यभिहिते तत्कालोत्पन्नमतिर्विज्ञपयामास। देव आसमुद्रान्तभूभारे स्कन्धाधिरुढे यदि स्वामिनः न बाधते स्कन्धस्तदा तृणमात्रस्य निर्जीविस्य मम पण्याजीवस्य, भारेण स्वामिनः का[2] स्कन्धबाधेति तदीयौचित्यविज्ञपनेन प्रमोदावान्नृपः पारितोषिकं ददौ ॥

---

१ A B संमते. २ D भारेण का.

इति चणकविक्रयिवणिजः प्रबन्धः ॥

अथान्यास्यां निशि नृपः कर्णमेरुप्रासादात्प्रेक्षणं प्रेक्ष्य प्रत्यावृत्तः कस्यापि व्यवहारिणो हर्म्ये बहून्दीपानालोक्य किमेतदिति पृष्टः स लक्षदीपांस्तान्विज्ञपयामास। असौ धन्य इति।

स्वसौधमध्यमध्यास्य व्यतीतक्षणदाक्षणः

स धन्यमानी[1] तं सदः समानीयेत्यादिदेश।

एतेषां सदा प्रदीपानां प्रज्वालनेन भवतः सदा प्रदीपनं तद्भवदीयवित्तस्य कियन्तो लक्षा इत्यभिहितः स विद्यमानांश्चतुरशीतिलक्षान्निवेदयामास। तदनुकम्पयाकम्पमानमानसः स्वकोशात्षोडशलक्षान्प्रसादीकृत्य तत्सौधे कोटिध्वजमध्यारोपयामास ॥

इति षोडशलक्षप्रबन्धः ॥

अथान्यस्मिन्नवसरे राज्ञा कदाचिद्वालाकदेशे दुर्गभूमौ सिंहपुरमिति ब्राह्मणानामग्रहारः स्थापितस्तच्छासने षडुत्तरशतं ग्रामाः। अथ श्रीसिद्धराजः कदाचित्सिंहनादैर्भीतैर्विप्रैर्देशमध्यनिवासं याचितः साभ्रमतीतीरवर्तिनमाशाम्बिली[2]ग्रामं तेभ्यो ददौ। तेषां च सिंहपुराद्धान्यान्यादाय गच्छता-

---

१ A स धन्यंमानी. २ A B आशाम्बली.

मागच्छतां च दानमोक्षं चकार । अथ राज्ञा सिद्ध-
राजेन मालवकं प्रति कृतप्रयाणेन वाराहीग्रामपरि-
सरमाश्रित्य तद्वीयान् पट्टकिलानाहूय तच्चातुर्यप-
रीक्षाकृते निजां प्रधानां राजवाहनसेजवालीं स्थप-
निकार्थं समर्पयत । अथ नृपतौ पुरतः प्रयाते तैः स-
र्वैरपि संभूय तदङ्गानि प्रत्येकं विदार्य यथावाञ्छितं
स्वस्वसौधे निदधिरे। अथ यदा प्रत्यावृत्तो नृपस्तां
स्थापनिकां तेभ्यो याचमानस्तच्छौकितभिन्नानि
तदङ्गानि पश्यन् सविस्मयं किमेतदित्यादिशंस्तै-
र्विज्ञपयांचक्रे। स्वामिन्नेकः कोप्यऽस्य वस्तुनो गो-
पनविधौ न प्रभूष्णुर्मलिम्लुचादिभ्यः कदाचिदपाये
संजायमाने सति कः प्रभोरुत्तरकर्तेति विमृश्यैतद-
स्माभिर्व्यवसितं तदा राजा सविस्मयस्मेरमनास्ते-
षां मूर्ख इति विरुदं ददौ ॥

इति वाराहीयामूर्खप्रबन्धः ।

---

१ D दाण. २ C पाट्ट. (३ यानविशेषं ४ संस्कारविशेषार्थं रोगान देवा इति भाषायां) C स्थापनिकार्थं (न्यासार्थं वा) ५ A समर्पिता. ६ C यथोचितं ७ B स्थपनिकां (न्यासं थापण इति भाषायां) ८ D मलिम्लुचानलादीनां कदाचिदपाये

अथ[1] कदाचिच्छ्रीजयसिंहदेवो नृपतिर्मालवकं विजित्य प्रत्यावृत्तः । उञ्झा[2]ग्रामे निवेशितस्कन्धावारस्तैर्ग्रामीणैः प्रतिपन्नमातुलै[3]र्दुग्धपरिपूर्णप्रवाहा[4]दिभिरुचितैः परितोष्यमाणस्तस्यामेव निशि गुप्तवृत्त्या तद्दुःखसुखजिज्ञासुः कस्यापि ग्रामीणस्य गृहे गतः । गोदोहादिव्याकुलतायामपि तेन कस्त्वमिति पृष्टः,श्रीसोमेश्वरस्य कार्पटिकोहं महाराष्ट्रदेशवास्तव्य इति तस्मै न्यवेदयत् । तेन च नृपतेः पार्श्वे महाराष्ट्रदेशस्य तन्महाराजस्य च गुणदोषवृत्तान्ते पृच्छमाने स नृपतेस्तस्य षण्णवतिराजगुणान्प्रशंसंस्तत्पार्श्वे गूर्जराधीश्वरगुणदोषान्पृच्छत्। श्रीसिद्धराजस्य प्रजापालनपाण्डित्यं सेवकेष्वतुल्यवात्सल्यत्वं चेत्यादीन्गुणान्वर्णयंस्तेन कृत्रिमदोषे उत्पाद्यमाने सोऽस्माकं मन्दभाग्यतया नृपतेरपुत्रतालक्षण एव दोष इत्यश्रूणि मुञ्चन्नृपतिं निःकैतववृत्त्या परितोषयामास। अथ प्रभात-

१ D अथ कदाचित्सिद्धराजः सिंहभीतैर्विप्रैर्देशमध्यनिवासं याचितः साभ्रमतीतीरं तेभ्यो ददौ तेषां च सिंहपुराद्धान्यान्यादाय गच्छतां दाणमोक्षं चकार ॥ २ C ऊंण्डा D झञ्झा, ३ A मौतुलैः ४ A B आवाहादिभिः

काले संभूय सर्वेऽपि मिलिता नृपदर्शनोत्कण्ठिताः सौधमध्यास्य प्रभोः प्रणामानन्तरं तदतुल्यपल्यङ्के निविष्टाः, आसनदाननियोगिभिः प्रदत्तेपि पृथगासने तत्सौकुमार्यं करस्पर्शेन विचिन्त्य वयमिह सुखसुखेन निषण्णास्तिष्ठाम इति नृपे स्मितमुखाम्भोजे तस्थुः ॥

इति उञ्झावास्तव्यग्रामीणानां प्रबन्धः॥

अथ कदाचिज्झालाज्ञातीयमाङ्गूनामा क्षत्रियः श्रीसिद्धराजसेवार्थं सभां गच्छन् प्रत्यहं पाराचीद्वयं भूमौ निहत्योपविशति।उद्धरन्द्वयमुत्तिष्ठति तस्य च भोजने घृतपरिपूर्णः कुतुपं एक एव व्यये याति- तस्य तु घृताभ्यक्तदाढिकानिर्माजने घृतषोडशांशोऽवशिष्यते । कदाचिद्वपुरपाटवे पथ्यावसरे पञ्चमानकप्रमितयवागूपथ्यप्रान्ते आयुर्वेदविदाऽमृतोदकमद्धाहारे किमिति न पीतमुत्पुपालब्धः। यतः॥

पिबेद्घटसहस्रं तु यावन्नाभ्युदितो रविः ।
उदिते तु सहस्रांशौ बिन्दुरेको घटायते ॥ १

१ C कुण्डा. २ D गाल्हा. ३ पाषाणभेदकः शस्त्रविशेषः पराई भाषायां ४ C उत्तिष्टंस्तद्द्वयमुद्धराति A B D ५ कुम्भः ६ A B व्याध्यवसरे ७ C अस्तमितः ८ अस्तं याते ९ C D बिन्दुर्घटशतायते

रजन्याः पाश्चात्यघटिकाचतुष्टये सूर्यस्यानुदयावधि यत्पयः पीयते जलयोगः क्रियते तद्वज्रोदकं तदमृतोदकं सूर्योदये समुत्पन्ने निरन्नैः प्रातर्यदुदकं पीयते तद्विषं ततः बिन्दुरेको घटशतायते। भोजनार्द्धे यज्जलं पीयते तदमृतं भोजनान्ते तत्कालपीतं पयः छत्रं छत्रोदकमिति[1] भण्यते। तेन प्रोक्तं पुनः, पूर्वभुक्तमर्द्धाहारं[2] परिकल्प्य संप्रति पयः पीत्वा पुनरर्द्धाहारं करिष्यामीत्युपक्रममाणस्तेनैव वैद्येन निषिद्धः। नृपतिना निरायुधकारणं पृष्टः, समयोचितं मे प्रहरणमिति विज्ञपयन्नऽन्यदा मज्जनावसरे हस्तिपप्रेर्यमाणं हस्तिनमालोक्य सन्निहितश्वानेनं[3] शुण्डादण्डे निहत्य मर्मस्थाननिपीडितस्य गजस्य पुच्छभागं स गृह्णन् तदीयातुलेन बलेनान्तस्त्रुटितस्य करटिन उत्तारिते हस्तिपके[5] भूपतितः सोऽसुभिर्व्ययुज्यत। स तु गूर्जरदेशभूपाले पलायिते समायातम्लेच्छान्समरे स्वेच्छयोच्छेदयन् यत्र दिवं प्राप्तस्तत्र श्रीपत्तने माङ्कूस्थण्डिलमिति प्रसिद्धिः॥

॥ इति माङ्कूझालाप्रबन्धः॥

१ A C छत्रं छत्रोदकं २ C ततोसौ ३ A पूर्वान्नं. (४ कुक्कुरस्तु शुनिः श्वान इति वाचस्पतिः) ५ C उत्तारिते भूपतौ D उत्तारिते नृपतौ.

अन्यदा म्लेच्छप्रधानेषु समायतेषु मध्यदेशागतान्वेषकारकानाहूय रहस्यं किंचिदादिश्य विससर्ज नृपः। अथापरस्मिन्सायाह्ने च समागते[3] प्रलयकालप्रचण्डपवनप्रादुर्भावे नृपः सुधर्मसधर्माणमास्थानीमास्थाय यावदवलोकते तावदन्तरिक्षादवतरन्तं मस्तकन्यस्तकाञ्चनेष्टिकायुगेन काञ्चनशोभां बिभ्राणं पलादयुगलमालोक्य भयभ्रान्ते समाजलोके नृपचरणपीठे तदुपायनं विमुच्य भूपीठलुठनात्पूर्वं प्रणिपत्येति विज्ञपयामास । यदद्य देवार्चनावसरे लङ्कानगर्यां महाराजाधिराजः श्रीविभीषणो राजस्थापनाचार्यस्य रघुकुलतिलकस्य श्रीरामस्याभिरामगुणग्रामाभिरामस्य स्मरन् ज्ञानमयेन चक्षुषा संप्रति चालुक्यकुलतिलकं श्रीसिद्धराजावतारेऽवतीर्णं स्वयं स्वीयं स्वामिनमवधार्योत्कण्ठोत्कटायमानमानसोऽहं तत्र प्रणामकरणायागच्छामीति किंवा प्रभुर्मामत्रागमनेनानुगृहीष्यतीति विज्ञपयन्नौ प्रहितवान् । तन्निर्णयं श्रीमुखेन समा-

१ A म्लेच्छेशेषु. २ B आकृय D रहः स किंचिदाकृय
३ B C D अवसरे (४ इन्द्रसभा.) ५ D अकुण्ठोत्कण्ठावटमान.
६ A B C नमः

दिशतु देवः । ताभ्यामित्यभिहिते नृपतिः किंचिदन्तर्विचिन्त्य स तावेवं समादिशत् । यद्वयमेव प्रफुल्लायल्लकेल्लहरीप्रेर्यमाणाः स्वसमये स्वयमेव विभीषणामिलनाय समेष्याम इत्युदीर्य निजकण्ठशृङ्गारिणमेकावलीहारं प्रतिप्राभृतं प्रसादीकृतं। प्रभुणाहमयमपि [3]प्रेष्यप्रेषणावसरे न विस्मरणीय इति विशेषविज्ञप्तिं विधायान्तारिक्षमार्गेण तद्राक्षसद्वन्द्वं तिरोधत्ते । तदैव ते म्लेच्छप्रधानपुरुषा भयभ्रान्ताः स्वपौरुषमुत्सृज्य नृपपुरत आहूता भक्तिभारभासुराणि वचांसि ब्रुवाणास्तद्राजाय समुचितमुपायनमुपनीय श्रीसिद्धराजेन व्यसृज्यत[4] ॥

इति म्लेछागमानिषेधप्रबन्धः ॥

अथानन्तरं कोल्लापुरनगरराजस्य सभायां बान्दिनः श्रीसिद्धराजस्य कीर्तिं वितन्वन्तः, तदा तथ्यं सिद्धराजं वयं मन्यामहे यदा प्रत्यक्षमप्यस्माकं कमपि चमत्कारं सिद्धराजो दर्शयतीत्येतद्ब्रुवाणेन तेन राज्ञा ते पराकृतास्तत्स्वरूपं नृपतेर्विज्ञपयामासुः । अथ स्वामिनि सभायां निभालयति तत्तत्त्ववेदिना के-

१ सत्यमेवमादिदेश २ [उत्कण्ठातिशयाश्चर्य) ३ A B आपृच्छतामवसरे प्रभुणाहमन्यस्मिन्नापि. ४ D व्यजृम्भन्त. ५ A कोल्लाकपुर.

नापि नियोगिनाञ्जलिबन्धपूर्वकं निजाभिप्राये प्रादुः-
क्रियमाणे राज्ञा स रहसि तत्कारणं पृष्टो नृपतेरा-
शयं विज्ञपयन् द्रव्यलक्षत्रयसाध्योऽयमर्थ इति वा-
क्यविशेषमाह । तदैव दैवज्ञनिर्दिष्टे मुहूर्त्ते स नृ-
पाल्लक्षत्रयमुपलभ्य वणिगाकारो भूत्वा सर्व-
भाण्डानि संगृह्य सिद्धशङ्कव रत्नखचितं सुवर्णपा-
दुकायुगलमतुलं योगदण्डं च मणिमयकुण्डलयुगलं
च । तद्विधयोगपिशुनं योगपट्टं च चण्डांशुरोचिश्च-
न्द्रातपं सह नीत्वा पथानमुल्लङ्घ्य कतिपयैरहोभि-
स्तत्पुरे दत्तावासः। आसन्नायां दीपोत्सवनिशि तन्न-
गरराज्ञोऽवरोधे महालक्ष्मीदेव्याः पूजार्थं तत्प्रासाद-
मुपेयुषि स कृतकसिद्धरूपस्तेन वेषेणालंकृतः, के-
नापि सदभ्यस्तोत्पतनेन बर्बरेणानुगम्यमानो दे-
व्याः पीठेऽकस्मात्प्रादुरासीत् । देव्या रत्नमय-
सुवर्णकर्पूरमयीं सपर्यां विरचयंस्तदवरोधाय तद्वि-
धानि बीटकानि ददानः श्रीसिद्धराजनामाङ्कितं
सिद्धवेषं पूजाव्याजात्तत्र ।नियोज्योत्पतनवशाद्बर्बर-
स्कन्धमधिरुह्य यथागतमगात् । निशावसाने सम-
येऽवरोधैस्तं विरोधिनृपवृतान्तं ज्ञापितः सन् भयभ्रा-
न्तो नृपः स्वप्रधानपुरुषैस्तत्प्राभृतं सिद्धाधिपतये

प्राहिणोत् । अथ तेन नियोगिना भाण्डादिक्रयवि-
क्रयं संक्षिप्य । ममागमनावधि नैतेषां प्रधानानां
दर्शनं देयमिति वेगवता पुरुषेण विज्ञपयामास ।
तदनु झगिति कतिपयैर्दिनैस्तत्र समुपेतः । तत्स्व-
रूपं विज्ञप्तो नृपतिस्तेषां प्रधानानां तदुचितामाव-
र्जनां चकार॥

इति कोल्लापुरराजप्रबन्धः ॥

श्रीसिद्धराजेन मालवमण्डलाद्यशोवर्मा नृपति-
र्निबध्यानीतः। अवसरे क्रियमाणेन सीलनाभिधा-
नकौतुकिना "बेडायां समुद्रो मग्न इति" तत्पृष्ठ-
गायनेनापशब्दं ब्रूषे इति तर्जितो बेडासमानायां
गूर्जरधरित्र्यां मालवकसमुद्रो मग्न इति विरोधाल-
ङ्कारमर्थापत्त्या परिहरन्प्रभोर्हेममयीं जिव्हां प्राप ॥

इति कौतुकिसीलणप्रबन्धः ॥

कदाचित्सिद्धराजस्य वाग्मी कश्चित्सान्धिविग्र-
हिको जयचन्द्रनाम्ना काशीपुरीश्वरेण श्रीमदणहि-
ल्लपुरस्य प्रासादप्रपानिपानादिस्वरूपाणि पृच्छतेति
दूषणमुक्तः। यत्सहस्रलिङ्गसरोवरवारि शिवनिर्मा-
ल्यं तदऽस्पृशतया तत्सवका अतो लोकद्वयविरो-
धिनस्तत्रत्यलोकः कथमुदितोदितप्रभावः स्यादिति।

सिद्धाधिपेन सहस्रलिङ्गसरः कारयताऽनुचितमिदमाचरितमिति तस्य नृपतेर्वचसान्तः कुपितः स नृपं पप्रच्छ । अस्यां वाणारस्यां कुतस्त्यं पयः पीयते? नृपेण त्रिपथगाजलमित्यभिहिते किं नाम सुरसरिन्नीरं शिवनिर्माल्यं न यतः शिवोत्तमाङ्गमेव गङ्गानिवासभूमिः॥

इति जयचन्द्रराजेन गूर्जरप्रधानस्योक्तिप्रबन्धः।

कस्मिन्नप्यवसरे कर्णाटविषयादागतेन सान्धिविग्रहिकेण श्रीमयणल्लदेव्या पितुर्जयकेशिराजस्य कुशलोदन्ते पृष्टे श्रीमिश्रलोचनेनेति सा विज्ञपयामास। स्वामिनि सुगृहीतनामा जयकेशिमहीन्द्रोऽशनावसरे पञ्जरात्क्रीडाशुकमाकारयन्, तेन मार्जार इत्युच्चरिते नृपः परितो विलोक्य निजभोजनान्धोऽधोभागवर्त्तिनमोतुमपश्यन् यदि तव बिडालेन विनाशः स्यात्तदाहं त्वया सहगमनं करवाणीति प्रतिज्ञाते स यावत्पञ्जरादुड्डीय तस्मिन्काञ्चनभाजने निषीदति तावदकस्मात्तेन वृकदंशेन तं विनाशितमालोक्य परित्यक्ताशनकवलः । उक्तियुक्तिवेदि-

(१ प्रभाते यन्नाम स्मर्तुं योग्यमस्ति सः)

२ C D निजभोजनभाजनाधोभागवर्तिन

ना राजवर्गेण निषिध्यमानोपि ॥

राज्यं यातु श्रियो यान्तु यान्तु प्राणा अपि क्षणात्।
या मया स्वयमेवोक्ता वाचा मा यातु शाश्वती॥१॥

इतीष्टदैवतैमिव तामेव गिरं जपंस्तेनैव शुकेन सह दारुनिचितां चितां विवेश।

इति वाक्याकर्णनाच्छोकाम्भोधिमग्नां श्रीमयणल्लदेवीं विशेषधर्मोपदेशहस्तावलम्बनेन विद्वज्जनः समभ्युद्दधार। अथ सा पितुः श्रेयसे श्रीसोमेश्वरपत्तने यात्रां गता सती त्रिवेदिनं[3] कमपि ब्राह्मणमाकार्य तदञ्जलौ जलन्यासावसरे यदि भवत्रयपातकं लासि तदा ददामि[4] नान्यथेति तद्वचनविशेषपरितोषभाक् गजाश्वकाञ्चनादिभिर्युतं[5] पापघटमाददौ। स च तत्सर्वं विप्रेभ्यो ददानः किमिति देव्या पृष्टः प्राह। प्राक्तनपुण्यादस्मिन् जन्मनि नृपप्रिया नृपतिजननी भूत्वा लोकोत्तरैरेभिर्दानैः सुकृतैर्भावी भवोपि श्रेयस्कर इति विमृश्य भवत्रयपातकं मया जगृहे। भवत्या पापघटदाने उपक्रान्ते कश्चिदधमद्विजोपि पापघटं नीत्वा स्वं भवतीं च

१ A B यात्रुत्रया २ C देवतां. ३ A त्रिवेदीवेदिनं ४ B C ददामि तदाऽददामि ५ D दानैर्युतं.

भवाम्भोधौ मज्जयिष्यतीति मया तु संन्यस्तसमस्तवित्तेन वित्तमेतदादाय पुनर्ददता लब्धाद्दष्टगुणं पुण्यं लब्धमिति । श्रेयः स जगृहे ॥

॥ इति पापघटस्य प्रबन्धः ॥

॥ अथ कदाचिन्मालवकमण्डलं विगृह्य स्वदेशनिवेशं प्रति चलितः श्रीसिद्धाधिपोऽन्तरालेऽप्रतिमल्लैर्भिल्लै रुद्धमध्वानमवधार्य तस्मिन्वृत्तान्ते ज्ञाते सति मन्त्री सान्तूनामा प्रतिग्रामं प्रतिनगरं घोटकमुद्ग्राह्य[1] प्रतिवृषं पर्याणानि[2] विन्यस्य मेलितातिदलबलेन[3] भिल्लान्वित्रास्य श्रीसिद्धराजं सुखेन समानीतवान् ॥

इति सान्तूमन्त्रिप्रबन्धो बुद्धिवैभवप्रबन्धोवा ॥

अथ कस्यांचिन्निशि द्वावकुण्ठावेव वण्ठौ श्रीसिद्धराजस्य चरणसंवाहनव्यापृतौ[4] तं निद्रामुद्रितलोचनं विचिन्त्य तदाद्यो निग्रहानुग्रहसमर्थं श्रीसिद्धराजं सेवकजनकल्पवृक्षं सर्वराजगुणनिलयं प्रशशंस । अपरस्त्वस्यापि भूपतेः प्राज्यराज्यप्रदं प्राक्तनं कर्मैव श्लाघितवानेवमाकर्णितेन तेन राज्ञा त-

(१ अश्वजातिमात्रं. २ पल्याणानि.) ३ C बलस्तद्बलेन
४ D संवाहना. (पादमर्दनव्यापारे सति)

स्मिन्वृत्तान्ते तत्कर्मणः प्रशंसां विफलीकर्तुं स्वप्रशं- साकारिणः प्रेष्यस्यापरस्मिन्नहन्यऽनिवेदिततत्त्वस्य प्रसादलेखमार्पयत्[1]। यदस्मै वण्ठाय तुरङ्गमशतस्य सामन्तता देयेत्यालिख्य तं महामात्यश्रीसान्तू- पार्श्वे प्राहिणोत् । अथ स यावच्चन्द्रशालाया निः- श्रेण्यामवरोहति तावत्प्रस्खलितपदः पृथिव्यां पतदीषदङ्गभङ्गमङ्गीकृतवान् । तत्पृष्ठानुगामिना- ऽपरेण वण्ठेन किमेतदिति पृष्टे तेन स्वस्वरूपे निवेदिते स मञ्चकन्यस्तो गृहं गत्वा तमपरस्मै[2] समर्पितवान् । तत्प्रमाणेन महामात्यस्तस्मै शत- तुरङ्गमसामन्ततां ददौ । अथ तयोर्यथावद्वृत्तान्तेऽव- धारिते नृपतिः कर्मैव बलीय इति तत्प्रभृति मेने यथा ॥

*नैवाकृतिः फलति नैव कुलं न शीलं
विद्या न चापि[3] मनुजेषु कृता न सेवा ।
पुण्यानि[4] पूर्वतपसा किल संचितानि

---

* वल्लभदेवकृतसुभाषितावल्यांश्लो. ३१०० भदन्त अश्वघोषस्य ॥
विद्या सहस्रगुणिता न च वाग्विशुद्धिः।
कर्माणि पूर्वशुभसंचयसंचितानीति पाठभेदः

१ C आलिख्य २ A प्रसादलेखं ३ A D तपोपि न च यत्नकृतापि सेवा ४ B D भाग्यानि

काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ १ ॥

इति वण्ठकर्मप्राधान्यप्रबन्धः ॥

*सो जयउ कूडच्छरडो[1] तिहुयणमज्झम्मि[2] जेसल-
नरिन्दो ।
छित्तूण रायवंसं[3] इक्कं छत्तं कयं ज्रेण ॥ १ ॥

मात्रयाप्यधिकं किंचिन्न सहन्ते जिगीषवः ।
इतीव त्वं धरानाथ धारानाथमपाकृथाः ॥ २ ॥

मानं मुञ्च सरस्वति त्रिपथगे सौभाग्यभङ्गीस्त्यज[4]
रे कालिन्दि तवाफला कुटिलता रेवे रयस्त्यज्यताम् ।
श्रीसिद्धेशकृपाणि[5]पाटितरिपुस्कन्धोच्छलच्छोणित-
स्रोतोजातनदीनवीनवनितारक्तोम्बुधिर्वर्त्तते ॥ ३ ॥

श्रीमज्जैत्रमृगारिदेवनृपते सत्यं प्रयाणोत्सवे
पानीयाशयशोषणैः करटतो[6] वीरव्रणा[7]काङ्क्षया ।
स्वीयस्वीयपतेर्विनाशसमयं संचिन्त्य चिन्तातुरा
मत्सी रोदिति मक्षिका च हसति ध्यायन्ति वा-
मं[8] स्त्रियः ॥४॥

---

* स जयतु कूटोच्छेदकः त्रिभुवनमध्ये जयसिंहनरेन्द्रः । छित्त्वा राजवंशं एकं छत्रं कृतं येन एकच्छत्रं राज्यं कृतामित्यर्थः॥ १ ॥

१ D नरडो. २ B मह्मम्मि. ३ D रायवंसे. [ ४ भङ्गी. रचनाः ] ५ C कृपाण. (६ गन्धहस्तिगण्डस्थलात्) ७ B वीरव्रत. (८ वामाङ्ग-स्फुरणं) B वामभ्रुवः

सपादलक्षः सह भूरिलक्षै[1]-
रानाकभूपाय नताय दत्तः ।
दृप्ते यशोवर्मणि मालवोपि[2]
त्वया न सेहे द्विषि सिद्धराज ॥ ५

इत्याद्या बहुशः स्तुतयः प्रबन्धाश्च तदीयाः॥
संवं० ११५० वर्षे उपविष्टो जयसिंहदेवस्तथानेन राज्ञा वर्ष ४९ राज्यं कृतं ॥

[ ङः ]

इति मेरुतुङ्गाचार्यकृते प्रबन्धचिन्तामणौ श्रीकर्ण-श्रीसिद्धराजयोर्विविधचरित्रनानावदातवर्णनो नाम तृतीयः प्रकाशः ॥

---

१ D तूरि. (२ मालवः लक्ष्मीलेश इतिश्लेषः)

३ इत्याद्या बहवस्तदीयाः स्तुतयः प्रबन्धाश्च ॥

१ A संवत् ११५० पूर्व श्रीसिद्धराजश्रीजयसिंहदेवेन वर्षाणि ५९ राज्यं कृतं ॥

अथ परमार्हतश्रीकुमारपालप्रबन्धः प्रारभ्यते ॥

॥ श्रीमदणहिल्लपुरपत्तने वृहति श्रीभीमदेवे साम्राज्यं पालयति श्रीभीमेश्वरस्य पुरे चउलादेवीनाम्नी[१] पण्याङ्गना पत्तने प्रसिद्धं गुणपात्रं रूपःपात्रं च[२] कुलयोषितोप्यतिशायिनी प्राज्यमर्यादा नृपतिर्विमृश्य तस्यास्तद्वृत्तपरीक्षानिमित्तं सपादलक्ष्यमूल्यां क्षुरिकां निजानुचरैस्तस्यै ग्रहणके दापयामास । औत्सुक्यात्तस्यामेव निशि बहिरावासे प्रस्थानलग्नमसाधयत् । नृपो वर्षद्वयं यावन्मालवकमण्डले विग्रहाग्रहात्तस्थौ[३] । सा चउलादेवी[४] तद्वित्तग्रहणकप्रामाण्येन तद्वर्षद्वयं[५] परिहृतसर्वपुरुषा शीललीलयैव तस्थौ । निस्सीमपराक्रमो भीमः कृती स्वस्थानमागतो जनपरंपरया तस्यास्तां प्रवृत्तिमवगम्य तामन्तःपुरे न्यधात् । तदङ्गजो हरिपाल[६]स्तत्सुतस्त्रिभुवनपालस्तत्पुत्रः कुमारपालदेवः । स तु विदितधर्मोपि कृपापरः परनारीसहोदरश्च स तु सामुद्रिकवेदिभिर्भवदनन्तरमयं नृपो भवि-

१ C चऊलादेवीनामा २ C चातीव तस्याः ३ D विग्रहाय ४ B सा तु बउला ५ A तृतीयवर्षे ६ हरिपालदेवः

ष्यतीति सिद्धनृपो विज्ञप्तस्तस्मिन्हीनजाताविर्त्य-
सहिष्णुस्तय विनाशावसरमन्वेषयामास सततं ।
स कुमारपालस्तं वृत्तान्तमीषद्विज्ञाय तस्मान्नृपतेः
शङ्कमानमानसः तापसवेषेण निर्मितनानाविधदे-
शान्तरभ्रमणःकियन्त्यपि वर्षाण्यतिवाह्य पुनः पत्त-
नमागतः । क्वापि मठे[1] तस्थौ । अथ श्रीकर्णदेवस्य
श्राद्धावसरे श्रद्धालुतया निमन्त्रितेषु सर्वेष्वपि
तपस्विषु श्रीसिद्धराजः प्रत्येकं तेषां तपस्विनां
स्वयं पादौ प्रक्षालयन् कुमारपालनाम्नस्तपस्विनः
कमलकोमलौ चरणौ करतलेन संस्पृश्य तदूर्ध्वरे-
खादिभिर्लक्षणै राज्यार्होयमिति निश्चलया दृशा-
पश्यत् । तदिङ्गितैस्तं विरुद्धं विबुध्यमानस्तैव-
वेषपरावर्त्तेन काकनाशं नष्टः । आलिङ्गनाम्नः कु-
लालस्यालये मत्पात्राणां पाके[2] रच्यमाने तदन्त-
र्निधाय तन्मानुपदिकेभ्यो रक्षितः स क्रमात्ततः
संचरन् तद्विलोकनाकुलितेन राजलोकेन त्रासितः
सन्निहितां दुर्गमां दुर्गभूमिमवलोक्य क्वापि क्षेत्रे
क्षेत्ररक्षकैः[3] क्रियमाण.छिन्नकण्टकिशाखिशाखानिचये

१ (श्रीमद्रादिभूपतेरस्टो मठे २ आपाके ३ ध्वा-
ङ्क्षरक्षकैः

समुपचीयमाने तं तदन्तर्निधाय तेषु स्वस्थानमागतेषु पदिकेन पदे तत्रानीते सर्वथा तत्रासंभावनया कुन्ताग्रेण भिद्यमानेपि तस्मिंस्तमनासाद्य व्यावृत्ते राजसैन्ये द्वितीयेऽहनि क्षेत्राधिकृतैस्ततः स्थानादुद्धृतः पुरतः क्वापि प्रातरान्तर्व्रजन् क्वापि तरुच्छाये विश्रान्तः सन् बिलान्मूषकं मुखेन रूप्यनाणकमाकर्षन्तं निभृतया दृशा विलोक्य यावदेकविंशसंख्यानि दृष्ट्वा पुनस्तेभ्य एकं गृहीत्वा बिलं प्रविष्टे पाश्चात्यानि तु सर्वाणि स गृहीत्वा यावन्निभृतीभवति तावत्स तान्यनवलोक्य तदर्त्या विपेदे। स तच्छोकव्याकुलितमानसश्चिरं परितप्य पुरतो व्रजन्, कयापीभ्यवध्वा श्वशुरगृहात्पितृगृहं व्रजन्त्या, पथि पाथेयाभावाद्दिनत्रयं क्षुत्क्षामकुक्षिर्भ्रातृवात्सल्यात्कर्पूरपरिमलशालिशालिकरम्बेण[2] सुहितीचक्रे[3]। तदनु स विविधानि देशान्तराणि परिभ्रमन्स्तम्भतीर्थे महं० श्रीउदयनपार्श्वे शम्बलं[4] याचितुमागतः। तं पौषधशालायामागतमाकर्ण्य तत्रागते तस्मिन्नुदयनेन पृष्टः श्रीहेमचन्द्राचार्यः

[ १ दूरशून्याध्वनि २ दधियुक्तसक्तुना ३ सुतृप्तः कृतः ४ पाथेयं द्रव्यादि ५ जैनीयव्रतनियमविशेषाचरणस्थानं प्रसिद्धं ]

प्राह। लोकोत्तराणि तदङ्गलक्षणानि वीक्ष्य सार्वभौमोऽयं नृपतिर्भावीत्यादिशत्। आजन्म दरिद्रोपद्रवतया[1] तां वाचं संदिग्धतया मन्यमानेन तेन क्षत्रिये नासंभाव्यमेतदिति विज्ञप्ते, सं. ११९९ वर्षे कार्त्तिकवदि२ रवौ हस्तनक्षत्रे यदि भवतः पट्टाभिषेको न भवति तदाऽतःपरं निमित्तावलोकसंन्यास इति पत्रकमालिख्यैकं मन्त्रिणेऽपरं तस्मै समारोपयत्। अथ स क्षत्रियस्तत्कलाकौशलचमत्कृतमानसः यद्यदः सत्यं तदा भवानेव नृपतिः, अहं तु त्वच्चरणरेणुः स कुमारपाल इति प्रतिश्रवं श्रावयन् "किं नो नरकान्तराज्यलिप्सया" भवतु कृतज्ञेन भवता वाक्यमिदमप्यऽविस्मरता जिनशासनभक्तेन सततमेव भाव्यमिति तदनुशास्तिं शिरःशेखरीकृत्यापृच्छ्य च मन्त्रिणा सह गृहं प्राप्तः। स्नानपानाशनादिभिः सत्कृतः यथायाचितं पाथेयं समर्प्य प्रस्थापितो मालवकदेशं गतः। कुडङ्गेश्वरप्रासादे प्रशस्तिपट्टिकायां ॥

पुन्ने[2] वाससहस्से[3] सयम्मि वरिसाण नवनवइअहिए।
होही कुमरनरिन्दो तुह विक्कमराय सारित्थो ॥१॥

---

१ उपद्रुततया २ (C D) पुण्णे ३ A बारसहस्से

इमां गाथामालोक्य विस्मयापन्नमानसो गूर्जर-नाथं सिद्धाधिपं परलोकगतमवगम्य ततः प्रत्यावृत्तो विलीनशम्बलोऽस्मिन्नगरे कस्यापि विपणिनो विपणादशनान्तरं पलायमानः श्रीमदणहिल्लपुरमुपेत्य निशि कान्दविकापणे धनाभावाद्भुक्तदशनो भगिनी-पते राजश्रीकान्हडदेवस्य सदनमासाद्य राजमन्दिरा-दागतेन तेन पुरस्कृत्यान्तर्नीतः सद्भोजनादिभिः सुहितीभूतः सुष्वाप। प्रातस्तेन भावुकेन स्वसैन्यं सन्नह्य नृपसौधमानीयाऽभिषेकपरिक्षानिमित्तं प्रथम-मेकः कुमारः पट्टे निवेशितः। तमुत्तरीयाञ्चलेनाप्य-नावृण्वन्तमालोक्य तदपरो निवेशितस्तं योजितक-रसंपुटं वीक्ष्य तस्मिन्नप्यप्रमाणीकृते श्रीकान्हडदेवा-नुज्ञातः कुमारपालः संवृतवसनः उद्ध्वं पवनं गृह्णन् सिंहासने उपविश्य कृपाणं पाणिना कम्पयन् पु-रोधसा कृतमङ्गलः पञ्चाशद्वर्षदेश्यः सनिस्वानान्य-निस्वनं श्रीमता कान्हडदेवेन पञ्चाङ्गचुम्बितभूतलं

---

१ A तमेव बन्दीचकार सत्वाकुलमाक्रन्दन्मिलितनगरलोकैर्द्व-योरपि निधनं निश्चित्य मम कृतकमूर्च्छां भवानपनयतु इत्याभिहितस्ते-मतिवैभवेन प्रत्युज्जीवितं मन्यस्तत्तथा कृत्वा तस्मादपायात्पलायमानः २ B व्यपेतोपायः ३ राजकुलश्री. ४ अञ्चलमप्यनावृण्वानं.

नमोऽकारि। स प्रौढतया देशान्तरपरिभ्रमणनैपुण्येन राज्यशास्तिं स्वयं कुर्वन् राजवृद्धानामरोचमानस्तैः संभूय व्यापादयितुं व्यवसितः। सान्धकारगोपुरेषु न्यस्तेषु घातुकेषु प्राक्तनशुभकर्मणा प्रेरितेन केनाप्याप्तेन ज्ञापितवृत्तान्तस्तं प्रवेशं विहाय द्वारान्तरेण वप्रं प्रविश्य तानि प्रधानान्यन्तकपुरीं प्राहिणोत्। स भावुकमण्डलेश्वरः शालकसंबन्धाद्राज्यस्थापनाचार्यत्वाच्च राज्ञो दुरवस्थामर्माणि जल्पति। पश्चाद्राज्ञोक्तं हे भावुक राजपटिकायां सर्वावसरे च प्राक्तनदुरवस्थामर्मनर्म[1] न भाषणीयं त्वयाऽतः परमेवं विधं सभासमक्षं नो वाच्यं विजने तु यदृच्छया वाच्यमिति राज्ञोपरुद्धः। उत्कटतयाऽवज्ञावशाच्च रे अनात्मज्ञ इदानीमेव पादौ त्यजसीति भाषमाणो मर्तुकामः औषधमिव तद्वचः पथ्यमपि न जग्राह। नृपस्तदाकारसंवरणेनाऽपन्हवं विधायाऽपरस्मिन्दिवसे नृपसंकेतितैर्मल्लैस्तदङ्गभङ्गं कृत्वा नेत्रयुगं समुद्धृत्य ततस्तं तदावासे प्रस्थापयामास ॥

आदौ मयैवायमदीपि नूनं

---

१ दुरवस्थया समं मर्म

न तद्वहेन्मामवहेलितोपि ।
इति भ्रमादङ्गुलिपर्वणापि
स्पृशेत[1] नो दीप इवावनीपः ॥१॥

इति विमृशद्भिः समन्ततः सामन्तैर्भयभ्रान्तचित्तैस्ततः प्रभृति स नृपतिः प्रतिपदं सिषेवे । तेन राज्ञा पूर्वोपकारकर्त्तुः श्रीमदुदयनस्याङ्गजः श्रीवाग्भटदेवनामा महामात्यश्चक्रे । आलिङ्गनामा ज्यायान्प्रधानः । महं० उदयनदेवस्य पुत्रो वाहडनामा कुमारः श्रीसिद्धराजस्य प्रतिपन्नपुत्रः श्रीकुमारपालदेवस्यावज्ञामेव मन्यमानः[2] सपादलक्षीयभूपतेः पत्तिभावं बभार । तेन श्रीकुमारपालभूपालेन सह विग्रहं चिकीर्षुणा तत्रत्यं सकलमपि सामन्तलोकं लञ्चोपचारदानैः[3] स्वायत्तीकृत्य दुर्वारस्कन्धावारोपेतं सपादलक्षक्षोणिपतिं सहादाय देशसीमान्तमागतः । अथ चौलुक्यचक्रवर्त्ती अभ्यमित्रीणतया स्कन्धावारसमीपे निजं चमूसमूहं निवेशयामास । निर्णीते समरवासरे निष्कण्टके क्रियमाणे सीमनि सज्जीक्रियमाणायां चतुरङ्गसेनायां चउलिङ्गनामा पट्टहस्तिनो हस्तिपकः कस्मिन्नप्यागसि नृपेणा-

---

१ D स्पृश्योपि २ C आज्ञामवमन्यमानः ३ B दानादिना

कुश्यमाणः क्रोधादङ्कुशं तत्याज । अथ सामलना-
माऽमात्रगुणपात्रं महामात्रं पुष्कलवसुदानपूर्वकं
तत्पदे नियोजितः सन् राज्ञा स्वकलहपञ्चानन-
नामानमनेकपं प्रक्षरितं कृत्वा तदुपरि नृपासनं नि-
वेश्य तत्र षट्त्रिंशदायुधानि नियोजयन्सकलकला-
कलापसंपूर्णः कलापके चरणौ नियोज्य स्वयमारूढ-
वान् तदासनस्थश्चौलुक्यभूपालोपि संग्रामाधिकृत-
पुरुषैरुत्थापनिकां कार्यमाणेषु बाहडकुमारभेदा-
दाज्ञाभङ्गकारिषु, इति सैन्यविप्लवमाकलय्य तं नि-
षादिनमादिदेश पुरो गन्तुं, सन्मुखसेनायां सपाद-
लक्षक्षितिपतिमतङ्गगजं छत्रचामरसंकेतादुपलक्ष्य
विघटिते कटकबन्धे मयैवैकाकिना योद्धव्यमिति
निर्णीय तेनाधोरणेन स्वसिन्धुरं तत्सन्निधौ ने-
तुमादिशन्नपि तमपि तथाऽकुर्वाणं विलोक्य त्वम-
पि विघटितोसीत्यादिशंस्तेन विज्ञपयांचक्रे ।
स्वामिन्कलहपञ्चाननो हस्ती सामलनामा हस्ति-
पकश्च द्वयं युगान्तेपि न विघटते[1] परं परस्मिन्कु-
म्भिकुम्भे बाहडनामाकुमारस्तारध्वनिराधिरूढोस्ति
यस्य हक्कया हस्तिनोपि भज्यन्ते इत्युक्तोत्तरीया-

१ A विघटयिष्यते

ञ्चलयुगलेन सिन्धुरश्रवणौ पिधाय स निजं गजं प्रतिगजेन संघट्टयामास । अथ बाहडः पूर्वमात्मसात्कृतं चउलिनामानमारोहकं जानन् कृपाणपाणिर्निजगजात्कलहपञ्चाननकुम्भे पदं ददानः श्रीकुमारपालविनाशाशया, तेन नियन्त्रा पश्चात्कृते गजे स भूमौ पतितस्तत्रवर्गीयपदातिभिरधारि । तदनु चौलुक्यभूपतिना श्रीमदानाकनामा सपादलक्षनृपः शस्त्रसज्जो भवेत्यभिहितस्तन्मुखकमलं प्रति औचित्याच्छिल्लमुखं व्यापारयन् प्रधानक्षत्रियोसीति सोपहासश्लाघया तं वञ्चयित्वा नाराचेन निर्भिद्य कुम्भीन्द्रकुम्भे पातयित्वा जितं जितमिति ब्रुवाणः स्वयं पोतं[2] भ्रमयांचकारेति सर्वेषां सामन्तानां सर्वानपि तुरङ्गमान् स नृपतिराक्रम्य जग्राह ॥

इति बाहडकुमारप्रबन्धः ॥

तदनु चौलुक्यराजेन कृतज्ञचक्रवर्त्तिना आलिङ्गकुलालाय सप्तशतीग्राममिता विचित्रचित्रकूटपट्टिका ददे । ते तु निजान्वयेन लज्जमानाः अद्यापि सगरा[3] इत्युच्यन्ते । यैः छिन्नकण्टकान्तरे प्रक्षिप्य क्षितिपो रक्षितस्तेऽङ्गरक्षपदे प्रतिष्ठिताः ॥

१ B युगलं सिन्धुरश्रवणयोराधिरोप्य २ वस्त्रं १ A B सागरा

अथ सोलाकनामा[1] गन्धर्वोऽवसरे गीतकलया परितोषिताद्राज्ञः षोडशाधिकं द्रम्माणां शतं प्राप्य तेन सुखभक्षिकां विसाध्य बालकांस्तर्पयन् राज्ञा कुपितेन निर्वासितः। ततो[2] विदेशं गतस्तत्रत्य-भूपतेर्गीतकलया रञ्जितात्प्रसादप्राप्तं गजयुगलमा-नीयोपायनीकुर्वन् चौलुक्यभूपालेन संमानितः। कदाचित्कोपि वैदेशिकगन्धर्वो मुषितोस्मि मुषि-तोस्मीति तारं बुम्बारवं कुर्वाणः, केन मुषितोसीति राज्ञाभिहितो मम गीतकलया समीपागतेन, मया कौतुकाद्गलन्यस्तकनकशृङ्खलेन[3] मृगेण त्रस्यता मृगे-न्द्रेणेति विज्ञपयामास। स तदनु भूपतिना समादिष्टः सोलाभिधानो गन्धर्वराडऽटवीमटन् स्फीतगीताकृ-ष्टिविद्यया कनकशृङ्खलाङ्कितगलं[4] मृगं नगरान्तः स-मानीय तस्य भूपतेर्दर्शयामास। अथ तत्कलाकौ-शलचमत्कृतमानसः प्रभुः श्रीहेमाचार्यो गीत कलाया अवधिं पप्रच्छ। स शुष्कदारुणः पल्लवप्ररोह मवधिं विज्ञप्तवान्। तर्हि तत्कौतुकं दर्शयेत्यादिष्टः

१ C तस्य चौलुक्यराज्ञः पट्टाभिषेकानन्तरं स सोलाकनामा २ C स करेणुमारुह्य वि० ३ B सामीप्यमुपेयुषा. कौतुकार्थितगलशृङ्खलेन ४ D गलखेलत्कनकशृङ्खलं

अर्बुदाद्रिरोर्वैरहकनामानं वृक्षमाक्षेपादानाय्य त-च्छुष्कशाखायाः काष्ठं राजाङ्गणे कुमारमृत्तिकया कृतालवाले निवेश्य निजया नवगीतकलया सद्यः प्रोल्लसत्पल्लवं तं निवेदयन् सनृपतीन् भट्टारकश्री-हेमचन्द्रसूरीन् परितोषयामास ।

इति अच्छइंकारसोलाकप्रबन्धः ॥

अथ कदाचित्सर्वावसरे स्थितचौलुक्यचक्रवर्ती कौङ्कुणदेशीयमल्लिकार्जुनाभिधानस्य राज्ञो मागधेन राजपितामह इति बिरुदमभिधीयमानमाकर्ण्य तद-सहिष्णुतया सभां निभालयन्नृपचित्तविदा मन्त्रिणा-ऽम्बडेन योजितकरसंपुटं दर्शयता चमत्कृतः, सभा-विसर्जनानन्तरमञ्जलिबन्धस्य कारणं पृच्छन्नेवमूचे। यदस्यां सभायां स कोपि सुभटो विद्यते यं प्रस्थाप्य मिथ्याभिमानिनं चतुरङ्गनृपवन्नृपाभासं मल्लिकार्जुनं विनाशयाम इत्याशयविदा मया त्वदादेशाक्षमेण चाञ्जलिबन्धश्चक्रे इति विज्ञप्तिस-मनन्तरमेव तं नृपं प्रति प्रयाणाय दलमेकीकृत्य पञ्चाङ्गप्रसादं दत्त्वा समस्तसामन्तैः समं विसस-र्ज । स चानवच्छिन्नैः प्रयाणैः कुङ्कुणदेशमधिगम्य

१ D C शाखाखण्डं २ C छइ [ आश्चर्यकारक ]

दुर्वारवारिपूरां कलविणिनाम्नीं सरितमुत्तरन् पर-
स्मिन्कूले आवासेषु दीयमानेषु तं संग्रामसज्जं वि-
मृश्य स मल्लिकार्जुननृपतिः प्रहरंस्तत्सैन्यं त्रास-
यामास । अथ तेन पराजितः स सेनापतिः कृष्ण-
वदनः कृष्णवसनः कृष्णच्छत्रालंकृतमौलिः कृष्णगु-
रूदरे निवसन्, चौलुक्यभूभुजा विलोक्य कस्यासौ
सेनानिवेश इत्यादिष्टे कुङ्कुणात्प्रत्यावृत्तस्य पराजि-
ताम्बडसेनापतेः सेनानिवेशोयमिति विज्ञप्ते तस्य
त्रपया चमत्कृतचित्तः प्रसन्नया[1] दृशा सं[illegible]-
परैर्बलवद्भिः सामन्तैः समं मल्लिकार्जुनं [illegible] पुनः
प्रहितः । स तु कौङ्कुणदेशं प्राप्य तां नदीमासा[illegible] प-
द्याबन्धे विरचिते तेनैव पथा[2] सैन्यमुत्तार्य सावधान-
वृत्त्याऽसमसमरारम्भे हस्तिस्कन्धाधिरूढं वीरवृत्त्या
मल्लिकार्जुनमेव निश्चलीकुर्वन् स आम्बडः सुभटो
दन्तमुशलसोपानेन कुम्भिकुम्भस्थलमधिरुह्य मा-
द्यदुद्दामरणरसः प्रथमं प्रहर, इष्टदैवतं स्मरेत्युच्च-
रन् धारालकरालकरवालप्रहारान्मल्लिकार्जुनं पृ-
थ्वीतले पातयन् सामन्तेषु तन्नगरलुण्टनव्यापृतेषु
केसरिकिशोरः करिणामिव लीलयैव जघान ।

---

१ C प्रमादस्खलितया   २ A पद्यानुक्रमं

तन्मस्तकं स्वर्णेन वेष्टयित्वा तस्मिन्देशे चौलुक्यचक्रवर्त्तिन आज्ञा दापयन् श्रीमदऽणहिल्लपुरं प्राप्य सभानिषण्णेषु द्वासप्ततिसामन्तेषु स्वामिनः श्रीकुमारपालनृपतेश्चरणौ कौङ्कुणदेशीयनृपमल्लिकार्जुनशिरसा समं ववन्दे।

शृङ्गारकोडीसाडी१ माणिकउ पछेडउ२ पापखउ हारु३ संयोगसिद्धिसिप्रा४ तथा हेमकुम्भा३२स्तथा मौक्तिकानां सेडउ६ चतुर्दन्तहस्ति१ पात्राणि १२० कोडी[1]सार्द्ध १४ द्रव्यस्य दण्डः

श्रीआम्बडेनैतैर्वस्तुभिः सह तच्छिरःकमलेन पुपूजे राजा । तदवदातप्रीतेन राज्ञा श्रीमुखेन श्रीमदाम्बडाभिधानमहामण्डलेश्वरस्य राजपितामह इति विरुदं ददे ॥ इति आम्बडप्रबन्धः ॥ (ख०)

अथ कदाचिदणाहिल्लपुरे श्रीहेमचन्द्रसूरयो दत्तव्रतायाः[3] पाहिणिनाम्न्याः स्वमातुः परलोकावसरे कोटिनमस्कारपुण्ये दत्ते व्यापत्तेरनु तत्संस्कारमहोत्सवे क्रियमाणे त्रिपुरुषधर्मस्थानसंनिधौ तत्तपस्विभिः सहजमात्सर्याद्विमानभङ्गापमाने सूत्रिते तदुत्तरक्रियां निर्माय तेनैव मन्युना मालवक-

१ A तडा C मुडा २ C D कोटि. ३ C मेतायाः

संस्थितस्य कुमारपालनृपतेः स्कन्धावारमलंचक्रुः ।
*आपण पइ प्रभु होइअं[1] कइ प्रभु कीजइं हाथि।
कज्ज करिवा[2] माणुसह बीजउ मागु न आत्थि[3] ॥१
इति वचनं तथ्यं[4] विमृशतः श्रीमदुदयनमन्त्रिणा नृपतेर्निवेदितागमनाः कृतज्ञमौलिमणितया परोपरोधात्सौधमानीताः । तद्राज्यप्राप्तिनिमित्तज्ञानं स्मारयन्नृपः भवद्भिः सदैव देवतार्चनावसरेऽभ्युपेतव्यमित्युपरोधयन्,
भुञ्जीमहि वयं[5] भैक्ष्यं जीर्णं वासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ १
इति सूरिभिरभिहिते नृपः ।
एकं मित्रं भूपतिर्वा यतिर्वा
एका भार्या सुन्दरी वा दरी वा[6] ।
एकं शास्त्रं वेदमध्यात्मकं वा
एको देवः केशवो वा जिनो वा ॥१
इति महाकविप्रणीतत्वात्परलोकसमारचनाय भ-

---

* स्वयं प्रभुः समर्थो भवेत् यदि कमपि प्रभुं क्रियते हस्ते मनुष्याणां कार्यं कर्त्तुमन्यो मार्गो नास्तीति हेमचन्द्रवाक्यम्

१ C D पइहोइय २ C काजकरे वा मणुसह ३ A मागत आथि. ४ C वचस्तत्त्वं ५ A वर्ग [६ B C D अन्यानि त्रिचरणानि नान्यत्र]

वाग्भिः सह मैत्र्यमभिलषामीति व्याहरन्, अथाप्रतिषिद्धमनुमतमिति तस्य महर्षेः परीक्षितचित्तवृत्तिः श्रीमुखेन स नृपः स्खलनाकारिणां वेत्रिणां सर्वसमयकं ददौ । अथ तत्र गतायाते संजायमाने सूरेर्गुणग्रामस्तवं कुर्वत्युर्वीपतौ पुरोधा विराधादामिगः प्राह ।

विश्वामित्रपराशरप्रभृतयो येऽन्येम्बुपत्राशिन-
स्तेपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥ १ ॥

इति तद्वचनानन्तरं हेमचन्द्रः ।

सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतमेति किलैकवेलम् ।
पारापतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥ १

तन्मुखमुद्राकारिणि प्रत्युत्तरेऽभिहिते सति, नृपप्रत्यक्षं केनापि मत्सरिणैते सिताम्बराः सूर्यमपि न मन्यन्ते[1] इत्यभिहिते

---

[1] C भजन्ते

अधाम[1] धामधामार्कं वयमेव हृदि स्थितम् ॥
यस्यास्तव्यसने ज्ञाते[2] त्यजामो भोजनं यतः ॥ १॥

इति प्रामाण्यनैपुण्याद्वयमेव सूर्यभक्ताः नैते "तन्मुखबाधे जाते[3]" कदाचिद्देवतावसरक्षणे सौधमागते मोहान्धकारधिक्कारचन्द्रे श्रीहेमचन्द्रे यशश्चन्द्रगणिना रजोहरणेनासनपदं प्रमार्ज्य काम्बले तत्र निहिते, अज्ञाततत्त्वतया किमेतदिति नृपेण पृष्टः प्राह । कदाचिदिह कोऽपि जन्तुर्भवति तदाबाधापरिहारायाऽसौ प्रयत्नो, यदा प्रत्यक्षतया जन्तुर्निरीक्ष्यते तदैवेदं युज्यते नापरथा वृथाप्रयासहेतुत्वादिति युक्तियुक्तां नृपोक्तिमाकर्ण्य तैः सूरिभिरभिदधे । गजतुरगाद्या चमूः किं प्रतिनृपतिरिपावुपस्थिते क्रियते उत पूर्वमेव यथायं राजव्यवहारस्तथा धर्मव्यवहारोपीति तद्गुणरञ्जितहृदा पूर्वप्रतिपन्ने राज्ये दीयमाने सर्वशास्त्रविरोधहेतुत्वात् । यदाह ॥

राजप्रतिग्रहदग्धानां ब्राह्मणानां युधिष्ठिर ।
दग्धानामिव बीजानां पुनर्जन्म न विद्यते ॥ १

इदं पुराणोक्तं । तथाच जैनागमः ॥

---

१ A C आभाम २ प्राप्ते ३ तत्त्वत इति तन्मुखबन्धे

*नत्ति ही गिहिमत्ते य[1] रायपिण्डे किमिच्छए।

इति तत्संबोधाच्चमत्कृतचित्तः श्रीपत्तनं प्राप। भूपोऽन्यदा मुनिं पप्रच्छ कयापि युक्त्याऽस्माकमपि यशःप्रसरः कल्पान्तस्थायी भवतीति तदीयां गिरं श्रुत्वा विक्रमार्क इव विश्वस्यानृण्यकरणा[2]। यद्वा सोमेश्वरस्य काष्टमयं प्रासादं वारिधिशीकरनिकरैरासन्नाम्र्मैःशीर्णप्रायं युगान्तस्थायिकीर्त्तये समुद्धरेति चन्द्रातपनिभया श्रीहेमचन्द्रगिरोल्लसन्मुदम्भोधिर्नृपस्तमेव महर्षिं पितरं गुरुं दैवतं मन्यमानो विजानाति। निरन्तरं द्विजाननिन्दंस्ततः प्रासादोद्धाराय तदैव दैवज्ञनिवेदितसुलग्नस्तत्र पञ्चकुलं प्रस्थाप्य प्रासादप्रारम्भमचीकरत्। अन्यदा श्रीहेमचन्द्रस्य लोकोत्तरैर्गुणैःपरिहृतहृदयो नृपो मन्त्रिश्रीउदयनमिति पप्रच्छ। एतादृशं पुरुषरत्नं समस्तवंशावतंसं देशे च समस्तगुणाकरे नगरे च कस्मिन्नसमुत्पन्नमिति नृपादेशादनु स मन्त्री जन्मप्रभृति तच्चरित्रं पवित्रमित्थमाह। अद्वाष्टमनामनि देशे धुन्धुक्कनगरे श्रीमन्मोढवंशे चाचिगनामा व्यवहारी

* शक्ते हि गृहिमात्रे राजपिण्डं किमर्थमिच्छति मुनिरिति

1 A B सन्निगिहिमित्तेय  2 C अन्त

सतीजनमतल्लिका जिनशासनदेवीव तत्सधर्मचारिणी शरीरिणीव श्रीः पाहिणीनाम्नी चामुण्डागोनशयोराद्याक्षरेणाङ्कितनामा तयोः पुत्रश्चाङ्गदेवोभूत्। स चाष्टवर्षदेश्यः श्रीदेवचन्द्राचार्येषु श्रीपत्तनात्तीर्थयात्राप्रस्थितेषु धुन्धुक्के श्रीमोढवसहिकायां देवनमस्करणाय प्राप्तेषु सिंहासनस्थिततदीयनिषद्याया उपरि सवयोभिः समं रममाणः शिशुभिः सहसा निषसाद तदङ्गप्रत्यङ्गानां जगद्विलक्षणानि लक्षणानि प्रेक्ष्य। अयं यदि क्षत्रियकुले जातस्तदा सार्वभौमचक्रवर्ती यदि वणिक्विप्रकुले जातस्तदा महामात्यश्चेद्दर्शनं प्रतिपद्यते तदा युगप्रधान इव कलिकालेपि कृतयुगमवतारयति स आचार्य इति विचार्य तन्नगरव्यवहारिभिः समं तल्लिप्सया चाविगौकः प्राप्य तस्मिंश्चाविगे ग्रामान्तरभाजि तत्पत्न्या विवेकिन्या स्वागतादिभिः परितोषिताः श्रीमन्तस्त्वत्पुत्रं याचितुमिहागता इति व्याहरन्तोऽथसा हर्षाश्रूणि मुञ्चती स्वं रत्नगर्भं मन्यमाना श्रीसंघस्तीर्थकृतां मान्यः स मत्सूनुं याचते इति हर्षास्पदेऽपि विषादः, एतस्य पिता नितान्तमिथ्यादृष्टिः।

---

१ (गोत्रजायक्षयोः) २ C D श्रीसंघः

तादृशोपि सम्प्रति ग्रामे नास्ति। अथ तैर्व्यवहारिभिस्त्वया दीयतामित्युक्ते स्वदोषोत्तारणाय मात्रा दाक्षिण्यादमात्रगुणपात्रं पुत्रस्तेभ्यो गुरुभ्यो ददे। तदनन्तरं तया श्रीदेवचन्द्रसूरिरिति तदीयमभिधानमबोधि। तैर्गुरुभिः स शिशुः शिष्यो भविष्यसीति पृष्टः, ॐमित्युच्चरन् प्रतिनिवृत्तैस्तैः समं कर्णावत्यामाजगाम। उदयनमन्त्रिगृहे तत्सुतैः समं बालधारकैः पाल्यमानो यावदास्ते तावता ग्रामान्तरादागतश्चाचिगस्तं वृत्तान्तं परिज्ञाय पुत्रदर्शनावधिसंन्यस्तसमस्ताहारस्तेषां गुरूणां नाम मत्वा कर्णावर्ती प्राप। तद्वसतौ समागत्य कुपितः पितेपत्नान्प्रणनाम। गुरुभिः सुतानुसारेणोपलक्ष्य विचक्षणतया विविधाभिरावर्जनाभिरावर्जितः, समागतेनोदयनमन्त्रिणा धर्मबन्धुबुद्ध्या निजमन्दिरे नीत्वा ज्यायःसहोदरभक्त्या भोजयांचक्रे। तदनु चाङ्गदेवसुतं तदुत्सङ्गे निवेश्य पञ्चाङ्गप्रसादसहितं दुकूलत्रयं प्रत्यक्षं रूक्षत्रयं चोपनीय सभक्तिकमावर्जितः। तं प्रति चाचिगः प्राह। क्षत्रियस्य मूल्ये अशीत्यधिकसहस्रं तुरगस्य मूल्ये पञ्चाशदधिकानि सप्तदशशतानि आकिंचित्करस्यापि वणिजो मूल्ये

नवनवतिकलभाः एतावता नवनवतिलक्षाः । त्वं तु लक्षत्रयं समर्पयन्नौदार्यछद्मना कार्पण्यं प्रादुः- कुरुषे। मत्सुतस्तावदनर्घ्यो भवदीया च भक्तिरनर्घ्य- तमा तस्य मूल्ये सा भक्तिरस्तु शिवनिर्माल्यमि- वास्पृश्यो मे द्रव्यसंचयः । इत्थं चाविगे सुतस्य स्वरूपमभिदधाने प्रमोदपूरितचित्तः स मन्त्री अकु- ण्ठोत्कण्ठतया तं परिरभ्य साधु साध्विति वदन् श्रीमानुदयनः प्राह । मम पुत्रतया समर्पितो यो- गिमर्कट इव सर्वेषां जनानां नमस्कारं कुर्वन् केवलमपमानपात्रं भविता, गुरूणां दत्तस्तु गुरुपदं प्राप्य बालेन्दुरिव त्रिभुवननमस्करणीयो जायतेऽतो यथोचितं विचार्य व्याहरेत्यादिष्टः । स भवद्विचार एव प्रमाणमिति वदन् गुरुपार्श्वे नीतः सुतं गुरु- भ्योऽदीदपत् । तदनु सुतस्य प्रव्रज्याकरणोत्सव- श्चाविगेन चक्रे । अथ कुम्भयोनिरिवाप्रतिमप्रतिभा- भिरामतया समस्तवाङ्मयाम्भोधिमुष्टिंधयोऽभ्यस्त- समस्तविद्यास्थानो हेमचन्द्र इति गुरुदत्तनाम्ना प्र- तीतः। सकलसिद्धान्तोपनिषन्निषण्णधीः षट्त्रिंशता सूरिगुणैरलंकृततनुर्गुरुभिः सूरिपदेऽभिषिक्तः ॥ इति मन्त्रिणोदयनेनोदितां हेमाचार्यजन्मप्रवृत्तिमाकर्ण्य

नृपो मुमुदेतराम् । अथ श्रीसोमनाथदेवस्य प्रासादारम्भे शिखरशिलानिवेशे संजाते सति पञ्चकुलप्रहितवर्द्धापनिकाविज्ञप्तिकां नृपः श्रीहेमचन्द्रस्य गुरोर्दर्शयन्, अयं प्रासादप्रारम्भः कथं निष्प्रत्यूहं प्रमाणभूमिमधिरोढेति पृथ्वीपरिवृढेनानुयुक्तः श्रीमान्किंचिदुचितं विचिन्त्य गुरुरूचिवान् । यदस्य धर्मकार्यस्यान्तरायपरिहाराय ध्वजारोपं यावदाजिह्मब्रह्मसेवा, अथवा मद्यमांसानियमो द्वयोरेकतरं किमप्यङ्गीकरोतु नृप इत्यभिहिते तद्वचनमाकर्ण्य मद्यमांसानियममभिलषन्, श्रीनीलकण्ठोपरि विमुच्योदकं तं चाभिग्रहं जग्राह। संवत्सरद्वयेन तस्मिन्प्रासादे कलशध्वजाधिरोपं यावन्निवृत्ते तं नियमं मुमुक्षुर्गुरूनऽनुज्ञापयंस्तैरूचे । यद्यनेन निजकीर्त्तनेन सार्द्धमर्द्धचन्द्रचूडं प्रेक्षितुमर्हसि, तद्यात्रापर्यन्ते नियममोचनावसर इत्यभिधायोत्थिते श्रीहेमचन्द्रमुनीन्द्रे षट्त्रिंशद्गुणैरुन्मीलन्नीलीरागरक्तहृदयस्तमेकमेव संसदि प्रशशंस सः। निर्निमित्तवैरिपरिजनस्तत्तेजःपुञ्जमसहिष्णुः

उज्ज्वलगुणमभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते।
दग्ध्वा तनुमपि शलभो दीप्रं दीपार्चिषं हरति ॥१

इति न्यायात्पृष्टिमांसादनदोषमप्यङ्गीकृत्य तदपवादानवादीत् । यदयममन्दछन्दानुवृत्तिपरः सेवाधर्मकुशलः केवलं प्रभोरभिमतमेव भाषते यद्येवं तदा प्रातरुपेतः श्रीसोमेश्वरयात्रार्थमत्यर्थमभ्यर्थ्येत राज्ञा तथाकृते सूरयः प्रोचुः । यद्बुभुक्षितस्य किं निमन्त्रणाग्रह उत्कण्ठितस्य किं केकारवश्रावणमिति लोकरूढेस्तपस्विनामधिकृततीर्थाधिकाराणां को नाम नृपतेरत्र निर्बन्धः । इत्थं गुरोरङ्गीकारे किं भवद्योग्यं सुखासनप्रभृति वाहनादि च लभ्यतामितीरिते वयं चरणचारेणैव संचरन्तः पुण्यमुपालभामहे परं वयमिदानीमापृच्छ्य मितैर्मितैः प्रयाणकैः श्रीशत्रुंजयोज्जयन्तादिमहातीर्थानि नमस्कृत्य भवतां श्रीपत्तनप्रवेशे मिलिष्याम इत्युदीर्य तत्तथैव कृतवन्तः । नृपतेः समग्रसामग्र्या कतिपयैः प्रयाणकैः श्रीपत्तनं प्राप्तस्य श्रीहेमचन्द्रमुनीन्द्रमिलनादतिप्रमुदितस्य सन्मुखागतेन गण्ड[२]० श्रीबृहस्पतिनानुगम्यमानस्य महोत्सवेन पुरं प्रविश्य श्रीसोमेश्वरप्रासादसोपानेष्वाक्रान्तेषु भूपीठलुण्ठनादरादनन्तरं चिरतरातुल्यायह्लकानुमा-

[१ परोक्षनिन्दाकारी २ गण्डस्तु भाषायां भईशो तपोधनः]

नेन गाढमुपगूढसोमेश्वरलिङ्गस्य, एते जिनादपरं न नमस्कुर्वन्तीति मिथ्यादृग्वचसा भ्रान्तचित्तस्य श्रीहेमचन्द्रं प्रति एवंविधा गिराविरासीत् । यदि युज्यते तवैतैरुपहारैर्मनोहारिभिः श्रीसोमेश्वरमर्चयन्तु भवन्तः। तत्तथेति प्रतिपद्य क्षितिपकोशादागतेन कमनीयेनोद्गमनीयेनालंकृततनुर्नृपतिनिर्देशाच्छ्रीबृहस्पतिना दत्तहस्तावलम्बः प्रासाददेहलीमधिरुह्य किंचिद्विचिन्त्य प्रकाशं । अस्मिन्प्रासादे कैलासनिवासी महादेवः साक्षादस्तीति रोमाञ्चकञ्चुकितां तनुं बिभ्राणो द्विगुणीक्रियतामुपहार इत्यादिश्य शिवपुराणोक्तदीक्षाविधिनाह्वाननावगुण्ठनमुद्रामन्त्रन्यासाविसर्जनोपचारादिभिः पञ्चोपचारविधिभिः शिवमभ्यर्च्य तदन्ते

यत्र तत्र समये यथा तथा<br>
योसि सोस्यभिधया यया तया ।<br>
वीतदोषकुलुषः स चेद्भवा-<br>
नेक एव भगवन्नमोस्तु ते ॥ १ ॥

भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।<br>
ब्रह्मा वा विष्णुर्वा महेश्वरो वा नमस्तस्मै ॥ २ ॥

इत्यादिस्तुतिभिः सकलराजलोकान्विते राज्ञि

सविस्मयमवलोकमाने दण्डप्रणामपूर्वं स्तुत्वा श्री-
हेमाचार्य उपरते सति स नृपः श्रीबृहस्पतिना
ज्ञापितपूजाविधिः समधिकवासनया शिवार्चानन्तरं
धर्मशिलायां तुलापुरुषगजदानादीनि महादानानि
दत्त्वा कर्पूरारात्रिकमुत्तार्य समग्रं राजवर्गमपसार्य
तद्गर्भगृहान्तः प्राविश्य, न महादेवसमो देवः न
मम तुल्यो नृपतिः न भवत्सदृक्षो महर्षिरिति
भाग्यवैभववशादत्र सिद्धे त्रिकसंयोगे बहुदर्शन-
प्रमाणप्रतिष्ठासंदिग्धे देवतत्त्वे मुक्तिपदं दैवतम-
स्मिंस्तीर्थे तथ्यागिरा निवेदयेत्याभिहितः श्रीहेमा-
चार्यः किंचिद्धिया निध्याय नृपं प्राह । अलं पु-
राणदर्शनोक्तिभिः श्रीसोमेश्वरमेव तव प्रत्यक्षी-
करोमि, यथा तन्मुखेन मुक्तिमार्गमवैषीति त-
द्वाक्यात्किमेतदिति जाघटीतीति विस्मयापन्न-
मानसे नृपे निश्चितमत्र तिरोहितमस्त्येव दैवत-
मावां गुरुक्रमुन्त्या निश्चलावाराधकौ तदित्थं द्वन्द्वसि-
द्धौ सुकरं दैवतप्रादुःकरणं,मया प्राणिधानं क्रियते भ-
वता कृष्णागुरूत्क्षेपश्च कार्यस्तदा स परिहार्यो यं य-
दा त्र्यक्षः प्रत्यक्षीभूय निषेधयति देवं। अथोभाभ्याम-
पि तथा क्रियमाणे धूमधूम्यान्धकारिते गर्भगृहे नि-

र्णेषु नक्षत्रमालादीपकेषु आकस्मिके प्रकाशे द्वाद-
शात्ममहसीव प्रसरति, नृपो नयने संभ्रमादुन्मृज्य
यावदालोकते तावज्जलाधारोपरि जात्यजाम्बूनद-
द्युतिं चर्मचक्षुषां दुरालोकमप्रतिमरूपमसंभाव्य-
स्वरूपं तपस्विनमद्राक्षीत् । तं पदाङ्गुष्ठप्रभृति त-
ज्जटावधि करतलेन संस्पृश्य निश्चितदेवतावतारः
पचाङ्गचुम्बितावनितलं प्रणिपत्य भक्त्या भूमानिति
विज्ञपयामास । जगदीश भवद्दर्शनात्कृतार्थे दृशौ
आदेशप्रसादात्कृतार्थय श्रवणयुगलमिति विज्ञप्य
तूष्णीं स्थिते मोहनिशादिनमुखात्तन्मुखादिति
दिव्या गिराविरासीत् । राजन्नयं महर्षिः सर्वदेव-
तावतारः । अजिह्मपरब्रह्मावलोककरतलकलित-
मुक्ताफलवत्कालत्रयविज्ञातस्वरूपः । एतदुपदिष्ट-
एवासंदिग्धो मुक्तिमार्ग इत्यादिश्य तिरोभूते भू-
तपतावुन्मनीभावं भजति भूपतौ, रेचितप्राणायाम-
पवनः श्लथीकृतासनबन्धः श्रीहेमचन्द्रो याजनामिति
वाचमुवाच। तावदिष्टदैवतसंकेतात्त्यक्तराज्याभिमा-
नो "जीवप आदावधार्यतामिति" व्याहृतिपरे गुरौ
विनयनम्रमौलिर्यत्कृत्यमादिशेति व्याजहार । अथ

(१ शिरः करद्वयं जानुद्वयं चेति पञ्चाङ्गम. २ राजा ३ राजानं)

तत्रैव नृपतेर्यावज्जीवं पिशितप्रसन्नानियमं दत्त्वा ततः प्रत्यावृत्तौ गुरुक्ष्मापती श्रीमदणहिल्लपुरं प्रापतुः । श्रीजिनवदननिर्गमपावनीभिः शुद्धसिद्धान्तगीर्भिः प्रतिबुद्धो नृपः परमार्हतबिरुदं भेजे । तदभ्यर्थितः प्रभुः त्रिषष्टिशलाकापुरुषचरितं विंशतिवीतरागस्तुतिभिरुपेतं पवित्रं योगशास्त्रं रचयांचकार । प्रभोरादेशात्स्वाज्ञाकारिष्वष्टादशदेशेषु चतुर्दशवत्सरप्रमितां सर्वभूतेषु मारिं निवारितवान् । तेषु तेषु च देशेषु चत्वारिंशदधिकानि चतुर्दशशतानि विहाराणां कारयामास । सम्यक्त्वमूलानि द्वादव्रतान्यङ्गीकुर्वन्नऽदत्तादानपरिहाररूपे तृतीयव्रते व्याख्यायमाने रुदतीवित्तदोषान् पापैकनिबन्धनान् ज्ञापितो नृपस्तदधिकृतं पञ्चकुलमाकार्य द्वासप्ततिलक्षप्रमाणं तदीयपट्टकं विपाट्य मुमोच । तस्मिन्मुक्ते ॥

न यन्मुक्तं पूर्वैं रघुनहुषनाभागभरत-
प्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि ।
विमुञ्चन्कारुण्यात्तदपि रुदतीवित्तमधुना
कुमारक्ष्मापाल त्वमसि महतां मस्तमकमणिः ॥१

(१मांसमदिरयोर्निषेधं २ एकः क्षमायाः पृथिव्या अन्यः क्षान्तेः पतिः)

इति विद्वद्भिः स्तूयमाने
अपुत्राणां धनं गृह्णन्पुत्रो भवति पार्थिवः ।
त्वं तु संतोषतो मुञ्चन्सत्यं राजपितामहः ॥ १ ॥

इति प्रभुरपि नृपतिमनुमोदयांचक्रे ॥ अथ सुराष्ट्रदेशीयं सुंवरनामानं[1] विग्रहीतुं श्रीमदुदयनमन्त्रिणं दलनायकीकृत्य[2] समस्तकटकबन्धेन समं । प्रस्थापयामास सोपि श्रीवर्द्धमानपुरं प्राप्य श्रीयुगादिदेवपादान्निनंसुः पुरः प्रयाणकाय समस्तमण्डलेश्वरान्नभ्यर्च्य स्वयं विमलगिरिमा[3]गतः विशुद्धश्रद्धया श्रीदेवपादानां पूजादि विधाय यावत्पुरतो विधिवच्चैत्यवन्दनां विधत्ते तावन्नक्षत्रमालाया दीपवर्ति देदीप्यमानामादाय मूषकः काष्टमयप्रासादबिले प्राविशत् । देवाङ्गरक्षैस्त्याजितस्तदनु स मन्त्री समाधिभङ्गात्काष्ठमयदेवप्रासादविध्वंसभयाज्जीर्णोद्धारं चिकीर्षुः श्रीदेवपादानां पुरत एकभक्तादीनभिग्रहान्जग्राह । तदनु कृतप्रयाणः स्कन्धवारमुपेत्य तेन प्रत्यर्थिना समं समरे जायमाने परैः पराजिते नृपबले श्रीमदुदयनः समुत्तस्थौ । तदा तत्प्रहारजर्जरितदेह आवासं नीते

[1] A C D संउमर [2] सेनापतिं कृत्वा [3] शत्रुंजयं

सकरुणं क्रन्दन् स्वजनैस्तत्कारणं पृष्टः सन्निहिते मृत्यौ श्रीशत्रुंजयशकुनिकाविहारयोर्जीर्णोद्धारवाञ्छया देवऋणं पृष्ठिलग्नं मन्त्री प्राह । अथ तैर्भवन्नन्दनौ वाग्भटाम्रभटनामानौ गृहीताभिग्रहौ तीर्थद्वयमुद्धारिष्यत इत्यर्थे वयं प्रतिभुवः इति तदङ्गीकारात्पुलकिताङ्गः धन्यंमन्यः अन्त्याराधनकृते स मन्त्री कमपि चारित्रिणमन्वेषयामास। तस्मिन्ननुपलभ्यमाने कमपि वण्ठं तद्वेषमानीय निवेदिते मन्त्री तदङ्घ्री ललाटे परिस्पृशन् तत्समक्षं दशधाराधनां विधाय श्रीमानुदयनः परलोकं प्राप। वण्ठस्तु चन्दनतरोरिव तद्वासनापरिमलेन क्षुद्रद्रुमवद्वासितोऽनशनप्रतिपत्तिपूर्वकं रैवतके जीवितान्तं चकार । अथाणहिल्लपुरं प्राप्तैस्तैः स्वजनैस्तं वृत्तान्तं ज्ञापितौ वाग्भटाम्रभटौ तानेवाभिग्रहान्गृहीत्वा जीर्णोद्धारमारभाते । वर्षद्वयेन श्रीशत्रुंजये प्रासादे निष्पन्ने उपेत्यागतमानुषेण वर्द्धापनिकायां वाच्यमानायां पुनरागतेन द्वितीयपुरुषेण प्रासादः स्फुटित इत्यूचे । ततस्तप्तत्रपुप्रायां गिरं निशम्य श्रीकुमारपालभूपालमापृच्छ्य महं० कपर्दिनि श्रीकरणमुद्रां

१ C कमर्दिने

नियोज्य तुरंगमाणां चतुर्भिः सहस्त्रैः सह श्रीशत्रुंजयोपत्यकां प्राप्य स्वनाम्ना वाग्भटपुरनगरं निवेशयामास। सभ्रमप्रासादे पवनः प्रविष्टो न निर्यातीति स्फुटनहेतुं शिल्पिभिर्निर्णीयोक्तं भ्रमहीने च प्रासादे निरवद्यतां विमृश्याऽन्वयाभावे धर्मसंतानमेवास्तु पूर्वोद्धारकारिणां श्रीभरतादीनां पङ्क्तौ नामास्तु, इति तेन मन्त्रिणा दीर्घदर्शिन्या बुद्ध्या विभाव्य भ्रमभित्त्योरन्तरालं शिलाभिर्निचितं विधाय वर्षत्रयेण निष्पन्नप्रासादे कलशदण्डप्रतिष्ठायां श्रीपत्तनसंघं निमन्त्रणापूर्वमिहानीय महता महेन सं० १२११ वर्षे ध्वजारोपं मन्त्री कारयामास। स शैलमयबिम्बस्य मम्माणीयखनीसक्तपरिकरमानीय निवेशितवान्। श्रीवाग्भटपुरे नृपतिपितुर्नाम्ना त्रिभुवनपालविहारे श्रीपार्श्वनाथं स्थापितवान्। तीर्थपूजाकृते च चतुर्विंशत्यारामान्नगरे परितो वप्रं देवलोकस्य ग्रासवासादि दत्त्वा चैतत्सर्वं कारयामास। अस्य तीर्थोद्धारस्य व्यये

---

१ A वाहड. २ C निरन्वयतां च (३ भ्रमहीनं विहारं कारयितुः संतानाभाव इति शिल्पशास्त्रोक्तत्वात्) ४ AB सं० ११९९ ॥ ५ B C श्रीवासादि.

षष्टिलक्षयुता ६० कोटी व्ययिता यत्र मन्दिरे।
स श्रीवाग्भटदेवोऽत्र वर्ण्यते विबुधैः कथम्॥
इति श्रीशत्रुंजयोद्धारप्रबन्धः[2]

॥ अथ विश्वैकसुभटेन श्रीआम्रकभटेन पितुः श्रेयसे भृगुपुरे श्रीशकुनिकाविहारप्रासादप्रारम्भे खन्यमाने गर्त्तापूरे नर्मदासान्निध्यादकस्मान्मिलितायां भूमौ बाधितेषु कर्मकरेषु कृपापरवशतयात्मानमेवामन्दं निन्दन्सकलत्रपुत्रस्तत्र झम्पामदात्। तत्साह-

---

१ A सप्तषष्टि.

[२ वर्षैरुद्रार्कसंख्यैः स्वजनकवचसा विक्रमार्कात्प्रयातैर्यातैनाः सिद्धशैले जिनपतिभुवनं वाग्भटः प्रोद्दधार॥
इति चा. कु. च. स. ७)

३ C छादित.

तत्संबन्धश्चायम्॥

तस्मिन् कृते काचिददृश्यरूपा
देवी जगादामृदुनादमेवम्।
नारीनृरूपं मिथुनं यदीह
निहंसि तत्कार्यमिदं भवेत्ते॥ ८

निपीय तां वाचमवाच्यरूपां
दध्यौ हृदीदं सचिवाधिराजः।
मिथ्यादृशो देवजनंगमान्
धिगीदृशान् दुष्टजनान् सुरान् हा॥ ९

जुहोमि जीवान् जिनधर्मविज्ञो

सातिशयात्तस्मिन्प्रत्यूहे निराकृते । शिलान्यासपूर्वं

ऽमीषां वचोभिः किमु निर्दयानाम् ।
विमानिताश्चैत्यममी विधातुं
दास्यन्ति मह्यामिह नो हि मह्यम् ॥ १०
हत्वात्मानं तदिह निखिलान्निर्जरांस्तोषयित्वा
कार्यं सिद्धिं द्रुततरमिदं प्रापयाम्येष धर्म्यम् ।
नूनं प्राणागमनमनसोऽमी गमिष्यन्ति काला—
त्तस्मादेभिः स्थिरमतिचलैः पुण्यमत्रार्जयामि ॥ ११
गर्त्ते तस्मिन् यममुखसमे सानुकम्प्यः स झम्पां
निःकम्प्यान्तः सरभसमदाद्भार्यया सार्द्धमुच्चैः ।
हाहाकारं खरतरगिरा चाक्रिरे तत्र लोकाः
प्रान्तं प्राप्ते सति नरवरे को न दुःखी भवेद्वा ॥ १२
समुद्यते साधु परार्थमेक—
मित्रे गते तत्र तदास्तदेशम् ।
सच्चक्रमाक्रन्दपरं रुरोद
तमोविलिप्तेव बभूव पृथ्वी ॥ १३
अथान्तरिक्षान्तरिता तमाह
सा व्यन्तरी सत्त्वगुणेन तुष्टा ।
वरं वृणु प्राणवधेऽवधेहि
मा साहसं विस्मयकारि विश्वे ॥ १४
भवत्परीक्षार्थमकारि सर्व—
मेतन्मया मायितयात्र कर्म ।
त्वमेव देवासुरमानवानां
सत्वेन मन्त्रिन् विसनोषि चित्रम् ॥ १५
एवं वदन्ती च मुदं ददाना

समस्तप्रासादे निष्पन्ने कलशदण्डप्रतिष्ठावसरे नगरसंघान्निमन्त्रणपूर्वं तत्रानीय यथोचितमशनवस्त्राभरणादिसन्मानैः सन्मान्य सामन्तेषु यथागतं प्रहितेषु, आसन्ने लग्ने संजायमाने भट्टारकश्रीहेमचन्द्रसूरिपुरस्सरं सनृपतिं श्रीमदणहिल्लपुरसंघं तत्रानीयातुच्छवात्सल्यादिभिर्भूषणादिदानैः संतर्प्य ध्वजाधिरोपाय संचरन्नर्थिभिः स्वयं स्वं मन्दिरं मुषितं कारयित्वा श्रीसुव्रतप्रासादे ध्वजं महाध्वजोपेतमध्यारोप्य हर्षोत्कर्षात्तत्रानालस्यं लास्यं विधाय तदन्ते भूपतिनाऽभ्यर्थित आरात्रिकं गृह्णन् तुरङ्गं द्वारभट्टाय दत्त्वा राज्ञा स्वयं कृततिलकावसरे द्वासप्तत्या सामन्तैश्चामरपुष्पवर्षादिभिः कृतसाहाय्यस्तदाभ्यागताय वन्दिने कृतकङ्कणवितरणो बाहुभ्यां धृत्वा बलात्कारेण नृपेणावतार्यमाणारात्रिकमङ्गलप्रदीपः श्रीसुव्रतस्य च गुरोश्चरणौ प्रणम्य साधर्मिकवन्दनापूर्वं नृपतिं स स्वारात्रिकहेतुं

देवी तदा तं विदधेऽक्षताङ्गम् ।
स्यात्साहसं यस्य नरस्य शस्यं
तस्यात्र सेवां रचयन्ति देवाः ॥ १६

इत्यादि चारित्रसुन्दरगणिकृतकुमारपालचरित्रसप्तमसर्गाद्बोध्यम् ॥

(१ मुष्टं २ गृह्णानः)

पप्रच्छ । यथा द्यूतकारो द्यूतरसातिरेकाच्छिरःप्रभृतीन् पदार्थान् पणीकुरुते तथा भवानप्यतः परमर्थितस्त्यागरसातिरेकाच्छिरोपि तेभ्यो ददासीति नृपेणादिष्टे भवल्लोकोत्तरचरित्रेणापहृतहृदया विस्मृताजन्ममनुष्यस्तुतिनियमाः श्रीहैमाचार्याः ।

किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ।
कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ १ ॥

इत्थमाम्रभटमनुमोद्य गुरुक्ष्मापती यथागतं जग्मतुः ॥ अथ तत्रागतानां प्रभूणां श्रीमदाम्रभटस्याकस्मिकदेवीदोषात्पर्यन्तदशामागतस्यापृच्छनविज्ञप्तिकायामुपागतायां सत्यां तत्कालमेव तस्य महात्मनः प्रासादशिखरे नृत्यतो मिथ्यादृशां देवीनां दोषः संजात इत्यवधार्य प्रदोषकाले यशश्चन्द्रतपोधनेन समं खेचरगत्योपलभ्य निमेषमात्रादलंकृतभृगुपुरपरिसरभुवः प्रभवः सैन्धवीमनुनेतुं कृतकायोत्सर्गास्तया जिव्हाकर्षणादवगणनास्पदं दीयमानौ उदूखले शालितन्दुलान्प्रक्षिप्य यशश्चन्द्रगणिना प्रदीयमानेषु मुशलप्रहारेषु प्राक्प्रासादकम्पो द्वितीये

---

१ C अर्थिमत्यर्थितत्याग. २ B भूरदेवं विधातुं स्वां जिव्हां बहिरकरोत्. ३ C उदूखले

प्रहारे देवीमूर्तिरेव स्वस्थानादुपेत्य वज्रपाणिप्रहारेभ्यो रक्ष रक्षेत्युच्चरन्ती प्रभोश्चरणयोर्निपपात। इत्थमनवद्यविद्याबलात्तन्मूलानां मिथ्यादृग्व्यन्तराणां दोषं निगृह्य श्रीसुव्रतप्रासादमाजग्मुः।

संसारार्णवसेतवः शिवपथप्रस्थानदीपाङ्कुरा
विश्वालम्बनयष्टयः परमतव्यामोहकेतूद्गमाः।
किं वास्माकमनोमतङ्गजदृढालानैकलीलाजुष-
स्त्रायन्तां नखरश्मयश्चरणयोः श्रीसुव्रतस्वामिनः १

इति स्तुतिभिः श्रीमुनिसुव्रतमुपास्य श्रीमदाम्रभटमुल्लाघस्नानेन[1] पटूकृत्य[2] यथागतमागुः। श्रीमदुदयनचैत्ये[3] शकुनिकाविहारे घटीगृहे राज्ञः कौङ्कणनृपतेः कलशत्रयं स्थानत्रये न्यास्थत्[4] ॥

॥ इतिश्रीराजपितामहाम्रभटप्रबन्धः[5] ॥

(१ रोगमुक्तस्नानेन) २ C उल्लाघ्य निरोगं कृत्वा ३ एवमार्हतशिरोमणेः प्रभोर्महिमा श्रीमद् ४ कलशत्रितयं ५ A एवं शकुनिकाविहारोद्धारे कोटिद्वयं व्ययितम्

• (क)—सिरिपुन्ने नयरे चन्दगुत्तो राया तस्स चन्दलेहाभारिआ तीसे सत्तण्हं पुत्ताणं उवरिं सुदंसणा नाम धूआ जाआ। सउणिभवे तुमं बाणेण पहया... गुरूणं वयणं सुच्चा... चेइयस्स उद्धारं कारेइ ॥ सिरिसुव्वयसामिसिद्धिगमणाणन्तरं इक्कारसेहिं लक्खेहिं चुलसीइ सहस्सेहिं चउसयसत्तरेहिं वासाणं अइएहिं विक्कमाइच्चसंवच्छरो पयट्टो

**॥ अथान्यस्मिन्नऽवसरे कुमारपालनामा नृपः पाण्डित्यलिप्सया कपर्दिमन्त्रिणोऽनुमतेन भोजनानन्तरं क्षणं केनापि विदुषा वाच्यमाने कामन्दकीयनीतिशास्त्रे ॥**

---

जीवन्तसुव्वयसामिअदिक्खाए पुण एगारसलक्खेहिं अट्ठावीसूणपञ्चणवइसहस्सेहिं वासाणं विक्कमो भावी एसा सउलिआविहारस्स उप्पत्ती । लोइअतित्थाणि अणेगाणि भरुअत्थे वट्टन्ति । कमेण उदयपुत्तेण वाहडेण सित्तुञ्जपासाय उद्धारकारिए । तदणुएण अम्बडेण पिउणो पुण्णत्थं सउलिआविहारस्स उद्धारो कारिउ । मिच्छदिट्ठी सिन्धवदेवीए अम्बडस्स पासायसिहरे नच्चन्तस्स उवसग्गो कउ सोउ निवारिउ विज्जाबलेण सिरिहेमचन्दसूरिहिं अस्सावबोहतित्थस्स एस कप्पो ॥ इत्यश्वावबोधकल्पे. मा. प. २७ [ श्रीपुण्ये नगरे चन्द्रगुप्तो राजा तस्यचन्द्रलेखा भार्या तस्याः सप्तानां पुत्राणां उपरि सुदंसणा नाम सुता जाता । शकुनीभवे त्वं बाणेन निहता । नवकारप्रभावेण राजसुता जातेत्यादि गुरूणां वचनं श्रुत्वा । चैत्यस्योद्धारं कारितं । तन्नाम्ना शकुनिकाविहारः ॥ श्रीसुव्रतस्वामिसिद्धिगमनानन्तरं एकादशलक्षैश्चतुरशीतिसहस्त्रैश्चतुःशतैः सप्तदशोत्तरैः वर्षाणां व्यतिक्रान्तैः विक्रमसंवत्सरः प्रवर्त्तितः । जीवतः सुव्रतस्वामिनो दिक्षाया आरभ्य एकादशलक्षैः अष्टाविंशत्यूनपञ्चनवतिसहस्रैः वर्षाणां विक्रमो, भावी एषा शकुनिकाविहारस्योत्पत्तिः । लौकिकतीर्थाणि अनेकानि भृगुकच्छे वर्त्तन्ते ॥ क्रमेण उदयपुत्रेण वाग्भटेन शत्रुंजयपार्श्वनाथोद्धारः कारितः । मिथ्यादृष्टिसैन्धवीदेव्या आम्रभटस्य प्रासादशिखरे नृत्यतः उपसर्गः कृतः स निवारितः । विद्याबलेन श्रीहेमचन्द्रसूरिभिः । अश्वावबोधतीर्थस्यैषः कल्पः ॥)

पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेपि हि पर्जन्ये जीव्यते न तु भूपतौ[१] ॥ १

वाक्यमिदमाकर्ण्य नृपतेर्मेघ ऊपम्या इति कुमारपालेनाभिहिते सर्वेष्वपि सामाजिकेषु न्युञ्छनानि कुर्वाणेषु तदा कपर्दिमन्त्रिणमवाङ्मुखं वीक्ष्य, एकान्ते नृपपृष्ट एवमवादीत्। ऊपम्याशब्दे स्वामिना स्वयमुच्चरिते सर्वव्याकरणेष्वेतत्प्रयोगापेतेषु[२] छन्दोनुवर्त्तिभिर्न्युञ्छनानि क्रियमाणे मम द्वेधाऽवाङ्मुखत्वमुचितं। तथा वरमराजकं विश्वं न तु मूर्खो राजेति प्रतीपभूपालमण्डलेष्वपकीर्त्तिः प्रसरति। अतोऽस्मिन्नर्थे उपमेयं ऊपम्यं उपमेत्याद्याः शब्दाः शुद्धाः। तद्वचनानन्तरं राजा शब्दव्युत्पत्तिहेतवे कस्याप्युपाध्यायस्य समीपे मातृकापाठात्प्रभृति शास्त्राण्यारभ्यैकेन वर्षेण वृत्तिकाव्य[३]त्रयमधीतं विचारचतुर्मुखबिरुदमर्जितम् ॥

॥ इति विचारचतुर्मुखश्रीकुमारपालाध्ययनप्रबन्धः॥

कस्मिन्नप्यऽवसरे विश्वेश्वरनामा कविर्वाराणस्याः श्रीपत्तनमुपागतः श्रीहेमसूरीणां संसदि प्राप्तः ।

(१ सर्ग १ श्लो. १३) २ CD अपप्रयोगे एतस्मिन् ३ C वृत्तिकाव्यानां. ४ कथमितिचेज्जिनमण्डनसूरिकृतकुमारपालचरित्रं द्रष्टव्यम्

तत्र कुमारपालनृपतौ विद्यमाने सः ।
पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ।
इति भणित्वा विलम्बमानो नृपेण सक्रोधं निरैक्ष्यत ।
षट्दर्शनपशुग्रामं चारयञ्जैनगोचरे[1] ॥ १
इत्युत्तरार्द्धपरितोषितसमाजलोकः । श्रीरामचन्द्रादीनां समस्यां समर्पयामास ।
व्यां[2]षिद्धा नयने मुखं च रुदती स्वे गर्हिते कन्यका
नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ ।
सर्वत्रापि च लक्ष्यते मुखशशिज्योत्स्नावितानैरियमित्थं मध्यगता सखीभिरभितो दृग्मीलनाकेलिषु॥ १
व्याषिद्धा । इति श्रीकपर्दिना महामात्येन पूरितायां समस्यायां पश्चात्कविः पञ्चाशत्सहस्रमूल्यं निजं ग्रैवेयकं श्रीकपर्दिनः कण्ठे श्रीभारत्याः पदमित्युच्चरन्निवेशयामास। अथ तद्वैदग्ध्यचमत्कृतेन नृपतिना स्वसंनिधौ स्थाप्यमानः ।
कथाशेषः कर्णोऽजनि जनकृशा काशिनगरी
सहर्षं हेषन्ते हरिहारिति हम्मीरहरयः ।
सरस्वत्याश्लेषप्रवणलवणोदप्रणयिनि

१ C गोपुरे २ C D इदं चतुर्थं चरणं दृश्यते

प्रभासस्य क्षेत्रे मम हृदयमुत्कण्ठितमदः ॥ १

इत्युक्त्वापृच्छ्यमानो नृपसत्कृतः स यथास्थानमगात् । कदाचिदेव श्रीकुमारपालविहारे नृपाहूताः प्रभवः श्रीकपर्दिना दत्तहस्तावलम्बा यावत्सोपानमारोहन्ति तावन्नर्त्तक्याः कञ्चुके गुणमाकृष्यमाणं विलोक्य श्रीकपर्द्दी ।

*सोहग्गीउ सहिकञ्चुयउ जुत्त उत्ताणु करेइ ।

एवमुक्त्वा यावद्विलम्बते ।

*पुट्ठिहिं पच्छइ तरुणीयणु जसु गुणगहणु करेइ॥१

इति श्रीप्रभुपादैरुत्तरार्द्धमपूरि ॥ कदाचित्प्रत्यूषे श्रीकपर्दिमन्त्री प्रणामानन्तरं हस्ते किमेतदिति पृष्टः स प्राकृतभाषया हरड इति विज्ञपयामास । प्रभुभिरुक्तं किमद्यापि आहतप्रतिभतया, तद्वचनच्छलमाकलय्य कपर्दिनोक्त इदानीं न कुतोऽन्त्याप्याद्योभूत् । मात्राधिकश्च । हर्षाश्रुपारिपूर्णदृशः प्रभवः श्रीरामचन्द्रप्रभृतिपण्डितानां पुरस्तात्तच्चातुरीं प्रशशंसुः । तैरज्ञाततत्त्वैः किमिति पृष्टो हरड इति

* सौभाग्यतः सखिकञ्चुको युक्तोत्तानं करोति ।

* पुष्टेः पश्चात् ( नितम्बैः ) तरुणीजनो यस्मात् गुणग्रहणं ( रज्जुग्रहणं ) करोति ॥ १ ।

शब्दच्छलेन हकारो रडइ । किमद्यापीत्यभिहित-
मात्रेण वचस्तत्त्वविदाऽनेनेदानीमुक्तं। यतः पुरा
मातृकाशास्त्रे हकारः प्रान्ते पठ्यते अत एव ह रड-
इ साम्प्रतं त्वऽस्मिन्नामनि प्रथमतया मात्राधिकश्च

॥ इति हरडइ प्रबन्धः ॥

॥ कदाचित् केनापि पण्डितेनोर्वशी-
शब्दे शकारस्तालव्यो दन्त्यो वेतिपृष्टे याव-
त्प्रभवः किंचित्समादिशन्ति तावत्, उरून्[1] अश्नु-
ते उर्वशीति पत्रकं लखित्वा श्रीकपर्दिना प्र-
भोरुत्सङ्गे मुक्तं। तत्प्रामाण्यात्तालव्यशकारनिर्णय-
स्तदग्रे प्रभुभिरभिहितः । इत्युर्वशीशब्दप्रबन्धः ॥
अथान्यदा सपादलक्षीयराजस्य कश्चित्सान्धिविग्राहि-
कः श्रीकुमारपालनृपतेः सभायामुपेतो राज्ञा भव-
त्स्वामिनः कुशलमिति पृष्टः। स मिथ्याभिमानी
पण्डितमानी च विश्वं लातीति विश्वलस्तस्य च को
विजयसन्देहः । राज्ञा प्रेरितेन श्रीमता कपर्दिना
मन्त्रिणा । श्वलश्वल्ल आशुगतौ । इति धातोर्विरि-
व श्वलति नश्यतीति विश्वलः । इत्येवं प्रधाने-
न तन्नामदूषणं विज्ञप्त, इति स राजा विग्रहरा-

---

१ A B उरूशेते

ज इतिनाम[1] बभार । अपरस्मिन्वर्षे स एव प्रधानः पुरुषः श्रीकुमारपालनृपतेः पुरो विग्रहराजनाम विज्ञपयन् मन्त्रिणा श्रीकपर्दिना विग्रो विगतनासिक एवं हराजौ रुद्रनारायणौ कृतौ, इति व्याख्यातं। तदित्यवगम्य तदनन्तरं स नृपः कपर्दिना नामखण्डनभीरुः कविबान्धव इति नाम बभार ॥ अथान्यदा श्रीकुमारपालनृपपुरतः श्रीयोगशास्त्रव्याख्याने संजायमाने पञ्चदशकर्मादानेषु वाच्यमानेषु

दन्तकेशनखास्थित्वक्रोम्णां ग्रहणमाकरे ॥

इति प्रभुकृतमूलपाठे पं० उदयचन्द्रः रोम्णां ग्रहणामिति भूयो भूयो वाचयन् प्रभुभिर्लिपिभेदं पृष्ठे स प्राणितूर्याङ्गानामिति व्याकरणसूत्रेण प्राण्यङ्गानां सिद्धमेकत्वमिति लक्षणविशेषं स विज्ञपयन् प्रभुभिः श्लाघितो राज्ञान्यैश्च ॥

इति पं० उदयचन्द्रप्रबन्धः ॥

अथ कदाचित्स राजर्षिर्घृतपूरभोजनं कुर्वन् किंचिद्विचिन्त्य कृतसर्वाहारपरिहार इति प्रभुं प्रपच्छ। यदस्माकं घृतपूराहारो युज्यते नवेति प्रभुभिरभिदधे।

---

१ A B विग्रहराजपण्डितमुखात्तन्नाम

वणिग्ब्राह्मणयोर्युज्यते कृताभक्ष्यनियमस्य क्षत्रियस्य तु न तेन पिशिताहारस्यानुस्मरणं भवतीत्थमेवेति पृथ्वीपतिरभिधाय पूर्वभक्षितस्याभक्ष्यस्य प्रायश्चित्तं याचितवान्। द्वात्रिंशद्दशनसंख्ययां[1] द्वात्रिंशद्विहारान्कारयेति। राज्ञा तथाकृते, प्रभुदत्ते लग्ने वटपद्रकान्निजप्रासादे मूलनायप्रतिष्टां कारयितुं श्रीपत्तनमुपेयुषि कान्हनाम्नि व्यवहारिणि तन्नगरमुख्ये प्रासादे तद्बिम्बं मुक्का यावदुपहारान्गृहीत्वा स पुनरुपैति तावन्नृपतेरङ्गरक्षकैर्निरुद्धे द्वारि अन्तः प्रवेशमलभमानः कियति काले व्यतिक्रान्ते उत्थितैर्द्वारपालकैर्व्यतीते प्रतिष्ठाकाले[2] स तत्र प्रविश्य प्रभोः पादमूले लगित्वा सोपालम्भं रुरोद। प्रभुभिरन्यथा दुरपनेयं तस्य दुःखमिति विमृश्य रङ्गमण्डपाद्बहिर्भूत्वा नक्षत्रचारेण स्वं लग्नमुदितं व्योम्नि विलोक्य घटिका[3]संबन्धेन नैमित्तिकेन यस्मिँल्लग्ने बिम्बानि प्रतिष्ठापितानि तेषां वर्षत्रयमायुः सम्प्रतितने लग्ने तु प्रतिष्ठितमिदं चिरायुरिति प्रभुभिरादिष्टं। स तदैव प्रतिष्ठामकारयत्त-

---

१ A B अब्दान्तसंख्यया एकस्मिन्भिडबन्धे २ A प्रतिष्ठोत्सवे
३ D कूटघटिका.

त्प्रभूक्तं तथैव जज्ञे ॥

इत्यभक्ष्याभक्षणप्रायश्चित्तप्रबन्धः ॥

मयापहृते धने पुरा कश्चिन्मूषको मृतस्तत्प्रायश्चित्ते राज्ञा याचिते तच्छ्रेयसे प्रभुभिस्तन्नामाङ्कितो विहारः कारितः । तथाच कयापि व्यवहारिवध्वाऽज्ञातज्ञातिनामग्रामसंबन्धया पथि दिनत्रयं बुभुक्षितो नृपतिः शालिकरम्बेन सुहितीकृतस्तत्कृतज्ञतया तत्पुण्याभिवृद्धये करम्बविहारं श्रीपत्तनेऽकारयत् ॥ तथा यूकाविहारश्चैवं । सपादलक्षदेशे कश्चिदविवेकी धनी केशसंमार्जनावसरे प्रियार्पितां यूकां करतले संगृह्य पीडाकारिणीं तां तर्जयंश्चिरेण मृदित्वा व्यापदयामास । संनिहितेनामारिकारिपञ्चकुलेन स श्रीमदणहिल्लपुरे समानीय नृपाय निवेदितः । तदनु प्रभूणामादेशात्तद्दण्डपदे तस्य सर्वस्वेन तत्रैव यूकाविहारः कारितः ॥

इति यूकाविहारप्रबन्धः ॥

अथ स्तम्भतीर्थे सामान्ये सालिगवसहिकाप्रासादे यत्र प्रभूणां दीक्षाक्षणो बभूव रत्नबिम्बालंकृतस्तत्र निरुपमो जीर्णोद्धारः कारितः ॥

इति प्रभुदीक्षावसहिकाया उद्धारप्रबन्धः ॥

अथ श्रीसोमेश्वरपत्तने कुमारविहारप्रासादे बृहस्पति-नामा गण्डः कामप्यरतिं कुर्वाणः प्रभोरप्रसादाद्भ्रष्टप्रतिष्ठः श्रीमदणहिल्लपुरं प्राप्य षोढावश्यके प्रौढिं प्राप्य प्रभून् सिषेवे । कदाचिच्चातुर्मासिकपारणके प्रभूणां पादयोर्द्वादशावर्त्तवन्दनादनु ।

चतुर्मासी यावत्तव पदयुगं नाथ निकषा
कषायप्रध्वंसाद्विकृतिपरिहारव्रतमिदम् ।
इदानीमुद्भिद्यन्निजचरणनिर्लोठितकले-
र्जलक्लिन्नैरन्नैर्मुनितिलक वृत्तिर्भवतु मे ॥ १

इति विज्ञपयंस्तत्कालागतेन राज्ञा प्रसन्नान्प्रभून्विमृश्य स पुनरेव तत्पददानपात्रीकृतः ॥

इति बृहस्पतिगण्डस्य पुनः पददानप्रबन्धः ॥

अन्यदा सर्वावसरस्थितेन राज्ञालिङ्गनामा वृद्धः प्रधानपुरुष इत्यपृच्छ्यत । यदहं श्रीसिद्धनृपतेर्हीनः समानोऽधिको वा । तेन चाऽच्छलप्रार्थनापूर्वं श्रीसिद्धनृपतेः षण्णवतिर्गुणा द्वौ दोषौ । स्वामिनस्तु द्वौ गुणौ तत्संख्या एव दोषा इति

१ C कामपि रतिं २ मासीं यावत् A चातुर्मासिमासित्.
३ C D कवे (उद्यन्निजचारित्रेण निर्नाशितः कलिर्येन सः)
४ अष्टनवति;

तद्वाक्यादनु दोषमये आत्मनि विरागं दधानो यावच्छुरिकां चक्षुषि क्षिपति तावदाशयविदा तेनेति व्यज्ञपि। श्रीसिद्धनृपतेः षण्णवतिगुणाः संग्रामाऽसुभटतास्त्रीलम्पटतादोषाभ्यां तिरोहिताः। कार्पण्यादयो भवद्दोषाः समरशूरतापरनारीसहोदरतागुणाभ्यामपन्हुता इति तद्वचसा स पृथ्वीनाथः स्वस्थावस्थस्तस्थौ ॥

इत्यालिङ्गप्रबन्धः ॥

अथ पुरा श्रीसिद्धराजराज्ये पाण्डित्ये स्पर्धमानो वामराशिनामा विप्रः प्रभूणां प्रतिष्ठानिष्ठामसहिष्णुः।

यूकालक्षशतावलीवलवलल्लोलोल्लसत्कम्बलो[1][2]
दन्तानां मलमण्डलीपरिचयाद्दुर्गन्धरुद्धाननः।
नाशावंशविरोधनाङ्गिणिगिणत्पादप्रतिष्ठास्थितिः[3]
सोऽयं हेमडसेवडः पिलपिलत्खल्लिः समागच्छति।१

इति तदीयममन्दं निन्दास्पदं वचनमाकर्ण्यान्तर्भूतामर्षवत्तर्जनापरं वचः प्रभुभिरभिहितं पण्डित विशेषणं पूर्वमिति भवता किं नाधीतमतोऽतः परं सेवडहेमड इत्यभिधेयमिति, सेवकैः कुन्तपश्चाद्भागेना-

---

१ C लिक्षशत. (२ चलचलत्) ३ A गिणिगिणी

हत्युक्तः। श्रीकुमारपालनृपते राज्येऽशास्त्रो वध इति तद्वृत्तिच्छेदः कारितः। स ततः परं कणभिक्षया प्राणाधारं कुर्वाणः प्रभूणां पौषधशालायाः पुरतः स्थितः। आनादिभूपतितपस्विभिरधीयमानयोगशास्त्रमाकर्ण्याऽशठतयेदमपाठीत्।

आतङ्ककारणमकारणदारुणानां
वक्रेषु[1] गालिगरलं निरगालि येषाम्।
तेषां जटाधरफटाधरमण्डलानां
श्रीयोगशास्त्रवचनामृतमुज्जिहीते ॥ १

इति तद्वचसाऽमृतधारासारेण निर्वाणपूर्वोपतापास्तस्मै द्विगुणां वृत्तिं प्रसादीकृतवन्तः॥

इति वामराशिप्रबन्धः॥

अथ कदाचिच्चारणौ द्वौ सुराष्ट्रमण्डलनिलयौ दूहाविद्यया स्पर्धमानौ श्रीहेमाचार्येण यो व्याख्यायते सोऽपरस्य हीनोपक्षयं ददातीति प्रतिज्ञाय श्रीमदणहिल्लपुरं प्रापतुः तदैकेन प्रभुसमागतेन।

*लच्छिवाणिमुहकाणि एयइ[2] भागी मुह भरउं[3]।
हेमसूरिअच्छीणि[4] जे ईसरते ते पण्डिया ॥१

---

१ C वक्रेण २ पयइ ३ B मरउ ४ सूरिआ छाणि.

* लक्ष्मीवाणीप्रमुखाणि एतैः भाग्यैः मुखं भृतं सर्वाणि भाग्यानि हे-

इत्युक्त्वाभ्यर्णे स्थिते तस्मिन् श्रीकुमारपालविहारे आरात्रिकावसरानन्तरं प्रणामपरो नृपः प्रभुणा दत्तपृष्ठिहस्तः क्षणं यावत्तिष्ठति । अत्रान्तरे प्रविश्य द्वितीयश्चारणः ॥

"हेम तुहाला कर भरउं जांह अच्चंपभूंरिद्धि ।
जेवं पह हिठा मुहा तांह ऊपहरी सिद्धि[2] ॥ १

इत्यनुच्छिष्टेन तद्वचसान्तश्चमत्कृतो नृपतिरेतदेव भूयोभूयः पाठयामास। ततस्त्रिःकृत्वः पठिते[3] किं पठिते लक्षं दास्यसीति विज्ञप्तस्तस्मै त्रिलक्षं

---

मसूरेर्मुखे तिष्ठन्तीत्यर्थः यतः ये हेमसूरेरऽक्षिणी यत्र ईषद्गते ते पण्डिताः हेमसूरिनेत्रे रत्या यान् इषत् प्रेक्षेते ते पुरुषाः शीघ्रं पण्डिता भवन्तीत्यर्थः ॥।

यद्वा । पाठान्तरे लक्ष्मीश्चिन्तयति यतयो वाणिमुखकाः वाणीं मुखे धारयान्ति 'मुह मरउं' सपत्नीहेतोः मया मर्त्तव्यं एवं ज्ञात्वा हेमसूरेः प्रच्छन्नं भग्ना नष्टा अत एव ये ईश्वरास्ते पण्डिताः न तु पण्डिता लक्ष्मीवन्त इति ॥१ ।

* हे हेमचन्द्र तव करः भृतः संगतः यत्र आश्चर्यभूतर्द्धिः युक्तं तत् एवं प्रभुपदाधोमुखाः । कुमारपालवत् प्रभुपदं अधोमुखेन वद्गन्ते इत्यर्थः तत्र सिद्धयः उपह्रियन्ते ॥२ ॥ ।

१ C D जिह अच्चुपुयरिद्धि । २ जे चंपहहिठा मुहा तीह उवहरी सिद्धी ३ त्रिःपठिते.

दापयामास ।

इति सौराष्ट्रचारणयोः प्रबन्धः ॥

कदाचिच्छ्रीकुमारपालनृपतिः श्रीसंघाधिपतीभूय तीर्थयात्रां चिकीर्षुर्महता महेन श्रीदेवालयप्रस्थाने संजाते सति देशान्तरायातयुगलिकया त्वां प्रति डाहलदेशीयकर्णनृपतिरुपैतीति विज्ञप्तः स्वेदबिन्दुतिलकितललाटं दधानो मन्त्रिवाग्भटेन साकं साध्वसध्वस्तसंघाधिपत्यमनोरथः प्रभुपादान्ते स्वं निनिन्द । अथ तस्मिन्नृपतेः समुपस्थिते महाभये किंचिदवधार्य द्वादशे यामे भवतो निवृत्तिर्भविष्यतीत्यादिश्य विसृष्टो नृपः किंकर्त्तव्यतामूढो यावदास्ते तावन्निर्णीतवेलायां समागतयुगलिकया श्रीकर्णो दिवं गत इति विज्ञप्तो नृपेण ताम्बूलमुत्सृज्य कथमिति पृष्टौ तावूचतुः । कुम्भिकुम्भस्थः श्रीकर्णः प्रयाणं निशि कुर्वन्निद्रामुद्रितलोचनः कण्ठपीठप्रणयिना सुवर्णशृङ्खलेन प्रविष्टन्यग्रोधपादपेनोल्लम्बितः पञ्चतामाश्रितवान् । तस्य संस्कारानन्तरमावां प्रचलिताविति ताभ्यां विज्ञप्ते तत्कालं पौषधवेश्मनि समागतो नृपः प्रशंसापरः कथं कथमित्यपवार्य द्वासप्ततिमहासामन्तैः समं समस्तसंघेन च प्रभुणा

द्विधोपादिश्यमानवर्त्मा धुन्धुक्कनगरे प्राप्तः प्रभूणां जन्मगृहभूमौ स्वयं कारितसप्तदशहस्तप्रमाणझोलिकाविहारे प्रभावानां विधित्सुर्जातिपिशुनानां द्विजातिनामुपसर्गमुदितं वीक्ष्य तान्विषयताडितान्कुर्वन् श्रीशत्रुंजयतीर्थमाराधयन् । दुक्खक्खउं कम्मक्खउं इति प्रणिधानदण्डकमुच्चरन् देवस्य पार्श्वे विविधप्रार्थनावसरे ।

*इक्कह फुल्लह माटि देअइ सामी सिद्धिसुह ।
तिणिसिउं केही साटी भोलिम जिणवरह ॥ १ ॥

इति चारणमुच्चरन्तं निशम्य नवकृत्वः पठितेन नवसहस्रांस्तस्मै नृपो ददौ।तदनन्तरमुज्जयन्तसंनिधौ गते तस्मिन्नऽकस्मादेव पर्वतकम्पे संजायमाने श्रीहेमचन्द्राचार्या नृपं प्राहुः।इयं छत्रशिला युगपदुपेतयोर्द्वयोः पुण्यवतोरुपरि निपतिष्यतीति वृद्धपरंपरया, तदावां पुण्यवन्तौ यदियं गीरसत्या सत्या भवति तदालोकापवादः,नृपतिरेव देवं नमस्कारोतु न वयमित्युक्ते नृपतिनोपरुध्य प्रभव एव संघेनसह प्रहिताः

* एकपुष्पार्थं एकेन प्रीत्याऽर्पितपुष्पेणेत्यर्थः स्वामी सिद्धिसुखं ददाति तन्निश्रया तेनैव प्रकारेण हे जिनवर किमर्थं भवान् मुग्धः इति भावनाश्रेणिसमुच्छसितस्य वाक्यम् ॥ १ ॥

१ C D देवइ सिद्धि सुठु केहि साटि काटि रेभोतिम २ सउं

स्वयं छत्रशिला[1]मार्गं परिहृत्य परस्मिन्जीर्णप्राकारपक्षे नव्यपद्याकरणाय श्रीवाग्भटदेव आदिष्टः पद्यायाः पक्षद्वये व्ययीकृतास्त्रिषष्टिलक्षाः ।

इति तीर्थयात्राप्रबन्धः ॥

कदाचित्पृथिव्यामानृण्याय नृपतिना स्वर्णसिद्धये श्रीहेमचन्द्राणामुपदेशात्तद्गुरवः श्रीसंघनृपतिविज्ञप्तिकाभ्यामाकारितास्तीव्रव्रतपरायणा महत्संघकार्यं विमृश्य विधिविहारक्रमेण पथि केनाप्यलक्ष्यमाणा निजामेव पौषधशालामागताः राजा तु प्रत्युद्गमादिसामग्रीं कुर्वन् प्रभुज्ञापितस्तत्राययौ । अथ गुरौ नृपतिप्रमुखैः समस्तश्रावकयुतैः प्रभुभिर्द्वादशावर्त्तवन्दनावन्दिते वन्दनान्ते तौ श्रुततदुपदेशानन्तरं गुरुभिःपृष्टे संघकार्ये सभां विसृज्य जवनिकान्तरितौ श्रीहेमचन्द्रनृपती तत्पादयोर्निपत्य सुवर्णसिद्धेर्याचनां चक्राते। मम बाल्ये वर्त्तमानस्य ताम्रखण्डः काष्टभारवाहिकातो याचितःवल्लीरसेनाभ्यक्तोयुष्मदादेशाद्वान्हिसंयोगात्सुवर्णीबभूव । तस्या वल्लेर्नामसंकेतादिरादिश्यतामिति ॥ श्रीहेमाचार्ये उक्तवति कोपाटोपात् श्रीहेमचन्द्रं दूरतः प्र-

---

१ A छत्रशिला

क्षिप्य न योग्योसीति । अग्रे मुद्गरसप्रायदत्तविद्यया त्वमजीर्णभाक् कथमिमां विद्यां मोदकप्रायां तव मन्दाग्नेर्ददामीति तं निषिध्य नृपं प्रति एतद्भाग्यं भवतो नास्ति येन जगदानृण्यकारिणी हेमनिष्पत्तिविद्या तव सिद्ध्यति । अपि च मारिनिवारणजिनमण्डितपृथ्वीकरणादिभिः पुण्यैः सिद्धे लोकद्वये किमधिकमभिलषसीत्यादिश्य तथैव विहारक्रमं कृतवन्तः । एकदा पृष्टः राज्ञा पूर्वभव स्वरूपं। तत्सर्वं कथितं प्रभुभिरिति। अथ कस्मिन्नप्यवसरे सपादलक्षं प्रति सज्जीकृते सैन्ये श्रीवाग्भटस्यानुजन्मा बाहडनामा मन्त्री दानशौण्डतया दूषितोपि भृशमनुशिक्ष्य भूपतिना सेनापतिश्चक्रे । तेन प्रयाणद्वितयानन्तरमस्तोकमार्थिलोकं मिलितमालोक्य कोशाधिपाल्लक्षद्रव्ये याचिते नृपादेशात्तस्मिन्नददाने अथ तं कशाप्रहारेणाहत्य सेनापतिस्तं कटकान्निरवासयत्। स्वयं तु यदृच्छया दानैःप्राणितार्थिलोकश्चतुर्दशशतसंख्यासु करभीष्वारोपितैर्द्विगुणैः सुभटैः समं चरन्मितैः प्रयाणैर्बम्बेरानगरे प्राकारं वेष्टयामास। अथ तस्यां। निशि सप्तशतीकन्यानां विवाहः प्रारब्धोस्तीति नगरलोकान्मत्वा तद्विवा-

हार्थं तथैव निशि स्थित्वा प्राप्तः प्राकारपरावर्त्तं चकार। तत्राधिगतं स्वर्णकोटीसप्तकं तथैकादशसहस्त्राणि वडवानामिति संपत्तिगर्भितां विज्ञप्तिकां वेगवत्तरैश्वरैर्नृपं प्रति प्राहिणोत्। स्वयं तत्र देशे श्रीकुमारपालनृपतेराज्ञां दापयित्वाऽधिकारिणो नियोज्य व्याघुटितः। श्रीपत्तनं प्रविश्य राजसौधमधिगम्य नृपं प्रणनाम। नृपस्तदुचितालापावसरे तद्गुणरञ्जितोप्येवमवादीत्। तव स्थूललक्ष्यतैव महद्दूषणं। (वाहानीकयोः साधनादौ साधीयान् नेदीयान्प्रयोगनिष्पत्तिरक्षामन्त्रो नो चेच्चक्षुर्दोषेणोर्द्ध्व एव विदीर्यसे) यं व्ययं भवान्कुरुते[1] तादृशं कर्त्तुमप्यहं न प्रभूष्णुः। स इति श्रुतनृपादेशान्नृपं प्रति "तथ्यमेव तदादिष्टं देवेन" एवंविधं व्ययं कर्त्तुं प्रभुर्न प्रभवति। यतः स्वामी परंपरया न नृपतेः सुतः। अहं तु नृपपुत्राऽतो मयैव द्रव्यव्ययः साधीयान्क्रियते। तेनेति विज्ञप्ते नृपतिस्तोषं करोतु रोषं वा निकषः निकषाकाञ्चनश्रियमासादयतीत्यनर्घ्यतां लभमानो *नृपतिवि

---

(B C G पङ्क्तिद्वयं नास्ति) १ C कर्तुं क्षमते २ A रोषं वा निकषा.

* यतोहं स्वामिबलेन व्ययं करोमि। स्वामी तु कस्य बलेनातो मयैव द्रव्यव्ययः साधीयान् क्रियते इति वदन् प्रमुदितेन राज्ञा स-

सृष्टः स्वं पदं प्रपदे ॥

इति राजघरट्टवाहडप्रबन्धः ॥

अथ तस्य कनीयान्भ्राता सोलाकनामा मण्डलीकः सत्रागारबिरुदं बभार । अथ कदाचिदानाकनामा मातृष्वस्रीयस्तत्सेवागुणतुष्टेन राज्ञा दत्तसामन्तपदोपि तथैव सेवमानः।कदापि मध्यंदिनावसरे चन्द्रशालापल्यङ्कस्थितस्य नृपतेः पुरो निविष्टः सहसा कमपि प्रेष्यं तत्र प्राप्तं प्रेक्ष्य कोयमिति पृष्टे नृपतिना श्रीमदानाकः स्वं कर्मकरमुपलक्ष्य तत्संकेतान्निकेतनान्निर्गत्य सकौशलं पृष्टः पुत्रजन्मवर्द्धापनिकां प्रार्थयामास । उँमिति तया वार्त्तया तु दिनकरप्रभयेव विकासितवदनारविन्दं तं विसृज्य स्वं पदमुपेतः । राजा किमेतदिति पृष्टस्तेन स्वामिनः पुत्रोत्पत्तिरिति विज्ञप्ते, वसुधाधवः स्वगतं किंचिदवधार्य तं प्रति प्रकाशं प्राह । यज्जन्म निवेदयितुमयं कर्मकरो वेत्रिभिरस्खलित एवायमाप[3] तावता पुण्योपचयेनायं गूर्जरदेशे नृपो

---

त्कृतो राजसदस्यनर्घ्यतां लभमानो राजघरट्टाबिरुदं लब्ध्वा । इति जिनमण्डनोपाध्यायकृतकुमारपालप्रबन्धे प. ९४

१ A B इति बाहड. २ A तथा. ३ इमां भुवमाप.

भावी परमस्मिन्पुरे धवलगृहे च न। यतोऽतः स्थानादुत्थापितस्य तवाग्रे सुतोत्पत्तिर्निवेदिता। ततो हेतोर्नास्मिन्नगरेश्वरत्वमिति विचारचतुर्मुखेन श्रीकुमारपालदेवेन निर्णीतम् ॥

इति लवणप्रसादप्रबन्धः ॥

आज्ञावर्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादरा-
दब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा।
कीर्तिस्तम्भनिभांश्चतुर्दशशतीसंख्यान्विहारांस्तथा
कृत्वा निर्मितवान्कुमारनृपतिर्जैनो निजैनोव्ययम् १

अथ प्रभोः कदाचित्कच्छराजलक्षराजमातुर्महासत्याः शापाच्छ्रीमूलराजान्वयानां लूतारोगः संक्रामतीति स व्याधिः कुमारपाले बाधामधात्। संबन्धात्तु गृहिधर्मप्रतिपत्त्यवसरे प्रभोरुद्गणितराज्यभारे श्रीकुमारपाले तच्छिद्रेण तान्प्रविश्य लूताव्याधिर्बाधामधात्। तद्दुःखदुःखिते सराजलोके राज्ञि प्रणि-

* कर्णाटे १ गूर्जरे २ लाटे ३ सौराष्ट्रे ४ कच्छ ५ सैन्धवे ६।
उच्चायां ७ चैव भम्भेर्यां ८ मारवे ९ मालवे १० तथा ॥ १
कौङ्कणे च ११ महाराष्ट्रे १२ कीरे १३ जान्लधरे १४ पुनः।
सपादलक्षे १५ मेवाडे १६ दीपा १७ भीराख्ययोरपि १८॥२
काशिगाजण्यादिचतुर्दशदेशेषु ॥ इतिपूर्वोक्तस्य पत्रे ५७

१ C तस्मिन्नगरे नरेश्वरत्वं २ राजन्यानां

धानान्निजमायुः सबलं वीक्ष्याऽष्टाङ्गयोगाभ्यासेन प्रभवस्तं लीलयोन्मूलितवन्तः॥ कदापि कदलीपत्राधिरूढं कमपि योगिनमालोक्य विस्मिताय नृपतये आसनबन्धेन चतुरङ्गुलमूलभूमित्यागाद्ब्रह्मरन्ध्रेण निर्यत्तेजःपुञ्जं प्रभवो दर्शयामासुः॥ अथ चतुरशीतिवर्षप्रमाणायुःपर्यन्ते निजमवसानदिनमवधार्यान्त्याराधनक्रियायामनशनपूर्वप्रारब्धायां त-

---

* तद्यातनाबाधितमूर्तिरुच्चैः पप्रच्छ सूरिं गदशान्तिहेतुम् ।
आयुर्घनं श्रीकुमरस्य वीक्ष्य ते दक्षमुख्या अवदन्विमृश्य ॥
निवेश्यतेऽन्यो यदि कोपि राज्ये हित्वामयस्त्वां तमयं प्रयाति ॥
उवाच चातुर्यनिधिर्नरेशो निहन्म्यहं किं निजजीवितार्थं ।
वराकमन्यं परमार्थविज्ञः । गिरः सुधासारसमा निपीय ।
दयाकिरस्ता अवदद्यतीशः । निविश्य राज्ये स्वयमेव दुःखं ।
तत्ते हरिष्यामि नरेश्वराहं । अवोचदुच्चैश्चकितो नरेशः ।
को देववृक्षं पिचुमन्दहेतोश्चिन्तामणिं काचकृते निहन्ति ।
रोगं निहन्तुं मम शक्तिरस्ति स्वाङ्गान्तरं योगबलेन राजन् ।
ततः कुमारो महता महेन न्यवीविशत्सूरिवरं स्वराज्ये ।
हित्वा कुमारं परिमुक्तराज्यं लूतामयः सूरिशरीरमाप ।
रोगं हन्तुं निश्चलाङ्गः स योगी प्राणायामं पूरकाख्यं वितेने ।
ऊर्ध्वं नीते. सूर्यबिम्बे समन्ताच्चन्द्रस्तापाद्द्राग् सुधाभिर्ववर्ष ।
श्लिष्टं ताभिः सर्वरोगापहाभिर्वेगादङ्गं चङ्गमासीदमुष्य ।

इति चारित्रसुन्दरगणिकृतकुमारपालचारित्रस्य दशमसर्गस्य प्रथमवर्गे प. ३४

दर्तितरलिताय नृपतये षण्मासीशेषमायुरास्ते संत-त्यभावाद्विद्यमान एव निजामुत्तरक्रियां कुर्या इ-त्यनुशिक्ष्य दशमद्वारेण प्राणोत्क्रान्तिमकार्षुः । त-दनन्तरं प्रभोः संस्कारादनु तद्भस्म पवित्रमिति राज्ञा तिलकव्याजेन नमश्चक्रे । ततः समस्तसाम-न्तैस्तदनु नगरलोकैस्तत्रत्यमृत्स्नायां गृह्यमाणायां तत्र हेमखण्ड इत्यद्यापि प्रसिद्धिः ॥ अथ राजा बाष्पाविललोचनः प्रभुशोकाविप्लवमनाः सचिवै-र्विज्ञप्त इदमवादीत् । स्वपुण्यार्जितोत्तमतमलोका-न् प्रभून्न शोचामि किं तु निजमेव सप्ताङ्गराज्यं सर्वथा परिहार्यं राजपिण्डदोषदूषितं, यन्मदीयमुद-कमपि जगद्गुरोरङ्गे न लग्नं तदेव शोचामीति प्रभु-गुणानां स्मारं स्मारं सुचिरं विलप्य प्रभूदिते दिने तदुपदिष्टविधिना समाधिमरणेन नृपः स्वर्लोक-मलंचकार ॥ सं० ११९९ वर्षाद्वर्ष ३१ श्रीकुमार-पालदेवेन राज्यं कृतं ॥ सं० १२३० वर्षेऽजयदे-वोऽभिषिक्तः । अस्मिन्पूर्वप्रासादान् विध्वंसयति सीलनामा कौतुकी नृपपुरः प्रारब्धेऽवसरे कृतक-कामपटुतां मायया निर्माय तत्र स्वकल्पितं देवकु-लपञ्चकं पुत्रेभ्यः समर्प्य ममानन्तरं भक्त्यतिशये-

नाराधनीयमित्यनुशिक्ष्यान्त्यावस्थायां यावदास्ते तावत्तेन लघुपुत्रेण तच्चूर्णं चूर्णितमाकर्ण्य रे श्रीमदजयदेवेनापि पितुः परलोकान्तरं तद्धर्मस्थानानि विध्वंसितानि त्वं त्वद्यापि मयि विद्यमानेपि चूर्णयन्नधमतमोसीति तदालापेन सत्रपस्तस्माद्समञ्जसाद्विरराम। तदनु श्रीअजयदेवेन श्रीकपर्दिमन्त्री महामात्यपदं दातुमत्यर्थमभ्यर्थितः प्रातः शकुनान्यवलोक्य तदनुमत्या प्रभोरादेशमाचरिष्यामीत्यभिधाय शकुनगृहं गतस्ततः सप्तविधं दुर्गादेव्याः शकुनं याचितमवाप्य तच्छकुनं पुष्पाक्षतादिभिरभ्यर्च्य कृतकृत्यं मन्यमानः पुरगोपुरान्तः प्राप्तो नदन्तं वृषभमीशानदिग्भागे विलोक्यातिशयस्मेरमनाः स्वं निवासमासाद्य भोजनानन्तरं मरुवृद्धेन यामिकेन शकुनस्वरूपं पृष्टः श्रीकपर्दी तदग्रे तत्स्वरूपमादिश्य तां[1]स्तुष्टाव। ततो मरुवृद्धः

नद्युत्तारेऽध्ववैपम्ये तथा संनिहिते भये।
नारीकार्ये रणे व्याधौ विपरीता[2] प्रशस्यते ॥ १

इति प्रामाण्याद्भवानासन्नव्यसनतया मतिभ्रंशात्प्रतिकूलमप्यनुकूलं मनुते। यस्त्वया वृषभः शुभः

---

१ तान् शकुनान् २ C विपरीतः

परिकल्पितः सोपि भवद्व्यापत्त्या शिवस्याभ्युदयं पश्यंस्तद्ददाहात उक्षा[1] जगर्जेति तदुक्तिमवमन्यमाने तस्मिन्नापृच्छ्य तदर्थानि[2]ऽवगाढुं[3] गते, स नृपतिना प्रसादीकृतां मुद्रामासाद्य महता महेन समधिगतनिजसौधे विश्रम्य निशि नृपतिना विधृतः समानप्रतिष्ठैरभिभवितुमारब्धः ॥

*जो करिवराण कुम्भे पायं दाऊण मुत्तिए दलइ ।
सो सीहो विहिवसउं जम्बूयपरिपिल्लणं सहइ ॥ १

इत्यादि विमृशन्कटाहिकायां प्रक्षेपकाले ।
अर्थिभ्यः कनकस्य दीपकपिशा विश्राणिताः कोटयो
वादेषु प्रतिवादिनां विनिहिताः शास्त्रार्थगर्भा गिरः ।
उत्खातप्रतिरोपितैर्नृपतिभिः शारैरिव क्रीडितं
कर्त्तव्यं कृतमर्थिता यदि विधेस्तत्रापि सज्जा वयम् १
स सुधीरित्यन्त्यकाव्यमधीयंस्तथैव व्यापादयांचक्रे इति श्रीकपर्दिप्रबन्धः ॥

अथ श्रीप्रबन्धशतकर्त्ता रामचन्द्रस्तु तेन भूपापसदेन तप्ततांम्रपट्टिकायां निवेश्य[illegible]ानः ।

---

१ तद्दाहनोक्षत्वात् २ तीर्थानि ३ मरुवृद्धे.

*यः करिवराणां कुम्भे पादं दत्त्वा मौक्तिकानि दलति।
स सिंहो विधिवशाज्जम्बूकपरिपीडनं सहते ॥ १

*महिवीढह सचराचरह जिण सिरि दिहुा पाय।
तसु अत्थमणु दिणेसरहे होउत होइँ चिराँय ॥१

इत्युदीर्य दशनाग्रेण रसनां छिन्दन् विपन्न एव व्यापादयांचक्रे ॥

इति रामचन्द्रप्रबन्धः॥

अथ राजपितामहः श्रीमानाम्रभटस्तत्तेजोऽसहिष्णुभिः सामन्तैस्तैः समं तदालब्धावसरैः प्रणामं कारयद्भिराक्षिप्त एवमवादीत् । देवबुद्धया श्रीवीतरागस्य गुरुबुद्धया श्रीहेमचन्द्रर्षेः स्वामिबुद्धया कुमारपालस्यैव मे नमस्कारोऽस्मिन् जन्मनीति जैनधर्मवासितसप्तधातुना तेनेत्यभिहिते रुष्टो राजा युद्धसज्जो भवेति तद्गिरमाकर्ण्य श्रीजैनबिम्बं समभ्यर्च्याऽनशनं प्रपद्याङ्गीकृतसंग्रामदीक्षो निजसौधाद्राज्ञः परिग्रहं निजभटव्रातेन तुषनिकरामिव विकरन् घटिकागृहे प्राप्तस्तेषां मलीमसानां संगजनितं कश्मलं धारातीर्थे प्रक्षाल्य तत्कौतुकालोकनागताभिरप्सरोभिरहंपूर्विकया व्रियमाणो देवभू-

---

*महीपीठे सचराचरे येन श्रीः दत्ता प्रायः।
तस्यास्तमनं दिनेश्वरस्य भवितव्यं भवत्येव चिराय ॥ १

१ A जिणिसिरि दिन्ना २ C D दिणसरसु ३ होइतु होदु ४ A B चिराउ

यं जगाम ॥

वरं भट्टैर्भाव्यं वरमपि च खिङ्गैर्द्धनकृते
वरं वेश्याचार्यैर्वरमपि महाकूटनिपुणैः ।
दिवं याते दैवादुदयनसुते दानजलधौ
न विद्वद्भिर्भाव्यं कथमपि बुधैर्भूमिवलये ॥ १

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते ॥ १

इति प्रमाणोक्तप्रामाण्यात्स कुपतिर्वयजलदेवनाम्ना प्रतीहारेण क्षुरिकया हतो धर्मस्थानपातकी कृमिभिर्भक्ष्यमाणः प्रत्यहं नरकमनुभूय परोक्षतां प्रपेदे ॥ सं० १२३० पूर्ववर्षादऽजयदेवेन वर्ष ३ राज्यं कृतं ॥ सं० १२३३ पूर्ववर्षाद्वर्ष २ बालमूलराजेन राज्यं कृतमस्य मात्रा नाइकिदेव्या परमर्द्दिभूपसुतयोत्संगे शिशुं निधाय गाडरारघट्टनामनि घाटे संग्रामं कुर्वत्या म्लेच्छराजा तत्सत्त्वादकालागतजलदपटलसाहाय्येन विजिग्ये ॥ सं० १२३५ पूर्ववर्षाद्वर्ष ६३ श्रीभीमदेवेनराज्यं कृतमास्मिन्राज्ञि राज्यं कुर्वाणे श्रीसोहडनामा मालवभूपतिर्गूर्जरदेशविध्वंसनाय सीमान्तमागतस्तत्प्रधानेन संमुखं गत्वेत्यवादि ।

प्रतापो राजमार्त्तण्ड पूर्वस्यामेव राजते।
स एव विलयं याति पश्चिमाशावलम्बिनः ॥ १

इति विरुद्धां तद्गिरमाकर्ण्य स पश्चान्निवर्तते। तदनु तत्पुत्रेण श्रीमदर्जुनदेवनाम्ना गूर्जरदेशभङ्गोऽप्यकारि। श्रीमद्भीमदेवराज्यचिन्ताकारी व्याघ्रपल्लीसंकेतप्रसिद्धः श्रीमदानाकनन्दनः श्रीलवणसाहप्रसादश्चिरं राज्यं चकार। तत्सुतः साम्राज्यभारधवलः श्रीवीरधवलस्तन्माता मदनराज्ञी देवराजनाम्नो भगिनीपतेः पट्टकिलस्य भगिन्यां विपन्नायां तस्य बहुतरमनिर्वहमाणमापद्भारं निशम्य तन्निर्वहणाय लवणप्रसादाभिधपतिमापृच्छ्य शिशुना वीरधवलेन समं तत्र गता सती तेन स्पृहणीयगुणाकृतिरिति गृहिणीचक्रे। श्रीलवणस्तद्वृत्तान्तं सम्यगवगम्य तं व्यापादयितुं निशि तद्गृहे प्रविष्टो निभृतीभूय स यावदवसरं निरीक्ष्यते, तावत्स भोजनायोपविशन् वीरधवलं विना नाश्नामीति भूयो भूयो व्याहृत्य निर्बन्धात्समानीयैकस्मिन्नेव स्थालेऽश्नन्नऽकस्मादपि तं शरीरिणं कृतान्तमिव स्वान्तकमालोक्य श्यामलास्यो मा भैषीरिति तेनोचे। यदहं त्वामेव हन्तुमागतः परमस्मिन्मन्नन्दने वीरधवले

वात्सल्यं साक्षाच्चक्षुषा निरीक्ष्य तदाग्रहान्निवृत्तो-
ऽस्मीत्युक्त्वा तेन सत्कृतो यथागतं जगाम। वीरध-
वलस्यापरमातृकाः राष्ट्रकूटान्वयाः साङ्गणचामुण्ड-
राजादयो वीरजनत्वेन[1] भुवनतलप्रतीताः। अथ स
वीरधवलक्षात्रिय उन्मीलितकिंचिच्चेतनस्तस्माद्वृ-
त्तान्तात्त्वपमाणस्तद्गृहं त्यक्त्वा निजमेव जनकं सि-
षेवे । सत्त्वौदार्यगाम्भीर्यस्थैर्यनयविनयौचित्य-
दयादानदाक्षिण्यादिगुणशाली शालीनतया कण्ट-
कग्रस्तां कामपि भुवमाक्रम्य पित्रापि कियत्कृतज-
नपदप्रसादो द्विजन्मना चाहडनाम्ना सचिवेन चि-
न्त्यमानराज्यभारः प्राग्वाटवंशमुक्तामणिना पुरा
श्रीमत्पत्तनवास्तव्येन तत्कालं तत्रायाततेजःपा-
लमन्त्रिणा सह सौहार्दमुत्पेदे। मन्त्रिणस्तु जन्म-
वार्त्ता चैवं। कदाचिच्छ्रीमत्पत्तने भट्टारकश्रीहरिभ-
द्रसूरिभिर्व्याख्यानावसरे कुमारदेव्यभिधाना काचि-
द्विधवातीव रूपवती मुहुर्मुहुर्निरीक्ष्यमाणा तत्र
स्थितस्याशाराजमन्त्रिणश्चित्तमाचकर्ष । तद्विसर्ज-
नानन्तरं मन्त्रिणानुयुक्ता गुरव इष्टदेवतादेशादमु-
ष्याः कुक्षौ सूर्याचन्द्रमसोर्भाविनमवतारं पश्या-

---

१ वीरव्रतेन

मः. तत्सामुद्रिकानि भूयो विलोकितवन्त इति प्रभोर्विज्ञाततत्त्वः स तामपहृत्य निजां प्रेयसीं कृतवान्। क्रमात्तस्या उदरेऽवतीर्णौ तावेव ज्योतिष्केन्द्राविव वस्तुपालतेजःपालाभिधानौ सचिवावभूतां। अथान्यदा श्रीवीरधवलदेवेन निजव्यापारभारायाभ्यर्थ्यमानः प्राक् स्वसौधे तं सपत्नीकं भोजयित्वा "नुपमा राजपत्न्यै श्रीजयतलदेव्यै निजं कर्पूरमयताडङ्कयुग्मं कर्पूरमयो मुक्ताभिः सुवर्णमयमण्यन्तरिताभिर्निष्पन्नमेकावलीहारं सा प्राभृतीचकार" मन्त्रिणः प्राभृतमुपढौकितं निषिध्य निजं व्यापारं समार्पयत्।[1] यत्तवेदानीं[2] वर्त्तमानं वित्तं तत्ते कुपितोपि प्रतीतिपूर्वं पुनरेवाददामीति, अक्षरपात्रान्तरसंबन्धपूर्वकं[3] श्रीतेजःपालाय व्यापारसंबन्धिनं पश्चात्प्रसादं ददौ।

अकरात्कुरुते कोशमवधाद्देशरक्षणम्।
देशवृद्धिमयुद्धाच्च[4] स मन्त्री बुद्धिमांश्च सः॥ १

निखिलनीतिशास्त्रोपनिषन्निषण्णधीः स्वस्वामिनं वर्द्धयन् भानूदये कालपूजया विधिवच्छ्रीजिनमर्चि-

१ C समर्पयत् २ यत्तावत्कादीनां B यन्मयेदानी ३ पात्रान्तरस्थबन्ध. ४ भूमि.

त्वा गुरूणां वन्दनकर्पूरपूजानन्तरं द्वादशावर्त्तव-न्दनदानादनु यथावसरप्रत्याख्यानपूर्वमपूर्वमेकैकं श्लोकं गुरोरध्येति मन्त्रावसरानन्तरं सद्यस्करसवती-पाकभोजनानन्तरं, मूञ्जालनामा महोपासकस्तद-ङ्गलेखकोऽवसरे रहसि पप्रच्छ। स्वामिनाहर्मुखे शीतान्नमाहार्यते किं वा सद्यस्कमिति पृच्छन्तं ग्रामेयं[1] द्वेधा त्रेधाऽवधीर्य कदाचित्क्रोधान्मन्त्रिणा पशुपाल इत्याक्षिप्तः। स धृतधैर्यः। उभयोः क-श्चिदेकतरः स्यादित्यभिहिते तद्वचश्चातुरीचमत्कृ-तचित्तोऽनधिगतभवदुपदेशध्वनिरहं, तद्विज्ञ यथा-स्थितं विज्ञप्यतामित्यादिष्टः स वाग्मी प्रोवाच। यां रसवतीमतीव रसप्लुतां सद्यस्कां प्रभुरभ्यवहरति तां प्राग्पुण्यरूपां जन्मान्तरिततयात्यन्तशीतलां म-न्यते[2]। किं चेदं मया गुरोः संदेशवचनमाविःकृतं तत्त्वं तु त एवावधारयन्तीति तत्र पादाववधार्यतां तेनेति विज्ञप्तः श्रीतेजःपालनामा मन्त्री कुलगुरु-भट्टारकश्रीविजयसेनसूरीणामभ्यर्णमागतो गृहिधर्मं[3] पप्रच्छ। तैरुपासकदशाभिधसप्तमाङ्गाज्जिनोदितदेव पूजावश्यकयतिदानादिके गृहिधर्मे समुपदिष्टे, ततः

१ C ग्राम्योऽयं २ मन्ये ३ गृहिधर्मविधिं गुरून्

प्रभृति स देवतार्चनविशेषजैनमुनिदानाद्यं धर्म-कृत्यमारब्धवान्। वर्षत्रयदेवतावसराय पदेन पृथक्-कृतेन षट्त्रिंशत्सहस्रप्रमाणेन द्रव्येण बाउलाग्रामे श्रीनेमिनाथप्रासादः समजनि॥ अथ सं० १२७७ वर्षे सरस्वतीकण्ठाभरणलघुभोजराजमहाकविमहा-मात्यश्रीवस्तुपालेन महायात्रा प्रारेभे। गुरूपदिष्टे लग्ने तत्कृत्यसंघाधिपत्याभिषेकेण श्रीदेवालयप्रस्था-ने उपक्रम्यमाणे दक्षिणपथे दुर्गादेव्याः स्वरमाक-र्ण्य स्वयं तद्विदा शाकुनिकेन किंचिच्चिन्तयति। मरु-वृद्ध शकुनं भारितं विधेहीत्यभिदधानः शकुनाच्छ-ब्दो बलीयानिति विचार्य पुराद्विहारावासेषु श्री-देवालयं संस्थाप्य शकुनव्यतिकरं पृष्टो मार्गवैष-म्ये शकुनानां वैपरीत्यं श्लाघ्यते। राज्यविकल-तायां तीर्थमार्गाणां वैषम्यं तथा यत्र सा दुर्गा दृष्टिपथं गता तत्र कमपि दक्षं पुरुषं प्रस्थाप्य स प्रदेशो दृश्यतां। तथाकृते स पुरुष इति विज्ञप-यामास। यत्तस्मिन् वरण्डशब्दे नवीक्रियमाणे सा त्रयोदशेष्वरेषु निषण्णा देव्यभूत्। अथ स मरुवृद्धो। देवी भवतः सार्द्धत्रयोदशसंख्या यात्रा अभिहि-तवती। अन्त्यार्द्धयात्राहेतुं भूयः पृष्ठे स आह। इ-

हातुलमङ्गलावसरे तद्वक्तुं न युक्तं समये सर्वं निवेदयिष्यामीति वाक्यानन्तरं श्रीसंघेन समं मन्त्री पुरतः प्रयाणमकरोत्। सर्वसंवाहनानामर्द्धपञ्चमसहस्राणि। एकविंशतिशतानि श्वेताम्बराणां संघतद्रक्षाधिकारे सहस्रं तुरङ्गमाणां सप्तशती रक्तकरभीणां संघरक्षाधिकारिणश्चत्वारो महासामन्ताः। इत्थं समग्रसामग्र्या मार्गमतिक्रम्य श्रीपादलिप्तपुरे स्वयं कारिते श्रीमहावीरचैत्यालंकृतस्य श्रीललित[1]सरसः परिसरे आवासान्दापयामास। तत्र तीर्थाराधनां विधिवद्विधाय मूलप्रासादे काञ्चनकलशं प्रौढजिनयुगलं श्रीमोढेरपुरावतारे श्रीमन्महावीरचैत्याराधकमूर्त्ती, देवकुलिकामण्डपश्रेणेरुभयतश्चतुष्किकाद्वयपङ्क्तिं, शकुनिकाविहारे सत्यपुरावतारे चैत्यपुरतो रजतमूल्यं तोरणं, श्रीसंघयोग्यान्मठान, धार्मि[2]कसत्यकस्य देवकुलिकाः, नन्दीश्वरावतारे प्रासादा[3]न् इन्द्रमण्डपं च, तन्मध्ये गजाधिरूढश्रीलवणप्रसादवीरधवलमूर्तीं, तुरङ्गाधिरूढां निजमूर्त्तिं, तत्र सप्त पूर्वपुरुषमूर्त्तीः सप्त गुरुमूर्त्तीश्च, तत्संनिधौ चतुष्किकायां ज्यायोभ्रात्रोर्मल्हंमालत्वदेवलूणिगयोराराधकमूर्त्ती, प्रतो-

---

१ C श्रीतदीला २ A जामि. ३ D नन्दीश्वरप्रासादाः

ली:, अनुपमसरः, कपर्दियक्षमण्डपतोरणप्रभृतीनि बहूनि जिनधर्मस्थानानि रचयांचक्रे। तथा नन्दीश्वरकर्मस्थाये कण्टेलीयापाषाणसत्कजातीयषोडशस्तम्भेषु पर्वतात्[1] जलमार्गेणानीयमानेषु समुद्रकण्ठोपकण्ठे उत्तार्यमाणेषु, एककः स्तम्भः पङ्के मग्नस्तथा यथा निरीक्ष्यमाणोपि न लभते। तत्पदेऽपरपाषाणस्तम्भेन प्रासादः प्रमाणकोटिं नीतः। वर्षान्तरे वारिधिवेलावशात्पङ्कनिमग्नः स एव स्तम्भः प्रादुरासीत्। सचिवसमादेशात्तस्मिंस्तत्र संचार्यमाणे प्रासादो विदीर्ण इति निवेदितुमागताय पत्रभाषकाय हैमीं जिव्हां स मन्त्री ददौ। दक्षैः किमेतदिति पृष्टेऽतः परं यथा कथंचिद्धर्मस्थानानि दृढानि कारयिष्यन्ते यथा युगान्तेपि तेषां नान्तो भवति अतः पारितोषिकं दानं। आमूलात्तृतीयवेलायामयं प्रासादः समुद्धृतो विजयते। श्रीपालिताणके च पौषधशालां विशालां कारयामास। श्रीमदुज्जयन्ते च श्रीसंघेन सह प्राप्तो मन्त्री तत्र च तदुपत्यकायां[2] जलपूरे कारितं नव्यं वप्रं, तथा तन्मध्ये श्रीमदाशराजविहारं, तथा कुमारदेवीसरश्च, निरुपमं वि-

---

१ पावकपर्वतात् C D २ उपत्यकान्ते

लोक्य धवलगृहे पादोऽवधार्यतामिति नियुक्तै-
रुच्यमाने श्रीमद्गुरूणां योग्यं पौषधवेश्मास्ति ना-
स्तीति मन्त्रिणादिष्टे तन्निष्पाद्यमानमाकर्ण्य विनया
तिक्रमभीरुर्गुरुभिः सह बाहिर्दापितावासे तस्थौ।
प्रातरुज्जयन्तमारुह्य श्रीशैवेयक्रमकमलयुगलमभ्य-
र्च्य स्वयंकारितश्रीशत्रुंजयावतारतीर्थे प्रभूतप्रभावनां
विधाय कल्याणत्रयचैत्य[1]वर्यसपर्यादिभिस्तदुचिती-
माचर्य मन्त्री यावत्तृतीये दिनेऽवरोहति तावद्वाभ्यां
दिनाभ्यां निष्पन्ने पौषधौकसि मन्त्रिणा समं गुरव-
स्तत्र समानीतास्तत्प्रशशंसुः पारितोषिकदानेनानु-
जगृहुः[2]। श्रीमत्पत्तने प्रभासक्षेत्रे चन्द्रप्रभं प्रभाव-
तया प्रणिपत्य यथौचित्यादभ्यर्च्य च निजेऽष्टापदप्रा-
सादेऽष्टापदकलशमारोप्य तत्रत्यदेयलोकाय दानं
ददानः श्रीहेमाचार्यैः श्रीकुमारपालनृपतये जगद्वि
दितं श्रीसोमेश्वरः प्रत्यक्षीकृत इति पञ्चदशाधिक-
वर्षशतदेशीयधार्मिकपूजाकारकमुखादाकर्ण्य तच्च-
रित्रचित्रितमना व्यावृत्तमानो मार्गे लिङ्गोप-
जीविनामसदाचारेणान्नदाने निषिद्धे तत्पराभवं

---

१ जन्म दीक्षा केवलं च यस्मिन्दिने तीर्थकृतस्तदुत्सवं विधाय यच्चैत्यादौ बिम्बं स्थाप्यते तादृशचैत्येषु २ B जगृहे. ३ प्रभावनया

विज्ञाय वायडीयश्रीजिनदत्तसूरिभिर्जिनोपासकपा-
र्श्वात्तस्मिन्क्षणे पूर्यमाणे सति दर्शनानुनयार्थं[१]
तत्र समागताय मन्त्रिणे.

रत्नाकर इव क्षारवारिभिः परिपूरणात् ।
गम्भीरिमाणमाधत्ते शासनं लिङ्गधारिभिः ॥ १ ॥
यान् लिङ्गिनोनुवदन्ते[२] संविग्ना अपि साधवः ।
तदर्चा चर्च्यते कस्माद्धार्मिकैर्भवभीरुभिः ॥ २ ॥
प्रतिमाधारिणोप्येषां त्यजन्ति विषयं पुरः ।
लिङ्गिनां विषयस्थानामनर्चा तु विरोधिनी ॥ ३ ॥
लिङ्गोपजीविनां लोके कुर्वन्ति येऽवधीरणाम् ।
दर्शनोच्छेदपापेन लिप्यन्ते ते दुराशयाः ॥ ४ ॥
आवश्यकवन्दनानिर्युक्तौ ॥

*तित्थयरगुणा पडिमासु नत्थि निस्संसयं विया-
णन्तो ।
तित्थयरोवि[३] नमन्तो सो पावइ[४] निज्जरं विउलं १

---

१ B अनुनयार्थे. २ C वन्दन्ति ३. तित्थयरुत्ति ४ A पामइ

---

*तीर्थंकरगुणाः प्रतिमासु न सन्ति निःसंशयं विजानन्तोऽपि तीर्थंकरान् नमन्तः ते प्राप्नुवन्ति निर्जरां विपुलाम् १

*लिङ्गं जिणपन्नत्तं एव नमंसन्ति[1] निज्जरा विउला।
जइवि गुणप्पहीणं वन्दइ अज्झप्पसुद्धीए ॥ २ ॥

इति तदुपदेशान्निर्माजितसम्यक्त्वदर्पणो विशेषाद्दर्शनपूजापरः स्वस्थानमासदत्। अथ ज्यायसा सोदरेण मं० लूणिगनाम्ना परलोकप्रयाणावसरेऽर्बुदवसहिकायां[2] मम योग्या देवकुलिका कारयितव्येति धर्मव्ययं याचित्वा तस्मिन्विपन्ने तद्गोष्ठिकेभ्यस्तद्भुवमलभमानश्चन्द्रावत्याः स्वामिनः पार्श्वान्नव्यां भूमिं विमलवसहिकासमीपेऽभ्यर्थ्य तत्र श्रीलूणिगवसहिप्रासादं भुवनत्रयचैत्यशलाकारूपं कारयामासिवान्। तत्र श्रीनेमिनाथबिम्बं संस्थाप्य प्रतिष्ठितं तद्गुणदोषविचारणाकोविदं श्रीजावालिपुरात्श्रीयशोवीरमन्त्रिणं समानीय मन्त्री प्रासादस्वरूपं प्रपच्छ। ततस्तेन प्रासादकारकसूत्रधारः शोभनदेवोऽभ्यधायि। रङ्गमण्डपे शालभञ्जिकामिथुनस्य विशालघाटस्तीर्थकृत्प्रासादे सर्वथानुचितो वास्तुनिषिद्धश्च। तथा

1 नमंसुत्ति 2 D) अर्बुदे विमलवसहिकायां 3 D) विलास.

*लिङ्गं जिनप्रज्ञप्तं एव नमस्यन्ति निर्जरा विपुला यद्यपि गुणप्रहीनं वन्दन्ते अध्यात्मशुद्ध्यै २

गर्भगृहे प्रवेशद्वारे सिंहाभ्यां तोरणमिदं देवस्य विशेषपूजाविनाशि। तथा पूर्वपुरुषमूर्त्तियुतं गजानां शाला पश्चाद्भागे[1] प्रासादकारापकस्यायतिविनाशि[3]। अप्रतीकारार्हं दूषणत्रयं विज्ञस्यापि सूत्रभृतो यदुत्पद्यते स भाविकर्मणो दोष इति निर्णीय यथागतं स च गतः। तदुपश्लोकनश्लोका एवम्।

यशोवीर यशोमुक्ताराशेरिन्दुरसौ शिखा।
तद्रक्षणाय रक्षायाः श्रीकारो लाञ्छनच्छलात्॥१॥
बिन्दवः श्रीयशोवीर शून्यमध्या निरर्थकाः।
संख्यावन्तो विधीयन्ते त्वयैकेन पुरस्कृताः॥ २॥
यशोवीर लिखत्याख्यां यावच्चन्द्रे विधिस्तव।
न माति भुवने तावदाद्यमप्यक्षरद्वयम्॥ ३॥
इति श्रीशत्रुञ्जयादितीर्थानां यात्राप्रबन्धाः।

॥ अथ श्रीवस्तुपालस्य स्तम्भतीर्थे सइदनाम्ना नौवित्तकेन समं विग्रहे संजायमाने श्रीभृगुपुरान्महासाधनिकं शङ्खनामानं श्रीवस्तुपालं प्रति कालरूपमानीतवान्। स जलधिकूले दत्तनिवासे नगरप्रवेसमार्गान् शत्रुसंकीर्णानालोक्य व्यवहारिणां चित्तानि यानपात्रप्रणयीनि च वीक्ष्य प्रहितैर्बन्दिभिः श्री-

१ C पुरतः २ तथाविधप्रयोगेषु रूढिः ३ B आयविनाशी.

वस्तुपालेन समं समरवासरं निर्णीय यावच्चतुरङ्गसैन्यं सन्नह्यते तावच्छ्रीवस्तुपालेन पुरः कृतो गुडजातीयो लूण[1]पालनामा सुभटो यदि शङ्खमन्तरेणाहं प्रहरामि तदा कपिलां धेनुमेवेति वारवर्णिकापूर्वकः शङ्ख इति तद्वचनादनु शङ्खोहमिति प्रातिसुभटेनोदिते तं निपात्य पुनरनयैव रीत्या द्वितीयेपि पातिते सति कथं समुद्रसामीप्यात् शङ्खबाहुल्यमित्युच्चरन् महासाधनिकशङ्खेनैव तत्सुभटतां श्लाघमानेनाहूतः कुन्ताग्रेण प्रहरन् सतुरग एकेनैव प्रहारेण व्यापादितः । तदनु श्रीवस्तुपालेन समराङ्गणप्रणयिना केसरिकिशोरेण च शङ्खसैन्यं गजयूथमिव त्रासितं दिशो दिशमनेशत् । पश्चान्नौवित्तको मारितः सइयद इति । तदनु लूणपालमृत्युस्थाने लूणपालेश्वरप्रासादो मन्त्रिणा कारितः । अथान्यस्मिन्नवसरे श्रीसोमेश्वरस्य कवेः काव्यम् ॥

हंसैर्लब्धप्रशंसैस्तरलितकमलप्रत्तरङ्गैस्तरङ्गै-
र्नीरैरन्तर्गभीरैश्चटुलबककुलग्रासलीनैश्च मीनैः ।
पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतै-

---

१ A भवण D लण

भाति प्रक्रीडदूर्मिस्तव सचिव चलच्चक्रवाकस्तटाकः ॥ १ ॥

श्रीमन्त्रिणा षोडशसहस्रद्रम्माणां दत्तिः[२] प्रसादीकृता। क्वचिच्चिन्तातुरस्य मन्त्रिणो भूमिं मृगयमाणस्य समागतः। सोमेश्वरदेवः समयोचितमिदमपाठीत् ॥ तद्यथा ॥

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थिरातलमिदं यद्वीक्ष्यसे वेद्मि तत्
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल स्वयं
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान् मार्गति १

मन्त्रिणास्य काव्यस्य पारितोषिकेऽष्टौ सहस्राणि दत्तानि ॥ तथा ॥

त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः।

ददौ दधीचिरस्थीनि। इति त्रिषु पदेषु पण्डितेषूधीयमानेषु पण्डितजयदेवः समस्यापदमिव वस्तुपालः पुनर्वसु। इत्युच्चरन् सहस्रचतुष्टयं लेभे। तथा सूरीणां दर्शनप्रतिलाभनावसरे केनापि दुर्गतद्विजातिना याचनया तन्नियुक्तेभ्यः कृपया पटीमुपलभ्य मन्त्रिणं प्रति समयोचितमूचे ॥

१ B दाक्षिः २ D सहस्रा दानैः प्रसादीकृताः

क्वचित्तूलं क्वचित्सूत्रं कार्पासास्थि क्वचित्क्वचित् ।
देव त्वदरिनारीणां कुटीतुल्या पटी मम ॥ १ ॥

तत्पारितोषिके मन्त्रिणा दत्तानि पञ्चदशशतानि । तथा बालचन्द्रनाम्ना पण्डितेन श्रीमन्त्रिणं प्रति ॥

गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं युतो
भूत्या त्वं च लसद्गुणः शुभगणः किं वा बहु ब्रूमहे ।
श्रीमन्त्रीश्वर नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुश्चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः प्रभुः ॥ १

इत्युक्ते तस्याचार्यपदस्थापनायां द्रम्मसहस्रं व्ययीकृतं ॥ कदाचिन्म्लेच्छपतेः सुरत्राणस्य गुरुमालिमं मक्वतीर्थयात्राकृते इह समागतमवगम्य तज्जिघृक्षुभ्यां श्रीलवणप्रसादवीरधवलाभ्यां श्रीतेजःपालमन्त्री मन्त्रं पृष्ट एवमाख्यातवान् ।

धर्मछद्मप्रयोगेण या सिद्धिर्वसुधाभुजाम् ।
स्वमातृदेहपण्येन तदिदं द्रविणार्जनम् ॥ १ ॥

इति नीतिशास्त्रोपदेशेन वृकयोरिव तयोः छागमुन्मोच्य पाथेयादिना सत्कृत्य तं तीर्थं प्रति प्रहितवान् । स च कियद्भिर्वर्षैः[2] पश्चाद्व्यावृत्तः श्रीम-

---

१ मक्का २ B D दिनैः

न्त्रिणा तदुचितनेपथ्यादिभिः सत्कृतः स स्वस्थानं प्राप्तस्तीर्थगुणानां विस्मरन् श्रीसुरत्राणपुरतः श्रीवस्तुपालमेव वर्णयामास। स सुरत्राणस्तदनन्तरमस्माकं देशे भवानेवाध्यक्षोऽहं तु भवतः सेलभृत् तत्त्वयाहं यत्कृत्यादेशेनैव सर्वदा[1]नुग्राह्य इति प्रतिवर्षं तत्प्रहितयमलकपत्रेणोपरुध्यमानः श्रीमन्त्रीशः श्रीशत्रुञ्जयभूमिगृहयोग्यं श्रीयुगादिजिनबिम्बं धन्यं मन्यमानस्य सुरत्राणस्यानुज्ञया तद्देशवर्त्तिन्या उम्माणी[2]नाम्न्याः खन्याः प्रयत्नशतैरानीतवान् । तस्मिन्नप्यारोहति श्रीमूलनायकस्यामर्षात्पर्वते विद्युत्पातः समजनि । ततः प्रभृति श्रीमन्त्रीश्वरस्याजीवितान्तं श्रीदेवपादैर्दर्शनं न ददे । कस्मिंश्चित्पर्वणि श्रीमदनुपमया निरुपमे मुनीनामन्नदाने यदृच्छया दीयमाने कार्यौत्सुक्यात्तदागतः श्रीवीरधवलदेवः सिताम्बरदर्शनिनं[3] द्वारप्रदेशं पाणिंधममालोक्य विस्मयस्मेरमानासो मान्त्रिणमभीहितवान । हे मान्त्रिण इत्थं सदैवाभिमतदैवतवत् किममी न सत्क्रियन्ते । तव चेदशक्तिस्तदर्द्धभागो ममास्तु । मामकमेव सर्वं वा दीयतां सदैवेत्यतः

१ C सर्वथा २ A B मुम्माणी ३ A दर्शनेन

कारणान्नोच्यते तथा कृते भवतो वृथायास एव स्यादिति तन्मुखचन्द्रविनिर्गतैर्गोभिर्निर्वाणोपतापः स्वामिनः कियानर्द्धविभागः सर्वमेव भवदीयमेवेत्युक्त्वा पटीं न्युञ्छनीचक्रे। अन्यदा यतिदानावसरे मिथो मुनिजनसंमर्द्दने श्रीमदनुपमायाः प्रणमत्याः प्राज्याज्यसंपूर्णं घृतपात्रं पृष्ठे पतितमालोक्य कुपितं तेजःपालमन्त्रिणमिति सान्त्वितवती यत्तव स्वामिनः प्रासादात्मुनिजनपुण्यपात्रपतितैराज्यैरङ्गाभ्यङ्गो भवतीति तत्पूर्णदानविधिचमत्कृतो-मन्त्री पश्चात्प्रसादपूर्वं

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्
त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥ १ ॥

इति युक्तोक्तिपूर्वं च तां मन्त्री प्रशशंस। इत्यनेकधा दानावदातनिकषरेखां प्राप्ता।

लक्ष्मीश्चला शिवा चण्डी शची सापत्न्यदूषिता।
गङ्गा न्यग्गामिनी वाणी वाक्साराऽनुपमा ततः १

इत्यादिभिः स्तुतिभिर्जैनाचार्यैः स्तूयते स्म ॥
अथान्यदा पश्चग्रामसङ्ग्रामाधिरूढयोः श्रीवीरधव-

* बौद्धेन विमलाचार्येण कृतोयं श्लोक प्रश्नोत्तरमालायां वर्तते तस्मान्नारायणेन गृहीत्वा स्वग्रन्थे हितोपदेशे स्थापितः, तस्मादनेनेति

लवणप्रसादयोः श्रीवीरधवलपत्नी राज्ञी जयतलदेवी सन्धिविधानहेतवे जनकं प्रति श्रीशोभनदेवमुपागता । किं वैधव्याद्भीरुः सन्धिबन्धं कारयसीति तेनाभिहिता । वीरचूडामणेः पत्युः श्रीवीरधवलस्योन्नतिमारोपयन्ती सा पितृकुलविनाशशङ्कया भूयो भूयोऽहमेवं व्याहरामि । तुरगपृष्ठाधिरूढे तस्मिन्वीरधवले स कोऽस्ति सुभटो यस्तत्सन्मुखे स्थास्यतीति व्याहृत्य सामर्षैव प्रास्थ । अथ तस्मिन्समरसंरम्भे प्रहारव्यथाव्याकुले श्रीवीरधवले भुवस्तलमलंकुर्वति ।

यः पञ्चग्रामसङ्ग्रामभूमौ भीमपराक्रमः ।
घातैः पपात संजातैरश्वतो न तु गर्वतः ॥ १ ॥

इति किञ्चिदन्तर्भग्ने समरसुभटवर्गे एक एवायं पत्तिः पतित इति सकलं निजबलमुत्साहयन् श्रीलवणप्रसादः समस्तानपि रिपून् लीलयैव समूलकापं कषितवान् । इत्थमेकविंशतिकृत्वः सत्त्वगुणरोचिष्णू रणरसिकतया क्षेत्रे पितुरग्रे पतितः ॥ अथ वीरधवलस्यायुःपर्यन्ते, प्रतितीर्थं प्रस्थितेन दत्तमेकधा सहस्रगुणमुपलभ्यत इति रूढेः श्रीतेजः-

१ A प्रतिहारश्री° २ A C D प्रस्थितस्य.

पालेन जन्मसुकृतं ददे । तदनु तस्मिन् स्वामिनि विपन्ने तत्सौभाग्यातिशयात्सेवकानां विंशत्यधिकशतेन सहगमनं चक्रे । तदनु श्रीतेजःपालेन प्रेतवने यामिकान्मुक्त्वा लोकस्य स निर्बन्धो निषिद्धः ॥

आयान्ति यान्ति च परे ऋतवः क्रमेण
संजातमेतदृतुयुग्ममगत्वरं तु ।
वीरेण वीरधवलेन विना जनानां[1]
वर्षा विलोचनयुगे हृदये निदाघः ॥ १ ॥

अथ श्रीमन्त्रिणा वीरधवलस्य सुतो वीसलदेवो राज्येऽभिषिक्तः। श्रीअनुपमदेव्या विपत्तौ तेजःपालारूढशोकग्रन्थावनिवर्त्तमानायां[2] तत्रागतैः श्रीजयसेनसूरिभिर्बलवत्पुरुषैरुपशामितायां विपादि किंश्चिच्चेतनया सापत्रपः श्रीतेजःपालः सूरिणोचे । वयमस्मिन्नप्यवसरे भवतः कैतवमालोकितुम्[3] उपेताः । श्रीवस्तुपालेन किमेतदिति पृष्टा गुरवः प्राहुः । यदस्माभिः शिशोस्तेजःपालस्योपयामाय धरणिगपार्श्वादनुपमा कन्या याचिता तदा स्थिरता[4] कृता । तदनु[5] तस्याः कन्याया एकान्तविरूपतां निशम्य तत्संबन्ध-

१ C जनस्य २ A C D ग्रन्थेऽनिवर्तमाने ३ D आलोकयितुं
४ तत्परिणयननिश्चयता ५ C स्थिरपत्रदानादनु

भङ्गाय चन्द्रप्रभजिनप्रतिष्ठितक्षेत्राधिपतेरष्टौ द्रम्मा-णां भोगमुपायनीचक्रे । इदानीं तद्वियोगग्रन्थेरामनस्यमित्युभयोर्वृत्तान्तयोः कस्तथ्य इति तन्मूलसंकेताच्छ्रीतेजःपालः स्वहृदयं दृढीचक्रे ॥ अथान्यदावसरे मन्त्री वस्तुपालः पूर्णायुः श्रीशत्रुञ्जयं यियासुरिति मत्वा पुरोधाः सोमेश्वरदेवस्तत्रागतोऽनर्घ्येष्वप्यासनेषु मुच्यमानेष्वनुपविशन् हेतुं पृष्ठ इत्याह ॥

अन्नदानैः पयःपानैर्धर्मस्थानैर्धरातलम् ।
यशसा वस्तुपालेन रुद्धमाकाशमण्डलम् ॥ १ ॥

इति स्थानाभावान्नोपविश्यते इति तदुक्तेरुचितपारितोषिकदानपूर्वं तमापृच्छ्य मन्त्री पथि प्रस्थितः । आकेवालीयाग्रामे देशकुट्यां दर्भसंस्तरमारूढो गुरुभिराराधनां कार्यमाण आहारपरिहारपूर्वं पर्यन्ताराधनया प्रध्वंसितकलिमलो युगादिदेवमेवं जपन्

सुकृतं न कृतं किञ्चित्सतां संस्मरणोचितम् ।
मनोरथैकसाराणामेवमेव गतं वयः ॥ १ ॥

इति वाक्यप्रान्ते नमोऽर्हद्भ्य इत्यक्षरैः समं प-

१ B भागमपि याचितीचक्रे

२ A च भूतलं

रिहृतसप्तधातुबद्धं शरीरं स्वकृतफलमुपभोक्तुं स्वर्लोकमलंचकार । तत्संस्कारस्थानेऽनुजश्रीतेजःपालसुतजैत्रसिंहाभ्यां श्रीयुगादिदेवदीक्षावस्थामूर्त्तिनालंकृतस्वर्गारोहणप्रासादोऽकारि ॥

अद्य मे फलवती पितुराशा
मातुराशिषं[1]शिखा ङ्कुरिताद्य ।
यद्युगादिजिनयात्रिकलोकं
प्रीणयाम्यहमशेषमखिन्नः ॥ १ ॥

नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः ।
तान्धूलिधावकेभ्योपि मन्येऽधमतरान्नरान् ॥ २ ॥

इत्यादीनि श्रीवस्तुपालमहाकवेः काव्यानि स्वयं कृतान्यमूनि ॥

पूर्णः स्वामिगुणैः स वीरधवलो निर्मान[2] एव प्रभुर्विद्वद्भिः कृतभोजराजबिरुदः श्रीवस्तुपालः कविः ।
तेजःपाल इति प्रधाननिवहेष्वेकश्च मन्त्रीश्वरस्तज्जायानुपमागुणैरनुपमा प्रत्यक्षलक्ष्मीरभूत् ॥ १ ॥

॥ इति श्रीमेरुतुङ्गाचार्याविःकृते प्रबन्धचिन्तामणौ श्रीकुमारपालमन्त्रीश्वरवस्तुपालतेजःपालमहापुरुषयशोवर्णनो नाम चतुर्थः प्रकाशः ॥

---

१ आशिःशब्दोऽकारान्तो न तथापि ग्रन्थकृतैव न्यस्तः २ C निःसीमः

अथ पूर्वोक्तेभ्यो महापुरुषचरितेभ्यो यान्यवशिष्टानि तानि तदितराणि चेह प्रकीर्णकप्रबन्धे प्रारभ्यन्ते ॥ तद्यथा ॥

समीपस्फुरच्छिप्राश्रवन्त्यामवन्त्यां पुरि पुरा श्रीविक्रमार्कनृपः, सत्रागारे वैदेशिकं लोकं भोजनानन्तरं निद्रापरं संपन्नदीर्घनिद्रमाकर्ण्य विस्मयस्मेरमानसस्तद्वृत्तान्तं जिज्ञासुस्तान् सर्वानपि वसनापिहितान्विधाप्य तद्वार्त्तां चापन्हुतां निजाज्ञां विधाय पुनरुपागतानध्वगांस्तथैव भोजयित्वा प्रदोषे चोष्णोदकं तैलं च तेषां चरणपरिचरणनिमित्तमुपनीय तेषु २ प्रसुप्तेषु महानिशायां कृपाणपाणिर्नृपतिर्निभृतीभूय स्वयं यावत्तस्थौ तादकस्मात्तत्र कोणैकदेशे प्रथमं तावद्धूमोद्गमं तदनु शिखारेखामथ दीप्रफणारत्नफणालंकृतं सहस्रफणालंकृतसहस्रफणं नागं निर्गतमवलोक्य तच्चित्रचमत्कृतो राजा यावत्साकूतं पश्यति तावत्स फणीन्द्रः किं पात्रमिति तद्दिनसुप्तान् पान्थान् प्रत्येकं प्रपच्छ। अथ ते धर्मपात्रं गुणपात्रं तपःपात्रं रूपपात्रं कामपात्रं कीर्त्तिपात्रमित्यादीनि वदन्तोऽज्ञानतया यदृच्छया तस्य

---

१ A श्रीवत्यां २ माप्तमृत्युं

शापान्मृत्युमश्नुवन्तीति विलोक्याऽथ श्रीविक्रम-एव तत्पुरोभूय योजिताञ्जलिः ।

भोगीन्द्र बहुधा पात्रं गुणयोगाद्भवेद्भुवि ।
मनःपात्रं तु परमं शुद्धं श्रद्धापवित्रितम् ॥ १ ॥

अथ निजाशयमेवं भाषमाणं श्रीविक्रमं परितोषाद्वरं वृणीष्वेति प्राह । अथ श्रीविक्रमोऽमून् पथिकानुज्जीवयेति तेन वरे याचिते शेषं विशेषात्परितोषयामास ॥

इति श्रीविक्रमार्कस्य पात्रपरीक्षाप्रबन्धः ॥

अथ कदाचित्पाटलीपुरपत्तनेऽकस्मादमन्दानन्दे नन्दे राज्ञि पञ्चत्वमागते कश्चिद्विप्रस्तत्कालं तदागतः परपुरप्रवेशविद्यया नृपदेहमधितस्थौ । तत्संकेततो द्वितीयो द्विजो नृपद्वारमुपेत्य वेदोद्गारमुदाहरन्प्रत्युज्जीवितो नृपः स कोशाध्यक्षैस्तस्मै स्वर्णलक्षमदापयत् ।अथ तद्वृत्तान्तं विज्ञाय महामात्यो, नन्दः पुरा कदर्योऽभूत् साम्प्रतं तु तदौदार्यमिति वदंस्तं विप्रं विधृत्य परकायप्रवेशकारिणं वैदेशिकं सर्वत्र शोधयन् क्वापि मृतकं केनापि रक्ष्यमाणमाकर्ण्य चिताप्रवेशाद्भस्मीकृत्य पूर्वमिव तं नन्दं निरु-

---

१ A शुद्धश्रद्धा २ C तत्संकेतात् द्वितीयदिने

पममतिवैभवान्निजप्राज्ये साम्राज्ये निर्वाहयामास॥

इति नन्दप्रबन्धः ॥

अथ खेडंमहास्थाने देवादित्यविप्रपुत्री बालकाले विधवा निरूपमरूपपात्रं सुभगाभिधाना प्रधाना प्रातः सूर्यं प्रत्यर्घाञ्जलिं क्षिपन्ती अज्ञाततद्भोगादाधानममूत्कथंचित्तदसमञ्जसं पितृभ्यामवबुध्य मन्दाक्षमुद्रमिति तां प्रति तद्व्याहृत्य स्वपुरुषैर्वलभ्या नगर्या अभ्यासे मुमुचे। तया तत्र प्रसूतः सूनुः क्रमेण वर्द्धमानः सवयोभिः शिशुभिः निःपितृक इति निर्भर्त्स्यमानो मातुः समीपे पितरं पृच्छन् तया न जाने इत्यभिहितस्तज्जन्मवैराग्यान्मुमूर्षोः[4] प्रत्यक्षीभूय सविता सान्त्वनापूर्वं करे कर्करान्समर्प्य भवन्मातुः संपर्ककारिणमर्कं स्वं ज्ञापयन् भवतः पराभवकारिणं प्रत्यऽयं क्षिप्तः शिलारूपो भविष्यतीत्यादिश्य निरपराधस्य कस्यापि क्षिप्तो यदि तवैवाऽनर्थनिबन्धनं ज्ञापयंस्तिरोधत्त। अथेत्थमभिभवकारिणः कांश्चिद्व्यापादयन् शिलादित्य इति सान्वयनाम्ना प्रतीतः। तन्नगरराज्ञा तत्परीक्षा-

---

१ C खेडा २ अज्ञातात्तद्योगभोगादाधानमधात् ३ लज्जागोप्यं
४ C मूर्खो मुमूर्षुः ५ C तत्करं कर्करं D तत्करे

यैव तथाकृते तमिलापालं शिलया तया कालधर्म-
मवापय्य स्वयमेव भूपतिरभूत्। तथा स सवितृप्रसा-
दीकृतहयेऽधिरूढो नभश्चर इव स्वैरविहारी परा-
क्रमाक्रान्तदिग्वलयश्चिरं राज्यं कुर्वन् जैनमुनि-
संसर्गात्प्रादुर्भूतसम्यक्त्वरत्नः श्रीशत्रुञ्जयस्य महा-
तीर्थस्यामानमहिमानमवगम्य जीर्णोद्धारं चकार॥
कदाचिच्छिलादित्यं सभापतीकृत्य चतुरङ्गसभायां
पराजितेन देशत्यागिना[१] भाव्यमिति पणबन्धपूर्वं
सिताम्बरसौगतयोर्वादे संजायमाने पराजितान्
सिताम्बरान्स्वविषयात्सर्वान्निर्वास्य श्रीशिलादि-
त्यजामेयम[२]मेयगुणं मल्लनामानं क्षुल्लकं तत्र स्थितं
समुपेक्ष्य स्वयं जितकाशिन[३]: श्रीविमलगिरौ श्री-
मूलनायकं श्रीयुगादिदेवं बुद्धरूपेण पूजयन्तो बौ-
द्धा यावद्विजयिनस्तिष्ठन्ति तावत्स मल्लः क्षत्रकुलो-
द्भवत्वात्तस्य वैरस्याविस्मरन् कृतप्रचिकीर्षुर्जैनद-
र्शनाभावात्तेषामेव संनिधावधीयन्रात्रिन्दिनं त-
ल्लीनचित्तः कदाचिद्ग्रीष्मवासरेषु निशीथकाले नि-
द्रामुद्रितलोचने समस्तनागरिकलोके दिवाभ्यस्तं
शास्त्रं महताभियोगेनानुस्मरन् तत्कालं गगने सं-

१ C देशताडितेन २ C यामयं भागिनेयं ३ A जितकासिनः

चरत्या श्रीभारत्या के मिष्टा इति शब्दं पृष्टः स परितो वक्तारमनवलोक्य वल्ला इति तां प्रति प्रतिवचनं प्रतिपाद्य पुनः षण्मासान्ते तस्मिन्नेवावसरे प्रत्यावृत्तया देव्या केन सहेति भूयोभिहितस्तदा त्वनुस्मृतपूर्ववाक् गुडघृतेनेति प्रत्युत्तरं ददानस्तदवधानचमत्कृतयाभिमतं वरं वृणीष्वेत्यादिष्टः सौगतपराजयाय कमपि प्रमाणग्रन्थं प्रसादीकुरु । इत्यर्थमभ्यर्थयन् नयचक्रग्रन्थार्पणेनानुजगृहे । अथ देवीप्रसादादेवागततत्त्वैः श्रीशिलादित्यमनुज्ञाप्य सौगतमठेषु तृणोदकप्रक्षेपपूर्वं नृपतिसभायां पूर्वोदितपणबन्धपूर्वकं कण्ठपीठावतीर्णश्रीवाग्देवताबलेन श्रीमल्लस्तांस्तरसैव निरुत्तरीचकार । अथ राजाज्ञया सौगतेषु देशाद्गतेषु जैनाचार्यैश्चाहूतेषु स मल्लो बौद्धेषु जितेषु तेषु वादीति । तदनु भूपाभ्यर्थितैर्गुरुभिस्तस्मै पारितोषिके सूरिपदं ददे । श्रीमल्लवादिसूरिनामा गणभृत्प्रभावकतया नवाङ्गवृत्तिकारश्रीअभयदेवसूरिभिः प्रकटीकृत-

१ A B अनिमित्तं २ C प्रसादतस्तैर्देवावगततत्त्वैः

३ C D देशोद्गतेषु C वादिषु ४ A तस्य ५ चक्रे

६ C नवाङ्गवृत्तिकारश्राभयः देवसूरिभिः प्रगटीकृतः श्री-

श्रीस्तम्भनकस्य तीर्थस्य विशेषोन्नत्यै श्रीसङ्घेन चिन्तायिकत्वे[1] नियोजितः ॥ इति मल्लवादिप्रबन्धः॥

अथ मरुमण्डले पल्लीग्रामे काकूपाताकौ भ्रातरौ निवसतस्तयोः कनीयान्धनवान् ज्यायांस्तु तद्गृहभृत्यवृत्त्या वर्तते । कस्मिंश्चिन्निशीथसमये दिवसकर्मवृत्तिश्रान्तः प्रावृट्काले काकूः[2] प्रसुप्तः कनीयसाभिदधे । भ्रातः स्वकीयकेदाराः पयःपूरैः स्फुटितसेतवस्तव तु निश्चिन्ततेत्युपालब्धः स तदात्यक्तश्रस्तरः[3] स्वं निन्दन् कुद्दालं स्कन्धे निवेश्य यावत्तत्र याति तावत्कर्मकरान् स्फुटितसेतुबन्धरचनापरान्समालोक्य के यूयमिति पृष्टाः भवद्भ्रातुः कामुकाः[4] इत्यभिहिते क्वापि मदीयाः कामुकाः सन्तीति पृष्टे वलभ्यां सन्तीति ते प्राहुः। अथ सोप्यवसरे सर्वस्वं पिठरे आरोप्य तं मूर्द्ध्नि[5] दधानः श्री वलभीमवाप्य गोपुरसमीपवर्त्तिनामाभीराणां समीपेऽवसत्[6] । अत्यन्तकृशतया तै रङ्क इति दत्ताभिधानस्तार्णमुटजं विधाय तदवष्टम्भेन यावत्तस्थौ

---

१ A B श्रीमल्लेन चिन्तायिकत्वं २ A D काकूआकः
३ शय्या ४ कर्मकराः ५ B अथ स पिठरे सर्वस्वमारोपितं मूर्द्ध्नि ६ C सन्निधौ निवसन्

तावत्कश्चित्कार्पटिकः कल्पपुस्तकप्रमाणेनं[1] रैवतकशैलादलाबुना सिद्धरसमादाय मार्गमतिक्रामन् काकूयतुम्बडी[2]त्यशरीरिणीं वाणीमाकर्ण्य विस्मयस्मेरमना जातभीर्वलभीपरिसरे तस्य छद्मनो वणिजः सद्मनि रङ्क इति तन्नामतो निशङ्कतया तत्सरसमलाबु तत्रोपनिधीचक्रे । स स्वयं श्रीसोमेश्वरयात्रायां गतः । कस्मिन्नपि पर्वणि पाकविशेषाय चुल्हीनियोजितायां तापिकायां[3]मलाबुरन्ध्राद्गलितरसबिन्दुना हिरण्मयीं तां निभाल्य स वणिग् तं सिद्धरसं चेतसा निर्णीय तदलाबुसहितगृहसर्वस्वमन्यत्र नियोज्य स्वगृहं प्रदीपकेन भस्मीकृत्य परस्मिन्गोपुरे सौधं निर्माप्य तत्र निवसन्, कदाचित्प्राज्याज्यविक्रयकारिण्याः[4] स स्वयं घृतं तोलयंस्तदक्षयं[5] निरीक्ष्य घृतपात्राधः कृष्णचित्रककुण्डलिकां[6] विमृश्य केनापि कैतवेन तद्व्यत्ययादपहृत्य चित्रकासिद्धिं स्वीचकार। कदाचित्तस्यागण्यपुण्यवैभववशात्सुवर्णपुरुषसिद्धिरजायत । इत्थं त्रिविधसिद्धया कोटिसंख्याभिधानानि धनानि

१ रसानयशास्त्रोक्तरीत्या २ C काकतुम्बडीति सिद्धरसात्
३ तपेलीति भाषायाम् C ४ कारिणा- ५ अक्षीणं ६ A कुण्डलियां

संगृह्यापि कदर्यवर्यतया क्वापि सत्पात्रे तीर्थे वा-
नुकम्पया वा तस्याः श्रियो न्यासो दूरे तिष्ठतु प्र-
त्युत सकललोकसंजिहीर्षया तां लक्ष्मीं सकलस्य
विश्वस्य कालरात्रिरूपामदर्शयत्। अथ स्वसुताया
रत्नखचितकङ्कतिकाया, राज्ञा स्वसुतायाः ।
प्रसभमपहृतायास्तद्विरोधानुरोधात्स्वयं म्लेच्छम-
ण्डले गत्वा वलभीभङ्गाय तद्याचितकाञ्चनकोटी-
रस्मै[2] समर्प्य प्रयाणमचीकरत् । तदनुपकृतस्तु
एकः छत्रधरः निशाशेषे सुप्तजाग्रदवस्थेऽवनीपतौ[4]
पूर्वसंकेतितेन केनापि पुंसा सममित्यालापमकरो-
त् । अस्मत्स्वामिनां मन्त्रेऽमूर्खः कोपि नहि[5] यद-
यमश्वपतिमहीमहेन्द्रः केनाप्यज्ञातकुलशीलेनासा-
धुना साधुना वापि वणिजा नामकर्मभ्यां रङ्केन
प्रेरितः सूर्यपुत्रं शिलादित्यं प्रति यश्चचालेति प-
थ्यां तथ्यां तद्वाचमाकर्ण्य किञ्चिच्चेतसि विचिन्त-
यन् तस्मिन्नहनि नृपः प्रयाणविलम्बमकरोत्। अ-

---

१ C कङ्कतिकायां स्वसुताकृते प्रसभमुपहृतायां २ D तद्याचिताः काञ्चनकोटीस्तस्य नवकोटीरस्य ३ A एकच्छत्रधरो ४ C निशासौधे सुप्तजाग्रदवस्थे पृथिवीपतौ ४ B D मूषकोपि नहि

थ रङ्कः साशङ्कस्तद्वृत्तान्तं निपुणवृत्त्यावगम्य काञ्च-नदानेन तस्य काञ्चन तृप्तिमासूत्र्य पुनः परस्मि-न्प्रत्यूषे विचार्याविचार्य वा कृतप्रयाणोयं महान-रेन्द्रश्चालितः। सिंहस्यैकपदं यथेति न्यायाच्चलित एव राजते ॥ यतः ॥

मृगेन्द्रं वा मृगारिं वा हरिं व्याहरतां जनैः।
तस्य चोभयथा व्रीडा लीलादलितदन्तिनः ॥१॥

इत्यस्य स्वामिनो निःसीमपराक्रमस्य सन्मुखे कः स्थास्यातीति तद्गिरा प्रोत्साहवान् म्लेच्छप-तिर्भेरीनिनादबधिरितरोदःकन्दरं प्रयाणमकरोत्। इतश्च तस्मिन्वासरे वलभ्यां श्रीचन्द्रप्रभबिम्बमम्बा-क्षेत्रपालाभ्यां सहितमधिष्ठातृबलाद्गगनमार्गेण शि-वपत्तनभुवि भूषणीबभूव। रथाधिरूढा श्रीव-र्द्धमानप्रतिमा चादृष्टवृत्त्याधिष्ठातृबलेन संचरन्ती-आश्विनपूर्णिमायां श्रीमालपुरमलंचकार। अ-न्या अपि सातिशया देवमूर्त्तयो यथोचितं भूभाग-मलंचक्रुः। तत्पुर्देवतया चै श्रीवर्द्धमानसूरीणां चोत्पातज्ञापनावसरे ॥

---

१ B D जनाः २ चकारात्स्वज्ञानेन ज्ञातमपि तथैवान्यैर्मुनिभिर-पीति द्वितीयचार्थः

का त्वं सुन्दरि जल्प देविसदृशे[1] किं कारणं रोदिषि
भङ्गं श्रीवलभीपुरस्य भगवन् पश्याम्यहं प्रत्ययम्[2] ।
भिक्षायां रुधिरं भविष्यति पयो लब्धं भवेत्साधुभिः
स्थातव्यं मुनिभिस्तदेव रुधिरं यस्मिन्पयो जायते१

एवमुत्पातेषु संजायमानेषु पुरीपरिसरप्राप्तेषु म्लेच्छसैन्येषु देशभङ्गसमासादितपङ्केन रङ्केन पञ्चशब्दवादकान्कनकवितरणैर्बहुधा विभेद्य[3] तस्य हयस्यारोहणकाल एव तैः क्रियमाणे प्रतिशब्दसंराविणे तार्क्ष्यवदुड्डीय तस्मिन्स्तार्क्ष्ये[4] दिवमुत्पतति किंकर्त्तव्यतामूढः स शिलादित्यस्तैर्निजघ्ने। तदनु तैर्लीलयैव वलभीभङ्गः सूत्रितः ॥

*पणसयरीवासाइं[5] तिन्निसयाइं अइक्कमे ऊण ।
विक्कमकालाउ तउ वलहीभङ्गो समुप्पन्नो ॥ १ ॥

---

१ C D देवसदृशे २ A मत्ययः ३ D विबोध्य ४ अश्वे
५ A वाससयं

---

*पञ्चसप्ततिवर्षाणि त्रिशतानि अतिक्रमे तु ।
विक्रमकालात् वलभीभङ्गः समुत्पन्नः

क. सत्यपुरकल्पे प. ३७ तु

तेण सन्नेण विक्कमाउ अठाहिं सएहिं पणयालीहिं वरिसाणं गएहिं भञ्जिऊण सो राया मारिउ । गउ सट्ठाणं हम्मीरो । तउ अन्नो ग-

इति श्रीशिलादित्यराज्ञ उत्पत्तिस्तथा रङ्कोत्पत्तिस्तत्कृतो वलभीभङ्गश्चेति प्रबन्धत्रयम्[१] ॥

अथ श्रीरत्नमालनगरे श्रीरत्नशेखरो नाम राजा स कदाचिद्दिग्यात्रायाः प्रत्यावृत्तः पुरप्रवेशमहोत्सवे विपणिश्रेणिं शृङ्गारितां मृगयमाणः कस्मिन्नपि हट्टे काष्ठपात्रीयुतं कुद्दालमालोक्य सौधप्रवेशानन्तरं प्राभृतपाणौ महाजने समायाते सुखिनो यूयमिति नृपालापानन्तरं तैर्न सुखिनो वयमिति विज्ञप्ते विभ्रमभ्रान्तस्तावद्विसृज्य[३] कस्मिन्नपि निर्जनावसरे[४] पुरप्रधानानाहूय किं न सुखिनो यूयमिति पृष्टे अपि च काष्टपात्रीयुतकुद्दालस्योर्ध्वीकरणकारणमनुयुक्तास्ते इति विज्ञपयामासुः ।

यत्र स्वामिना काष्टपाल्यामेकमेवमेवधारितं, स वित्तेश्वरः स्ववित्तसंख्यामजानन् काष्टपात्रिकैः स्ववि-

ज्जणवई गुज्जरं भञ्जित्ता तवो वलन्तो पत्तो सच्चउरे

[ तेन सैन्येन विक्रमात् अष्टभिः शतैः पञ्चाशाद्भिः वर्षाणां गतैः [ वलभीं ] भङ्क्त्वा स राजा मारितः गतः स्वस्थानं हम्मीरः । ततोऽन्यः गज्जणपातिः गूर्जरं भङ्क्त्वा ततो वलन् प्राप्तः सत्यपुरे ]

१ D व्यवहारिकाकृत्पत्तिः २ C समाप्तिमफणीत् ३ तान् विसृज्य ४ A अर्ध्यजनावसाने ५ B D पाश्यादिकं

त्तसंकलनां ज्ञापयितुं संकेतश्चक्रे। तथा च न सुखिनो वयमिति स्वामिनः संतानाभावात्।कोटीध्वजकुलाकुलं नगरमिदं स्वामिना चिरकाललालितमन्वयाभावात्केन परां कोटीं नीयत इति "पुरातनस्यान्तःपुरस्य वन्ध्यत्वं बुद्ध्या निधाय नृपवंशवृद्धये नौतनमन्तःपुरं[1] चिकीर्षवः" स्वामिनोनुमत्या पुष्यार्कदिने केनापि प्रधानशाकुनिकेन समं शकुनागारं प्राप्ताः। कामपि दुर्गतनितम्बिनीमासन्नप्रसवां काष्ठभारवाहनैकवृत्तिं शिरोधिरूढदुर्गामालोक्य शकुनवित्तामक्षतादिभिः पुनरभ्यर्चयन्[2], तैः किमेतदिति पृष्टे प्राह। यः कश्चिदाधाने पुत्रः स एवात्र नृपो भावी चेद्बृहस्पतिमतं प्रमाणमित्यसंभाव्यं वृत्तान्तमनुमन्यमानाः मानोन्नतये नृपाय व्याघुट्य यथावस्थितं तत्स्वरूपं निवेदितवन्तः। अथ खेदमेदुरमना नृप आप्तपुरुषैस्तां गर्त्तापूरीकर्त्तुं प्रारभ्यमाणामिष्टं दैवतं स्मरेत्यभिहिते सा मरणभयव्याकुला प्रदोषकाले यावत्ताननुज्ञाप्य शङ्काभङ्गं[3] कुरुते तावत्साऽप्रसूत पुत्रं। तं तत्र परित्यज्य पुनरुपागतां गर्त्तापूरीकृत्य पुनरपि राज्ञे विज्ञपयाञ्चक्रुः। अथ काचि-

१ A नौतनं पुरं २ A C अभ्यर्चयत ३ [ मलमूत्रत्यागं ]

न्मृगी संध्याद्वयेपि पयःपानं कारयन्ती तमनुदिनं वृद्धिमन्तं कारयामास। तस्मिन्नवसरे देव्या महालक्ष्म्याः पुरतः ढङ्कशालायां[1] हरिण्याश्चतुर्णां पादानामधः शिशुरूपं नाणकं नूतनं संजायमानमाकर्ण्य क्वचिन्नवीनो नृप उत्पन्न इति प्रसृतवार्त्तया श्रीरत्नशेखरः सैन्यानि प्रतिदिशं तं शिशुं विशसितुं प्राहिणोत्। तैर्यत्र तत्रावलोक्य लब्धोपि बालहत्याभीतैः स सायं पुरगोपुरे गोकुलखुररवैर्यथायं बालो विपन्नः सन्स्वयमपवादाय न भवतीति दूरस्थैः स्तैर्यावन्मुक्तस्तावत्तत्रायातं गोकुलं तं मूर्त्तिमन्तं पुण्यपुञ्जमिव बालमालोक्य तैरेव पदैः स्तम्भितामिव तस्थौ। अथ पाश्चात्यपक्षात्पुरोभूय नृषभो वृषभासुरं[2] तं शिशुं पदानामन्तराले निधाय गोधनं सकलमपि प्रेरयामास। अथ तं वृत्तान्तं नृपोऽवधार्य तैः समं तमपरेतं लोकैर्विज्ञप्तश्च[3] तं बालमानीय पुत्रीयमाणः श्रीपुञ्ज इति दत्ताभिधानः प्रवर्द्धयामास। अथ श्रीरत्नशेखरे राज्ञि दिवं गते तस्य राज्ञः कृताभिषेकस्य साम्राज्यं पालयतः

---

१ C टङ्कशालायाः  २ नृषेण पूर्वपुण्येन देदीप्यमानं। वृषः कामदेवस्तद्वद्भासुरं  ३ B सामन्तनगरलोकः

पुत्री समजनि सा च संपूर्णसर्वाङ्गावयव-सुन्दरापि कपिमुखी तेन वैराग्येण विषय-विमुखतां बिभ्राणा श्रीमातेति नामधेयं बभार । सा कदाचिज्जातजातिस्मृतिः पितुरग्रे स्वं पूर्व-भवं निवेदितवती, यदहमर्बुदाद्रौ पुरा कपिपत्नीत्व-मनुभवन्ती कस्यापि शाखिन एकस्याः शाखायाः शाखान्तरं संचरन्ती केनापि तदतुल्येन शिल्पेन विद्धतालुः पञ्चत्वमासदत्। तदधोवर्त्तिनि कामितती-र्थकुण्डे यावद्गलितं[1] वपुः पपात तावत्तीर्थातिशया-न्मामकं वपुर्मानुषाकारमभवत् यन्मस्तकं तु तत्तथै-वास्ते तेनाहं कपिवदना। अथ श्रीपुञ्जनृपस्तस्यास्त-न्मस्तकं कुण्डे क्षेपयितुं निजान्पुरुषान्[2]समादिदेश । तैस्तु सुचिरात्तत्तदवस्थं[3] विलोक्य तथाकृते सा श्री-माता मानवानना समजनि । ततःप्रभृति सा मा-तरपितरावनुज्ञाप्याऽर्बुदसंख्यगुणा तस्मिन्नेवाऽर्बुदे तपस्यन्ती, कदाचिद्गगनगामिना योगिना ददृशे । स च तत्सौन्दर्यापहृतहृदयो गगनादुत्तीर्य प्रेमाला-पपूर्वकं त्वं मां कथं न वृणोषीति पप्रच्छ[4] । सेत्यवा-दीत् । साम्प्रतं तावत्क्षणदायाः प्रथमयामो व्य-

---

१ A गलित्वा २ A B आप्तपुरुषान् ३ C तत्र तदवस्थं ४ A पृष्टा

तीतस्तूर्ययामस्य ताम्रचूडेषु रुतमकुर्वाणेषु यद्य-स्मिन्नगे कयाचिद्विद्यया द्वादश पद्याः[1] कारयसि ततो भवन्तमभीष्टं करोमीति तदुक्तिसमनन्तरमेव तत्र कर्मणि चेटकपटकं नियोज्य यामद्वयेन नि-र्मापिते सर्वपद्यानिवहे श्रीमाता स्वशक्तिवैभवेन कृतकं ताम्रचूडारवं कारयन्ती तेनागत्य विवाहाय सज्जीभवेत्यभिदधे ।तव पद्याया निष्पाद्यमानायाः कुक्कुटरवः समजनिष्टेति तयोक्ते भवन्मायया कृतकं कृकवाकुरवं को न वेत्तीत्युत्तरं ददानः सरिन्नीरे त-ज्जाम्योपढौकितविवाहोपहारः, श्रीमात्रा समस्तावि-द्यामूलं तत्त्रिशूलमिहैव विहाय पाणिपीडनाय स-न्निहितो भवेत्याहूय, प्रेमोपहृतचित्ततया तत्तथा कृत्वा सामिप्यमुपागतः तत्पदयोः कृतकान् शुनो नियोज्य हृदये तेन त्रिशूलेनाहत्य मारितः । इत्थं निःसीमशीललीलायितेन स्वजन्मातिवाहितवती। तस्यामखण्डशीलायां व्यतीतायां[2] श्रीपुञ्जराजा तत्र शिखरबन्धरहितं प्रासादमकारयत् । यतः षण्मा-सान्ते तस्य गिरेरधोभागवर्त्ती अर्बुदनामा नागो यदा चलति तदा पर्वतकम्पो भवति । अतः शि-

१ B पद्यां ह्वद्यां [ २ मृतायाम्

स्वररहितास्तत्र सर्वेऽपि प्रासादाः ।

इति श्रीपुञ्जराजा तत्पुत्री श्रीमाता तत्प्रबन्धः ॥१॥

कदाचिच्चौड[1]देशे गोवर्द्धनो नाम राजाभूत् तदा-यःस्तम्भे निबद्धा[2] सभामण्डपपुरतो न्यायिना हन्य-माना न्यायघण्टा निनदति । अन्यदा तस्यैकसूनोः कुमारेण रथारूढेन पथि संचरता ज्ञानवृत्त्या कश्चि-द्वत्सतरो व्यापादितस्तन्माता सौरभेयी नयना-भ्यामजस्रमश्रूणि वर्षन्ती स्वपराभवप्रतीकाराय शृङ्गाग्रेण न्यायघण्टामवीवदत्तद्घण्टाटङ्कारं नृपो नि-शम्यार्जुनकीर्त्तिस्तमर्जुनी[3]वृत्तान्तं मूलतोवगम्य नि-जं न्यायं परां कोटिमारोपयितुं प्रातः स्वयं स्यन्दने निवेश्य प्रियपुत्रोपि तमेकमेव पुत्रं पथि नियोज्य तदुपरि तां धेनुं साक्षात्कृत्य रथं भ्रामयामास । तस्य भूभुजः सत्वेन तस्य सुतस्य भूयसा भाग्य-वैभवेन रथस्य रथाङ्गे समुद्धृते स कुमारो न वि-पन्नः । इति गोवर्द्धननृपप्रबन्धः ॥

अथ कान्त्यां पुरि पुरा पुराणनृपतिश्चिरं राज्यं निर्गर्वः कुर्वन्कदाचिन्मतिसागराभिधानेन प्रियसु-

---

१ B चोड २ C स्तम्भनिबद्धा ३ अर्जुन इव कीर्त्तिर्यस्येति । अर्जुन्याः सकृद्वत्साया धेनोः

हृदा महामात्येनाऽनुगम्यमानो राजपाटिकायां व्रजन्विपर्यस्तध्वस्तेन[1] तुरङ्गेण नृपेऽपह्रियमाणे चतुरङ्गचमूचक्रे क्रमेण दवीयसि संजायमानेप्यतिजवे जवनेऽधिरूढः। तदानुपादिकः "कियत्यपि भूभागे उल्लङ्घिते सति मार्गोल्लङ्घनपरिश्रमादत्यन्तसुकुमारतया रुधिरपूरितत्वाद्विपन्ने नृपतौ" कृतानन्तरकृत्यस्तुरङ्गमं तद्वेषं च समादाय प्रदोषसमये पुरं प्रविशन् राज्यस्यानुसंधानाचिकीः श्रीमाल[2]भूपालभयात्कमपि नृपतेः सवयसं सरूपं च कुलालमालोक्य तं तद्वेषार्पणपूर्वकं तुरगेऽधिरोप्य सौधप्रवेशानन्तरं देव्यै तं व्यतिकरं निवेद्य सचिवेन पुण्यसार इति नाम विधाय स एव नृपतीचक्रे। इत्थं कियत्यपि गते काले स सचिवश्चमूसमूहवृतः प्रतिनृपतिं प्रति प्रतिष्ठासुः स्वप्रतिहस्तकप्रायं कमपि प्रधानपुरुषं नृपतिसेवाकृते निवेद्य स्वयं देशान्तरविहारमकरोत्। अथ स पृथिवीपतिर्निरङ्कुशो वेश्यापतिरिव[3] स्वैरविहारी तदनन्तरं पुरकुम्भकारान्समस्तानाहूय मृन्मयान् हयान् करिकलभकरभादींश्च निर्माय

1 B C विपर्यरतायस्तेन 2 C सीमाल. 3 B वेशापतिरिव

तैः समं चिरं चिक्रीड । एवं स्थिते समस्तराजलोकस्यावहेलनां नृपतेर्निशम्य ततः स्कन्धावारावारात् सचिवोल्पपरिच्छदो नृपमुपेत्येत्यवादीत् । यस्त्वमिदानीमेव विस्मृतकारुभावः स्वभावचलाचलतया[1] यदि कामपि मर्यादां न मन्यसे तदा त्वां निर्विषयीकृत्य कमप्यपरं कुलालबालं भूपालं करिष्यामीति तदुक्तिक्रुद्धः स नृपः सभायामुपांशुभूमौ कोत्र भोः, इति व्याहृतिसमनन्तरमेव सज्जीभूतैश्चित्रपदातिभिः स सचिवः संदानितः । तदसंभाव्यं महदाश्चर्यं विमृश्य तत्प्रभुप्रभावाविर्भावचमत्कृतचित्तस्तत्पदयोर्निपत्य स्वं मोचयितुमत्यर्थं सभ्यर्थयन् नृपेण तथा कारिते स सभक्तिकं विज्ञपयामास। भवतः साम्राज्यदाने निमित्तमात्रोऽहं तव प्रभावादालेख्यरूपाणि सचेतनीभूयेत्थं निदेशवशंवदानि भवन्ति तत्र प्राकृतान्येव[2] कर्माणि कारणमत एव भवान्पुण्यसार इति सान्वयनामा ॥ इति पुण्यसारप्रबन्धः ॥

अथ पुरा कुसुमपुरे[3] नन्दिवर्द्धननामा राजकु-

१ B बलाबलतया २ C प्राक्तनानि ३ पाटलीपुत्रनगरेऽत्र चन्द्रनृपः

मारः छत्रधरेण समं देशान्तरविलोकनकुतकी पितरावनापृछ्य यदृच्छया गच्छन् प्रत्यूषकाले क्वापि पुरे प्राप्तस्तत्राऽपुत्रिणि नृपतौ पञ्चत्वमुपागते सति सचिवैरभिषिक्तपट्टहस्ती निखिलेपि नगरे यदृच्छया बभ्राम[1]। तत्रागतनृपकुमारमासन्नमपि दुःस्वप्नमिव विस्मृत्य परं छत्रधरमभ्यषिञ्चत्। स च तत्प्रधानैर्महता महोत्सवेन पुरं प्रवेश्यमानो राजा कुमारमपि तथैव महत्या प्रतिपत्त्या सह गृहीत्वा सौधं गतः। अहं राजलोकस्वामी त्वं तु नर्मत्युचितैरुपचारवचनैस्तमन्तरिमेवमारराध[2]। स तु राजा राजगुणानामनर्हो निरवधिदुर्मेधा वर्णाश्रमपालनानभिज्ञो[3] यथा२ प्रजापीडनपरः साम्राज्यं कुरुते तथा तथा पशुपतिमूर्द्ध्नि विधृतेराजेव स कुमारः प्रतिदिनं हीयते। कस्मिन्नप्यवसरे तं तथास्थितं कुमारं स नृपतिस्तत्तनुताहेतुं पृच्छन् दुर्मेधतया प्रजाः पीडयसि तेनात्यन्तमनौचित्येन कृशतामावहामि।

---

१ भ्रामं भ्रामं ससंभ्रमं २ B एव रुरोध ३ C पालनपारिश्रमानभिज्ञः ४ निधृत. ५ [ चन्द्रइव

*वासो जडाण मज्झे दोजीहा सामिसवणपडिलग्गा[1]।
जीविज्जइ तं[2] लाहो झीणित्ते विम्हउं[3] कीस ॥ ३॥

इति मया गाथार्थः सत्यापितोऽस्तीति वद्वचनानन्तरं यदस्याः प्रजायाः पापनिरताया अपुण्योदयेनावश्यंभाविपीडनावसरेऽहं नृपतीकृतः। यदि प्रजायाः परिपालनां लोकेशोऽभ्यलिखिष्यत्तदा भवत एव पट्टहस्ती पट्टाभिषेकमकरिष्यादिति तदुक्तियुक्तिभ्यां भेषजाभ्यामिव निगृहीतरुक् स कुमारो वपुःपीवरतां बभार ॥ इति कर्मसारप्रबन्धः ॥

अथ गौडदेशे लक्षणावत्यां नगर्यां श्रीलक्ष्मणसेनो नाम नृपतिरुमापतिधरसचिवेन सर्वबुद्धिनिधिना चिन्त्यमानराज्यश्रिरं राज्यं चकार। स त्वनेकमत्तमातङ्गसैन्यसङ्गादिव मदान्धतां दधानो मातङ्गीसङ्गपङ्ककलङ्कभाजनमजनि। उमापतिधरस्तु तद्व्यतिकरमवगम्य प्रकृतिक्रूरतया च स्वामिनोऽनालोकनीयतां च विचिन्त्य प्रकारान्तरेण तं बो-

*वासो जडानां मध्ये द्विजिव्हाः स्वामिश्रवणप्रतिलग्नाः।
जीव्यते यत्तत् लाभः क्षीणत्वे विस्मरः कीदृशः॥

1 A सवण. 2 C जीवजइ जइ 3 C हाणन्ते विम्हिउ

धयितुं सभामण्डपस्य भारपट्टे गुप्तवृत्त्यामूनि काव्यानि लिलेख ॥

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्त्यशुचयः स्पर्शात्तवैवापरे ।
किं चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः १
त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि तनुषे हानिर्न हेम्नामपि ।
मूर्द्धन्यं कुरुषे जडांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोसि किं ब्रूमहे २
छिन्नं ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि
क्षीवः क्रीडति मातृभिर्यदि रतिं धत्ते श्मशाने यदि ।
सृष्ट्वा[1] संहरति प्रजां[2] यदि तथाप्याधाय[3] भक्त्या मन-
स्तं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः ३
एतस्मिन्महति प्रदोषसमये राजा त्वमेकस्ततो
लक्ष्मीमम्बुरुहां पिधाय कुमुदे किं नो तनोषि श्रियः ।
यद्ब्राह्मी स्थितिरत्र यच्च सुमनःश्रेणीषु संभावना
त्वं तावत्कतमोसि तत्तिरयितुं[5] धातापि नैव क्षमः ४

१ A भवन्ति २ A B प्रजां ३ C आदाय ४ D तथैव
५ A तिरायितुं [ निर्द्धारयितुं आच्छायितुं वा

सद्वृत्तसद्गुणमहार्हमनर्घ्यमूल्य-
कान्ताघनस्तनतटोचितचारुमूर्त्ते ।
आः पामरीकठिनकण्ठविलग्नभग्न
हा हार हारितमहो भवता गुणित्वम् ॥ ५ ॥

कस्मिन्नप्यवसरप्रस्तावे[2] तानि वीक्ष्य तदर्थमवगम्य तस्मिन्नन्तर्द्वेषं दधौ । यतः ।

प्रायः सन्ति प्रकोपाय सन्मार्गस्योपदेशनम् ।
विलूननासिकस्येव यद्वदादर्शदर्शनम् ॥ १ ॥

इति न्यायात्सामर्षतया तं पदभ्रष्टं चकार । अथ स नृपतिः कदाचिद्राजपाटिकायां[3] प्रत्यावृत्तो दुरवस्थमेकाकिनमुपायविधुरं तं वीक्ष्य क्रोधाद्वधाय हस्तिपकेन हस्तिनं प्रेरयामास । स तु निषादिनं प्रति प्राह । यावदहं राज्ञोऽग्रे किञ्चिद्वच्मि तावज्जवान्निवार्यतां गजः । तद्वचनात्तेन तथा कृते उमापतिधरः प्राह ॥

नग्नस्तिष्ठति धूलिधूसरवपुर्गोपृष्ठिमारोहति
व्यालैः क्रीडति नृत्यति स्रवदसृग्चर्मोद्वहन्[4]दन्तिनः

१ A महर्घ्य. B महार्घ्य. २ A C सर्वावसरप्रस्तावे
३ C राज्यजयपाटिकायाः ४ A उद्वहद्दन्तिनाम्

आचाराद्बहिरेवमादिचरितैराबद्धरागा हरे[1]
सन्तो नोपदिशन्ति यस्य गुरवस्तस्येदमाचेष्टितम् ॥ १

इति तद्विज्ञानाङ्कुशेन वशंवदमनोगजो निजचरित्रैकवित्[2]सानुशयः स्वममन्दं निन्दंस्तद्व्यसनं शनैर्निषिध्य तं राजा पुनरेव प्रधानीचकार ॥

इति लक्ष्मसेनोमापतिधरयोः प्रबन्धः ॥

अथ काशीनगर्यां जयचन्द्र इति नृपः प्राज्यसाम्राज्यलक्ष्मीं पालयन्पङ्गुरिति बिरुदं बभार । यतो यमुनागङ्गायष्टियुगावलम्बनमन्तरेण चमूसमूहव्याकुलिततया क्वापि गन्तुं न प्रभवति । कस्मिन्नप्यवसरे तत्र वास्तव्यस्य कस्यापि शालापतेः पत्नी सूहवनाम्नी सौन्दर्यनिर्जितजगत्त्रयस्त्रैणा भीष्मग्रीष्मर्तौ जलकेलिं विधाय सुरसरित्तीरे तस्थुषी सा खञ्जनाक्षी व्यालमौलिस्थितं खञ्जनं वीक्ष्य तमसंभाव्यं शकुनं कस्यापि द्विजन्मनः स्नातुमायातस्य पदोर्निपत्य तद्विचारं पप्रच्छ । स निमित्तवित् चेन्मदादेशं सदैव तनुषे तदा तव विचारमहं निवेदयामीति तेनोक्ता तव पितृनिर्विशेषस्य सा मान्या मयाज्ञा, सदैव मूर्ध्ना तां वहामीति

१ A B रागो हरः २ C चारित्रे किञ्चित्

प्रतिज्ञापरायास्तस्याः सप्तमेऽहनि त्वमस्य नृपतेरग्र-महिषी भविष्यसीति आदिश्य द्वावपि यथागतं ज-ग्मतुः॥ अथ निमित्तविदा निर्णीते वासरे स राजा राजपाटिकायाः प्रत्यावृत्तः क्वापि रथ्यायां नेपथ्य-विहीनामपि अगण्यलावण्यपुण्याङ्गीं तां शालापति-बालां विलोक्य स्वचित्तसर्वस्वचौरीमूरीकृत्याग्रम-हिषीं चकार। तदनु तया कृतज्ञतया विप्रप्रतिज्ञां स्मरन्त्या नृपाय तस्मिन् विद्याधरनिमित्ते विज्ञप्ते पटहप्रणादपूर्वं तस्मिन् विद्याधरे आहूयमाने वि-द्याधराभिधानानां द्विजानां सप्तशतीमागतां विलो-क्य तमेकमुपलक्षितं पृथक् कृत्वा शेषेषु यथोचितं सत्कृत्य विसृष्टेषु नृपतिर्यथेप्सितं प्रार्थयेति विद्या-धरं विपद्विधुरं प्राह। राजादेशप्रमुदितेन तेना-ङ्गसेवा सदैवास्तु इति प्रार्थिते नृपतिना तथेति प्र-तिपन्ने तस्य निरवधिचातुर्यं पर्यालोच्य सर्वाधि-कारभारे धुरंधरो व्यधायि। स च क्रमेण संपन्न-संपन् निजद्वात्रिंशदवरोधपुरध्रीणामनुवासरं जा-त्यकर्पूरपूराभरणानि कारयन् प्राच्यानि निर्माल्यानी-त्यवकरकूपिकायां त्याजयन् साक्षाद्दैवतावतार इव

1 A सर्वस्वं चौरीकृत्य

दिव्यभोगान् भुञ्जानोऽष्टादशसहस्राणां[1][2] ब्राह्मणानामभिलषिताभ्यवहारदानादनु स्वयमश्नाति ॥ अथ कदाचित् नृपतिना वैदेशिकभूपतिमभिषेणयितुं चतुर्दशविद्याधरोपि प्रेषितो देशाद्देशान्तराण्यवगाहमानः क्वचिदिन्धनविहीने देशे विहितावासस्तेषां विप्राणां पाककाले सूपकाराणां तैलाभ्यक्तवस्त्रदुकूलान्येवेन्धनीकुर्वन् तान्विप्रान् रूढ्यैव भोजयामास। अथ प्रतिरिपुं निर्जित्य जितकाशितया व्यावृत्य प्राप्तनिजपुरीपरीसरः पिण्याकाभिलाषात् दुकूलज्वालनेन कुपितं भूपतिमवगम्य स्वं गृहमर्थिभिर्लुण्ठाप्य तीर्थोपासनवासनया संचरन् आनुपदिकेन नृपतिनानुनीयमानो मानोन्नततया नृपतेराशये स्वाभिलाषसंभवं निवेद्य कथंकथंचिदापृछ्य निजमवसानमसाधयत्। तदनन्तरं सूहवदेव्या[4] निजाङ्गजस्य कृते युवराजपदवीं याचितो नृपः संगृहिणीपुत्राया[3]स्मद्वंशराज्यं न युज्यते इति बोधिता तं पतिं जिघांसुः म्लेच्छानाहूतवती ॥ अथ स्थानपुरुषाणां समायातविज्ञप्तिकया तं व्यतिकरमवधार्य लब्धप-

१ A जङ्घासहस्राणां. २ C संख्यासहस्राणां ३ ( भोगार्थं रक्षिता वेश्यादिस्त्री संगृहिणी. ४ पद्मावतीनाम्नी देवी

द्मावतीवरप्रसादं सादरं कमपि दिग्वाससं निमित्तं पृष्टवान् स पद्मावत्याः सप्रत्ययं म्लेच्छागमनिषेधरूपसमादेशं नृपतेर्विज्ञप्तवान् ॥ अथ कियद्दिनानां प्रान्ते तान् संनिहितानाकर्ण्य स आशाम्बरः किमेतदिति पृष्टस्तस्यामेव निशि नृपतिप्रत्यक्षं पद्मावत्याः पुरो होममारभत ॥ अथ निरवद्याकृष्टिविद्यया होमकुण्डज्वालामालान्तरिता प्रत्यक्षीभूय श्रीपद्मावती तुरुष्कागमनिषेधमुक्तवती ॥ अथ सामर्षः क्षपणक[1]स्तां कर्णयोर्धृत्वा क्रोधानुबन्धात्तेषु संनिहितेषु किं भवत्यपि वितथं ब्रूते इति तेनोपालम्भिता सती सैवमवादीत् । त्वं यां पद्मावतीमतीव भक्त्या पृच्छसि सास्मत्प्रतापबलात्पलायांचक्रे । अहं तु म्लेच्छगोत्रजं दैवतं मिथ्याभाषणेन लोकं विश्वास्य म्लेच्छैर्विश्वासं कारयामीत्युदीर्य तस्यां तिरोहितायां म्लेच्छसैन्येन प्रातर्वाराणसीं वेष्टितां चेष्टया जानन् तद्धनुर्ध्वानैश्चतुर्दशशतीमितनिःस्वानयुग्मनिस्वनेऽपह्नुते बले सति प्रबलम्लेच्छकुलव्याकुलीकृतमनास्तं सूहवदेव्या अङ्गजं निजे गजे नियोज्य जान्हवीजले सगजो ममज्ज ॥ इति जयचन्द्रप्रबन्धः ॥

---

१ क्षपणको भिक्षुः

अथ जगद्देवनामा क्षत्रियः त्रिविधामपि[1] वीर-रकोटिरतां बिभ्रत्, श्रीसिद्धचक्रवर्त्तिनां सन्मान्योपि[2] तद्गुणमन्त्रवशीकृतेन नृपतिना परमर्द्दिश्रीपरम-र्द्दिनाहूतः सोपरोधं पृथ्वीपुरन्ध्रीकुन्तलकलापकल्पं कुन्तलमण्डलमवाप्य यावत्तदागमं श्रीपरमर्द्दिने द्वाःस्थो निवेदयति तावत्तत्सदसि काचिद्विटवनिता विवसना पुष्पचलनकां[3] नृत्यन्ती तत्कालमेवो-त्तरीयकमादाय सापत्रपा सा तत्रैव निषसाद ॥ अथ राजदौवारिकप्रवेशिताय श्रीजगद्देवाय स-प्रियालापप्रभृति सन्मानदानादनु प्रधानपरिधानं दुकूलं लक्ष्यमूल्यातुल्योद्भटपटयुगं[4] प्राभृतीकृत्य तस्मिन् महार्हासननिविष्टे सभासंभ्रमे भग्ने सति नृपस्तामेव विटनटीं नृत्यायादिदेश ॥ अथ सा औचित्यप्रपञ्चचञ्चुचातुर्यधुर्या श्रीजगद्देवनामा ज-गदेकपुरुषः साम्प्रतं समाजगाम तत्तत्र विवसनाहं जिह्रेमि । स्त्रियः स्त्रीष्वेव यथेष्टं चेष्टन्ते इति तस्या लोकोत्तरया प्रशंसया प्रमुदितमानसस्तं नृपप्रसा-दीकृतं वसनयुगं तस्यै वितीर्णवान् ॥ अथ श्रीप-

---

१ दयादानयुद्धाख्यां. २ [सिद्धराजेन सन्मानितोपि]
३ C D चलच्चलनका ४ लक्षमूल्यातुलया

रमर्दिप्रसादतो देशाधिपत्ये संजाते सति तदुपाध्यायः श्रीजगद्देवस्य मिलनाय समागतः काव्यमिदं प्राभृतीचकार ॥ तद्यथा ।

चक्रः पप्रच्छ पन्थं[2] कथय मम सखे क्वास्ति किं स प्रदेशो
वस्तुं नो यत्र रात्रिर्भवति भुवि चिरायेति स प्रत्युवाच ।
नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना
सूर्येनन्तर्हितेऽस्मिन्कतिपयदिवसैर्वासराद्वैतसृष्टिः १

अस्यै[3] काव्यस्य पारितोषिके तस्मै स स्थूललक्ष्यो लक्षार्द्धं वितताार ॥

क्षोणीरक्षणदक्षदक्षिणभुजे दाक्षिण्यदीक्षागुरौ
श्रेयःसद्मनि धन्यजन्मनि जगद्देवे जगद्दातरि ।
वर्त्तन्ते विदुषां गृहाः प्रतिदिनं गन्धेभगन्धर्वयो-
रालानद्रुमरज्जुदामघटनाव्यग्रीभवत्किंकराः॥ २ ॥

---

१ A D झेणश्रस्तदुपाध्यायः
A B अक्षत्रक्षतवालिनो भगवतः कस्यापि संगीतक-
व्यासक्तस्य च तस्य कुन्तलपतेः पुण्यानि[3] मन्यामहे
एकः कामदुधामदुग्ध मरुतः सूनोः सुबाहुद्वयीं
प्रत्यक्षप्रतिपक्षभार्गव भवानन्यस्य चिन्तामणिः ॥ १ ॥ चक्रः०

२ A पान्थं. ३ B पुण्पाणि

त्वयि जीवति जीवन्ति बलिकर्णदधीचयः ।
दारिद्र्यं तु जगद्देव मयि जीवति जीवति ॥ ३ ॥
दरिद्रान् सृजतो धातुः कृतार्थान् कुर्वतस्तव ।
जगद्देव न जानीमः कस्य हस्तो विरंस्यति ॥ ४ ॥
जगद्देव जगद्देवप्रासादमाधितिष्ठतः ।
स्वयशःशिवलिङ्गस्य नक्षत्रैरक्षतायितम् ॥ ५ ॥
अगाधः पाथोधिः पृथु धरणिपात्रं[1] विभु नभः
समुत्तुङ्गो मेरुः प्रथितमहिमा कैटभारिपुः ।
जगद्देवो वीरः सुरतरुरुदारः सुरसरित्
पवित्रा पीयूषद्युतिरमृतवर्षीति न नवम् ॥ ६ ॥

न नवमिति जगद्देवनार्पिता समस्या पण्डितेन पूरितेत्यादीनि बहूनि काव्यानि यथाश्रुतं ज्ञातव्यानि ॥ अथ श्रीपरमर्द्दिमेदिनीपतेः पट्टमहादेवी श्रीजगद्देवस्य प्रतिपन्नजामिः । कदाचित् राज्ञा श्रीमालभूपालपराजयाय प्रहितः श्रीजगद्देवः श्रीदेवार्चनं कुर्वन् छलघातिना परबलेन सैन्यं नैजमुपद्रुतं शृण्वन् तमेव देवतावसरं न मुमोच । तस्मिन्नवसरे प्रणिधिपुरुषमुखाज्जगद्देवपराजयमश्रुतपूर्वमवधार्य महिषीं श्रीपरमर्द्दी प्राह । भवद्भ्राता सं-

१ A पृथुरवनिपात्रं. २ निज.

ग्रामवीरनाथतां बिभ्राणोऽपि रिपुभिराक्रान्तः पलायितुमपि न प्रभूष्णुरजनि । इति नृपतेर्मर्माभिघातनर्मोक्तिमाकर्ण्य प्रत्यूषसंध्याकाले सा राज्ञी प्रतीचीदिशमालोकितवती राज्ञा किमालोकसे इत्यादिष्टे सूर्योदयमिति, मुग्धे किं सूर्योदयोऽपरस्यां दिशि जाघटीति, सा तु विरञ्चिप्रपञ्चः प्रतीपः प्रतीच्यामपि प्रद्योतनोदयो दुर्घटोपि घटते परं क्षत्रियदेवजगद्देवस्य भङ्गस्तु नेति दम्पत्योः प्रियालापः ॥ देवार्चनानन्तरं जगद्देवः पञ्चशत्या सुभटैः समं समुत्थितश्चण्डांशुरिव तमस्काण्डं, केसरिकिशोर इव गजयूथं, वात्यावर्त्त इव घनमण्डलं हेलयैव तद्दलयामास ॥ अथ परमर्दिनामा नृपो जगत्युदाहरणीभूतं परमैश्वर्यमनुभवन् निद्रावसरवर्जं रात्रिंदिवं निजौजसा चिच्छुरितं छुरिकाभ्यासं विदधानोऽशनावसरे परिवेषणाकुलं प्रतिदिनमेकैकं सूपकारमकृपः कृपाणिकया निघ्नन् षष्ट्यधिकशतत्रयेण भक्तकाराणां वर्षे निषेव्यमाणः कोपकालानल इति बिरुदं बभार ।

आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव
प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम् ।

प्रेक्षध्वं परमर्दिपार्थिवयशोराशेर्विकाशोदया-
द्वीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोहति॥१

इत्यादिभिः स्तुतिभिस्तूयमानश्चिरं राज्यसुख-
मनुबभूव। स च सपादलक्षक्षितिपतिना श्रीपृ-
थ्वीराजेन सह संजातविग्रहः समराजिरमधिरूढः
स्वसैन्ये पराजिते कान्दिशीकः कामपि दिशं गृही-
त्वा पलायनपरः स्वराजधानीमाजगाम। अथ त-
स्य पार्थिवस्यापमानितसर्वसेवको निर्विषयीकृतः
पृथ्वीराजराजसभामुपेतः प्रणामान्ते किं दैवतं पू-
ज्यते परमार्दिपुरे विशेषात्सुकृतिभिरिति स्वामिना-
दिष्टस्तत्कालोचितं काव्यमिदमपाठीत्।

मन्दश्चन्द्रकिरीटपूजनरसस्तृष्णा न कृष्णार्चने
स्तब्धः[1] शम्भुनितम्बिनीप्रणतिषु व्यग्रो विधातृग्रहः
नाथो नः परमर्दिनेन वदनन्यस्तेन संरक्षितः
पृथ्वीराजनराधिपादिति तृणं तत्पत्तने पूज्यते॥१

इति स्तुतिपरितोषितेनानुजग्राह। स तत्र
त्रिःसप्तकृत्वस्त्रासितम्लेछाधिपोपि द्वाविंशतिवेला-
यां स एव म्लेछाधिपतिः पृथ्वीराजराजधानीमुपे-
त्य निजदुर्द्धरस्कन्धावारेण समवात्सीत्। त्रासि-

१ A स्तब्धा

तमक्षिकेव भूयो भूयो रिपुरुपैतीति निजनृपतेरर-
तिं मनोगतामवगम्य प्रभोर्निःसीमप्रसादपात्राद्विती-
यमिवामात्रं तुङ्गनामा क्षात्रं तेजो वहन् सुभटको-
टीरः स्वप्रतिबिम्बरूपेण पुत्रेण समं म्लेछाधिपते-
रनीकं प्रविश्य निशीथसमये तस्य रिपोर्गुरूदरात्
परितः खदिराङ्गारधगधगायमानां परिखां निरीक्ष्या-
ङ्गजं जगाद । अस्यां मम प्रविष्टस्य पृष्टे पदं ददा-
नो म्लेछपतिं निगृहाणेति पितुरादेशान्ते का-
र्यमेतन्ममासाध्यतमं किं च जीवितकाङ्क्षया वप्तु-[2]
र्विपत्तिदर्शनं, तदहमस्यां विशामि भवन्त एव
तमन्तं नयन्तु । इत्युक्त्वा तेन तथा कृते स्वा-
मिकार्यं पर्याप्तप्रायं मन्यमानस्तमरातिं लीलया
निगृह्य यथागतमाजगाम । विभातभूयिष्ठायां नि-
शि विपन्नं स्वामिनं निरीक्ष्य परसैन्यं पलायांचक्रे ।
स तुङ्गसुभटस्तुङ्गप्रकृतिर्नृपतेः कदाचिन्न ज्ञापया-
मास । कस्मिन्नप्यवसरे राजमान्यतया नितान्तप-
रिचितां तुङ्गपुत्रवधूमवधूतमङ्गलवलयामालोक्य सं-
भ्रमात् पतिना पृच्छयमानोपि पयोधिरिव गम्भी-
रतया मौनमर्यादया किमप्यविज्ञपयन् निजशपथ-

२ A B वपुः [ वप्तुः पितुः]

दानपूर्वं पृष्टो निजगुणपातकं दुष्करमिति तथापि प्रभोरभ्यर्थनया निवेद्यमानमस्तीत्यभिधाय तद्वृत्तान्तं प्रत्युपकारभीरुर्यथावस्थितं निवेदयामास ।

इयमुच्चधियामलौकिकी
महती कापि कठोरचित्तता ।
उपकृत्य भवन्ति निःस्पृहाः
परतः प्रत्युपकारशङ्कया ॥ १ ॥

इति तुङ्गसुभटप्रबन्धः ॥ अथ कदाचित्तस्य म्लेच्छपतेः सूनुर्नृपतिः पितुर्वैरस्य स्मरन्, सपादलक्षक्षितिपतिर्विग्रहकाम्यया सर्वसामग्र्या समुपेतः पृथ्वीनाथस्य नासीरवीरधनुर्द्धरशरैः प्रावृषेण्यधाराधरधारासारैरिव तस्मिन्ससैन्ये त्रासिते पृथ्वीराजस्तदा तदानुपदिकीभावं भजन्, महानसाधिकृतपञ्चकुलेन विज्ञापितं करभीणां सप्तशत्यापि महानसपरिस्पन्दः सुखेनोह्यते नातः कियतीभिः करभीभिः प्रभुः प्रसीदत्विति विज्ञप्तो नृपतिर्म्लेच्छपतिमुच्छेद्य भवदभ्यार्थिताः करभीः प्रसादीकरिष्यामीति तत्संबोध्य पुनः प्रयाणं कुर्वन् सोमेश्वरनाम्ना प्रधानेन भूयो भूयो निषिध्यमानः, तत्पक्षपातभ्रा-

१ A सुखेनोह्यते ततः

न्त्या नृपतिना निगृहीकर्णः, तदत्यन्तपराभवात् तस्मिन् प्रभौ सामर्षो म्लेच्छपतिं प्राप्य तदभिभवप्रादुःकरणतस्तान् विश्वस्तान् पृथ्वीराजस्कन्धावारसन्निधौ समानीय पृथ्वीराजराजस्यैकादश्युपवासकृतपारणादनु सुप्तस्य तन्नासीरवीरैः सह समरसंरम्भे म्लेच्छाधिपतीनां जायमाने निर्भरनिद्रायमाणस्तुरुष्कैर्नृपतिर्निबध्य स्वसौधं नीतः । पुनरप्येकादश्युपवासपारणके नृपतेर्देवार्चनावसरे म्लेच्छराजेन प्रहितं तत्र पात्रीकृतमांसपाकं गुरूदरान्तर्नियुज्य तदैव देवताराधनवैयग्र्ये सति शुनापह्रियमाणे तस्मिन् पिशिते किं न रक्षसि यामिकैरित्यभिहितः करभीणां सप्तशत्या दुर्वहं यत्पुरा मम महानसं तत्सांप्रतं दुर्दैवयोगादीदृशीं दुर्दशां प्राप्तमिति कौतुकाकुलितमानसो विलोकयन्नस्मीति तेनोक्ते किं काचिदद्यापि त्वय्युत्साहशक्तिरवशिष्यत इति तैर्विज्ञप्ते यदि स्वस्थाने गन्तुं लभेत तदा दर्शयामि वपुःपौरुषमिति यामिकैर्विज्ञप्तो म्लेच्छभूपतिस्तत्साहसं दिदृक्षुस्तदीयां राजधानीमानीय पृथ्वीराजं तत्र राजसौधे यावदभिषेक्ष्यति तावत्तत्र चित्रशालायां शूकरनिवहैर्हन्यमानान् म्लेच्छानालो-

क्यामुना मर्माभिघातेनात्यन्तपीडितस्तुरुष्कपार्थिवः पृथ्वीराजं कुठारशिरश्छेदपूर्वं संजहार ॥

इति नृपतिपरमर्दिजगद्देवपृथ्वीपतीनां प्रबन्धाः ॥

अथ शतानन्दपुरे परिखीभूतजलधौ श्रीमहानन्दो नाम राजा मदनरेखेति तस्य राज्ञी अन्तःपुरप्राचुर्यात् पतिसंवननकर्म[1]निर्माणव्याप्रत्या[2] नानाविधान् वैदेशिकान् कलाविदश्च पृच्छन्ती कस्यापि यथार्थवादिनः सत्यप्रत्ययस्य कार्मणकर्मणे किंचित्सिद्धयोगमासाद्य तत्प्रयोगावसरे[3] ॥

मन्त्रमूलबलात्प्रीतिः पतिद्रोहोऽभिधीयते ।

इति वाक्यमनुस्मरन्ती सतीव तद्योगचूर्णं जलधौ न्यधत्त । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति तद्भेषजमाहात्म्याद्वशीकृतो वारिधिरेव मूर्त्तिमान् निशि तामुपेत्य रेमे । इत्थमकस्मादाधानवर्ती प्रतीकैस्तद्विधैर्निर्णीय सकोपो भूपो यावत्तस्याः प्रवासादिदण्डं कमपि विमृशति तावत्तस्याः संनिहिते निधननिर्बन्धे प्रत्यक्षीभूय जलधिरधिष्ठातृदैवतमहमिति स्वं ज्ञापयन् मा भैषीरिति तामाश्वास्य प्रति नृपं प्राह ।

---

१ वशीकरणकर्म २ A प्राप्त्या ३ D प्रयोजनावसरे

विवाहयित्वा यः कन्यां कुलजां शीलमण्डिताम् ।
समदृष्ट्या न पश्येत स पापिष्ठतरः स्मृतः ॥ १ ॥

इति त्वामवज्ञाकारिणं प्रलयकालमुक्तमर्यादया सान्तःपुरपरीवारं मज्जयिष्यामीत्यभिधाय क्वचित् क्वचित् पयांस्यपहृत्यान्तरीपान् प्रादुश्चकार । ता[illegible] सर्वाण्यपि लोकेषु कौङ्कणानीति प्रसिद्धानि ॥ इति कौङ्कणोत्पत्तिप्रबन्धः ॥

अथ पाटलीपुत्रपत्तने वराहनामा कश्चिद्ब्राह्मणाङ्गभूः आजन्म निमित्तज्ञानश्रद्धालुर्दुर्गतत्वादसून् रक्षितुं पशून् चारयन् क्वापि शिलातले लग्नमालिख्याकृततद्विसर्जनः प्रदोषकाले गृहमुपेतः। कृतसमयोचितकृत्यो निशीथकाले भोजनायोपविष्टो लग्नविसर्जनमनुस्मृत्य निरातङ्कवृत्त्या तत्र याति तावत्तदुपारि पारीन्द्रमप्युपविष्टमवगणय्य तदुदराधोभागे पाणिं प्रक्षिप्य लग्नं विमृजन् सिंहरूपमपहाय प्रत्यक्षीभूय रविरेव वरं वृणु इत्युवाच । अथ समस्तनक्षत्रग्रहमण्डलं दर्शयेति वरं प्रार्थयमानः स्वविमानेऽधिरोप्य तत्रैव नीतो वत्सरान्ते यावद्ग्रहाणां वक्रातिचारोदयास्तमनादीन् भावान् प्र-

१ A पोटलापुत्र.

क्षरूपान् परीक्ष्य पुनरिहायातो मिहिरप्रासादाद्वराह-
मिहिर इति प्रसिद्धाख्यः श्रीनन्दनृपतेः परमां मा-
न्यतां दधानो वाराहीसंहितेति नवं ज्योतिःशास्त्रं
रचयांचकार। अथ कदाचित्स निजपुत्रजन्मावसरे
निजगृहे घटिकां निवेश्य तया शुद्धजन्मकाललग्नं
निर्णीय जातकग्रन्थप्रमाणेन ज्योतिश्चक्रे। स्वयं प्र-
त्यक्षीकृतग्रहचक्रज्ञानबलात्तस्य सूनोः संवत्सरशत-
प्रमाणमायुर्निर्णीतवान्। जन्ममहोत्सवे चैकं श्री-
भद्रबाहुनामानं जैनाचार्यं कनीयांसं सोदरं विहाय
नृपप्रभृतिकः स कोपि नास्ति य उपायनपाणिर्न
जगाम। स निमित्तविज्जिनभक्ताय शकडालम-
न्त्रिणे तेषां सूरीणामनागमनकारणमुपालम्भगर्भि-
तं जगौ। तेन ज्ञापितास्ते महात्मानः संपूर्णश्रु-
तज्ञानकरतलकलितामलकफलवत्कालत्रयास्तस्य
शिशो[1]र्विंशतितमे दिने बिडालान्मृत्युमुपदिशन्तो
वयं नागता इति तेषामुपदेशभूतां वाचं वराहमि-
हिराय निवेदितायां, ततः प्रभृति निजकुटुम्बं त-
स्य शावस्यावश्यकीं तां विपदं निरोद्धुं बिडालर-
क्षायै शतश उपायान्कुर्वन्नपि निर्णीते दिने निशी-

१ शिशोः

धेऽकस्माद्बालमूर्ध्नि पतितयार्गलया स बालः परलोकमवाप। ततस्तच्छोकशङ्कुमुधिादिर्धवः श्रीभद्रबाहुगुरवो यावत्तद्गेहमायान्ति तावत्तद्गृहाङ्गणे समस्तनिमित्तशास्त्रपुस्तकान्येकत्र पिण्डीकृतानि संनिहितदहनान्यालोक्य किमेतदिति पृष्टः सांवत्सरः समत्सरस्तान् जैनमुनीनुपालम्भयन् एतानि संदेहकारीणि धक्ष्याम्येव यैरहमपि विप्रलब्धस्तेनेति सनिर्वेदमुदिते तैः श्रुतज्ञानबलात्तज्जन्मलग्नं सम्यक् तस्मै निवेद्य सूक्ष्मेक्षिकया तद्ग्रहबले ज्ञापिते विंशतिदिनान्येव भवन्ति। इत्थं विरक्तावपनीतायां स ज्योतिषिक[1] इति जगौ। यद्भवद्भिर्बिडालान्मृत्युरुपदिष्टस्तदेव व्यभिचारीति तेनाभिहिते तत्रार्गलां तामानाय्य तत्रोत्कीर्णं बिडालं दर्शयन्तो भवितव्यताव्यत्ययः किं कदापि भवतीति महर्षिभिरभिदधे। कस्मात् रुद्यते गतः कः परमाणवोऽनपायाः संस्थानविशेषनाशजन्मा शोकश्चेन्न कदापि मोहितव्यम्।

अभावप्रभवैर्भावैर्मायाविभवभावितैः।
अभावनिष्टं पर्यन्ते सतां न क्रियते तमः॥

---

१ ज्योतिर्विद्

इत्युक्तियुक्तिभ्यां प्रबोध्य ते महर्षयः स्वं पदं भेजुः। इत्थं बोधितस्यापि तस्य मिथ्यात्वध्वान्तान्तरितस्य कनकभ्रान्तिरिव तथात्राप्युन्मत्सरोच्छेकात्तद्भक्तानभिचारकर्मणा कांश्चन पीडयन् कांश्चन व्यापादयन् तद्वृत्तान्तं तेभ्यो ज्ञानातिशयादवधार्योपसर्गहरं पासमिति नूतनं स्तोत्रं रचयांचक्रुः॥ इति वराहमिहिरप्रबन्धः॥

अथ ढङ्काभिधानभूभृति रणसिंहनामा राजपुत्रस्तन्नन्दनां भूपलनाम्नीं सौन्दर्यनिर्जितनागलोकबालामालोक्य जातानुरागतया तां सेवमानस्य तस्य वासुकेः सुतो नागार्जुननामा समजनि। तेन पातालपालेन सुतस्नेहमोहितमनसा सर्वासामप्यौषधीनां फलानि मूलानि दलानि च भोजितस्तत्प्रभावान्महासिद्धिभिरलंकृतः सिद्धपुरुषतया पृथ्वीं विगाहमानः शातवाहननृपतेः कलागुरुर्गरीयसीं प्रतिष्ठामुपागतोपि गगनगामिनीं विद्यामध्येतुं श्रीपादलिप्तपुरे पादलिप्ताचार्यान् सेवमानो व्रतमतिभोजनावसरे पदे लेपप्रमाणेन गगनोत्पातितान् श्रीअष्टापदप्रभृतीनि तीर्थानि नमस्कृत्य तेषां स्वस्थानमुपेयुषां पादौ प्रक्षाल्य ज्ञातसप्तोत्तरशतसंख्यम-

हौषधीनामास्वादवर्णघ्राणादिभिर्निर्णीय च गुरून- वगणय्य कृतपदलेपः कृकवाकुकलापिवदुत्पत्यावटे निपतंश्च तद्व्रणश्रेणिजर्जरिताङ्गो गुरुभिः किमेतदित्य- नुयुक्तो यथावद्वृत्तान्तं निवेदयन् तच्चातुर्यचमत्कृतचे- तोभिस्तच्छिरसि पद्महस्तदानपूर्वकं षाष्टीकतन्दुलो- दकेन तानि भेषजान्यभ्यञ्ज्य तत्पादलेपाद्गगनगा- मी भूया इति तदनुग्रहादेकां सिद्धिमासाद्य श्रीपार्श्वनाथपुरतः साध्यमानो रसः समस्तस्त्रै- णलक्षणोपलक्षितपतिव्रतवनितामर्द्यमानः कोटि- वेधी भवतीति तन्मुखादाकर्ण्य च यत्पुरा समुद्रविजयदाशार्हेण त्रिकालवेदिनः श्रीनेमि- नाथस्य मुखान्महातिशायि श्रुत्वा श्रीपार्श्वनाथ- बिम्बं रत्नमयं निर्माप्य श्रीद्वारवत्यां प्रासादे न्यस्तं, द्वारवतीदाहानन्तरं समुद्रेण प्लावितायां तस्यां पुरि तत्र समुद्रे तस्मिन्बिम्बे तथैव विद्यमाने कान्तीयसांयात्रिकस्य धनपतिनाम्नो यानपात्रे दे- वतातिशयात् स्खलिते इह जिनबिम्बमस्तीति दिव्यवाचा निर्णीय नाविकांस्तत्र प्रक्षिप्य सप्तसंख्यै- र्मतन्तुभिः सन्दानितमुद्धृत्य निजायां पुरि चि- न्तातीतलाभात् स्वयंकृतप्रासादे न्यस्तवान् । तत्स-

र्वातिशायिबिम्बं नागार्जुनः स्वसिद्धरससिद्धये प-
हृत्य सेढीतटिन्यास्तटे तदेव विन्यस्य तत्पुरतो
रससाधनाय श्रीसातवाहनस्यैकपत्नीं चन्द्रलेखा-
भिधानां प्रतिनिशं सिद्धव्यन्तरसान्निध्यात्तत्रानीय
रसमर्दनं कारयति स्म । इत्थं भूयो भूयस्तत्र या-
तायाते सति बन्धुबुद्ध्या सा नागार्जुनपार्श्वे तदौ-
षधीनां मर्दनहेतुं पृच्छती, सोपि स्वकल्पनया को-
टिवेधरसस्य यथावस्थितं वृत्तान्तं निवेदयन ,तस्या-
श्च वचनगोचरातीतं सत्कारं कुर्वाणोनन्यसामान्य-
सौजन्यं प्रवर्द्धयामास । अथ कदाचित्तया निजा-
ङ्गजयोरस्मिन् वृत्तान्ते निवेदिते तौ तल्लुब्धौ राज्यं
परित्यज्य नागार्ज्जुनसमलंकृतां भुवमागतौ कैत-
वेन तस्य रसस्य जिघृक्षया गुप्तवेषौ यत्र नागा-
र्जुनो भुङ्क्ते तत्र तामर्थदानेन परितोष्य रसवार्त्तां
पृच्छतः । सा च तज्जिज्ञासया तदर्थं सलवणां रस-
वतीं कुर्वती षण्मास्यां व्यतीतायां तस्मिन् क्षा-
रामिति रसवतीं दूषयति सति, इङ्गितैः सिद्धं रस-
मिति ताभ्यां निवेदितवती । अथ प्रतिप्रन्नभागिने-
याभ्यां रसग्रसनलालसाभ्यां वासुकिना निर्णीत-

[ १ रसवतीविधायिनीं कांचित् ]

दर्भाङ्कुरमृत्युरिति परपरया ज्ञाततत्त्वाभ्यां तेनैवं शस्त्रेण तथैव स निजघ्ने। स रसः संप्रतिष्ठितत्वा-द्दैवताधिष्ठानाच्च[१] तिरोहितो बभूव। यत्र स रसस्त-म्भितस्तत्र स्तम्भनकाभिधानं श्रीपार्श्वनाथतीर्थं र-सादप्यतिशायि सकललोकाभिलषितफलप्रदं। ।-तः कियता कालेन तद्बिम्बं वदनमात्रवर्जं भूम्यन्त-रितं बभूव। अथ श्रीशासनदेवतादेशात् षण्मासीं यावदाचाम्लानि निर्म्माय कठिनीप्रयोगेण नवाङ्ग-वृत्तौ निवृत्तायां श्रीअभयदेवसूरीणां वपुषि प्रादुर्भूते प्रभूतरोगे पातालपालः श्रीधरणेन्द्रनामा सितस-र्परूपमास्थाय तद्वपुर्जिह्वया विलिह्य[२] प्रसद्य निरा-रामयीकृत्य तत्तीर्थं श्रीमदभयदेवसूरीणामुपदिदेश। श्रीसंघेन सह समागतास्तत्र ते सूरयः प्रस्रवन्तीं सुरभिं विलोक्य गोपालबालैर्निवेदितायां भुवि न-वं द्वात्रिंशतिकास्तवं कुर्वन्तस्त्रिंशत्तमवृत्तेन तत्र श्रीपार्श्वनाथबिम्बं प्रादुश्चक्रुः। देवतादेशेन[३] तद्वृत्तं गोप्यमेव निर्ममे॥

यन्मार्गेऽपि चतुःसहस्रशरदो देवालये योऽर्चितः

---

१ B D संप्रतिष्ठितदेवताधिष्ठानवशात् २ A लेलिह्य ३ A देवतावशेन

स्वामी वासववासुदेववरुणैः स्वावासमध्ये[1] ततः।
कान्त्यामिभ्यधनेश्वरेण महता नागार्ज्जुनेनार्चितः[2]
पायात्स्तम्भनके पुरे स भवतः श्रीपार्श्वनाथो
जिनः॥ १ ॥

इति नागार्ज्जुनोपत्तिस्तम्भनकतीर्थावतारप्रबन्धौ॥

अथावन्त्यां पुरि कश्चिद्विप्रः पाणिनिव्याकरणोपाध्यायतां कुर्वाणः सिप्रासरित्प्रान्तवर्त्तिचिन्तामणिगणेशप्रणामगृहीताभिग्रहः छात्रैः फक्किकाव्याख्यानप्रश्नादिभिरुद्वेजितः कदाचित् प्रावृषि तस्या सरितः पूरे प्रसर्पति कृतझम्पापातो दैवात् संघटितवृक्षस्तन्मूले करावलम्बनस्तरीमासाद्य प्रत्यक्षं परशुपाणिं प्रणमन् तेन तत्साहसानुष्ठानेन वरं वृणीष्वेत्यादिष्टः पाणिनिव्याकरणस्योपदेशं प्रार्थयमानस्तेन तथेति प्रतिपद्य खटिकार्पणपूर्वं[3] प्रतिदिनं व्याकरणे व्याख्यायमाने षण्मासपर्यन्ते व्याकरणे समर्थिते सति लम्बोदरं निर्विलम्बमनुज्ञाप्य प्रथमादर्शं सहादाय[4] तां पुरीं प्रविश्य स्थण्डिले कस्यापि पुरस्य निषण्ण एव सुष्वाप। ततः प्रत्यूषे प्रे-

१ A यो वार्द्धिमध्ये २ C अश्चितः ३ A षष्टिकार्पणपूर्वं
४ A सहादीयतां

ष्याभिस्तं तथावस्थितं प्राप्य[1] विपणिरमणी तद्वृ-त्तान्तं ज्ञापिता[2] सती ताभिरेव समानीय प्रेङ्खो-लपल्यङ्के मुक्तः । अहोरात्रत्रयान्ते किंचित्त्यक्तनिद्र-श्चित्रशालादिचित्रं चित्रकारि पश्यन् स्वर्लोकसमु-त्पन्नमात्मानं मन्यमानस्तया पणहरिणीदृशा ज्ञापि-तवृत्तान्तः स्नानपानभोजनादिभिर्भक्तिभिः परितो-षितो नृपसभायां समुपेतः पाणिनिव्याकरणं य-थावस्थितं व्याचक्षाणो नृपप्रभृतिपण्डितैरशेषैः स-त्क्रियमाणस्तदुपात्तं सर्वस्वं तस्यै समर्पयामास ।

अथ तस्य क्रमेण चतुर्णां वर्णानां स्त्रियश्चत-स्रः प्रिया अभवन् । तथा क्षत्रियाङ्गजः श्रीविक्र-मार्कः शूद्रीसुतो भर्तृहरिः[3] स हीनजातित्वात् भूमिगृहस्थो गुप्तवृत्त्याध्याप्यते। अपरे त्रयः प्रत्यक्षाः पाठ्यन्ते एवं भर्तृहरिसंकेतेन तेषामध्याप्यमा-नानां ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

इति पाठ्यमाने भर्तृहरी रज्जुसंकेतेऽसंजायमा-ने प्रत्यक्षच्छात्रैस्त्रिभिरुत्तरार्द्धे पृच्छ्यमाने कुपितः उपाध्यायं रे वेश्यासुत अद्यापि रज्जुसंकेतं न कु-

---

१ D प्रेक्ष्य २ B C तं वृत्तान्तं ज्ञापिता ३ A भर्तृहरः नृहरः

रुषे इत्याक्रुषन् प्रत्यक्षीभूय शास्त्रकारं निन्दन्

आयासशतलब्धस्य प्राणेभ्योपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १

इति पाठाद्वित्तस्यैकामेव गतिं मेने । तेन भर्तृहरिणा वैराग्यशतकादिप्रबन्धा भूयांसश्चक्रिरे ॥
इति भर्तृहर्युत्पत्तिप्रबन्धः ॥

अथ श्रीधारायां मालवमण्डनस्य श्रीभोजराजस्यायुर्वेदवेदी कश्चित् वाग्भटनामायुर्वेदोदितानि कुपथ्यानि विधाय तत्प्रभावात् रोगान् प्रादुःकृत्य पुनस्तन्निग्रहाय सुश्रुतविश्रुतैर्भेषजैः पथ्यैश्च तान्निगृह्य नीरमन्तरेण कियत्कालं जीव्यते इति परीक्षार्थं तत्परिहृत्य दिनत्रयान्ते पिपासापीडितताल्वोष्ठपुट इत्यपाठीत् ॥

क्वचिदुष्णं क्वचिच्छीतं क्वचित्क्वथितशीतलम् ।
क्वचिद्भेषजसंयुक्तं वारि क्वापि न वारितम् ॥ १ ॥

इति वारिसत्कारकारि वाक्यमिदमपाठीत् । तेन निजानुभूतो वाग्भटनामा प्रबन्धश्चक्रे । तस्य जामातापि लघुवाहडः श्वसुरेण वृद्धवाहडेन-

---

१ B इत्याक्रुष्टः २ A भर्तृहरिरज्जुसकेतं न कुरुषे इत्यादिष्टः स प्रत्यक्षीभूय धरासुकारं

सह राजमन्दिरे प्रयातः प्रत्यूषकाले श्रीभोजस्य शरीरचेष्टितं[1] विलोक्य बृहद्बाहडेनाद्य नीरुजो यूयमित्युक्ते लघोर्मुखभङ्गं विलोक्य श्रीभोजेन कारणं पृष्टः स स्वामिनः शरीरेऽद्य निशाशेषे कृष्णच्छायाप्रवेशसूचितो राजयक्ष्मणः प्रवेशोऽभूदिति दैवतादेशेनातीन्द्रियं भावं[2] विज्ञपयन्, तत्कलाकलापचमत्कृतेन राज्ञा तस्य व्याधेः प्रतीकारस्तयानुयुक्तः लक्षत्रयमूल्यं रसायनं निवेदयन्, षड्भिर्मासैस्तावता द्रव्यव्ययेन परमादरेण च तस्मिन् रसायने सिद्धे प्रदोषसमये तद्रसायनं काचमये कुम्पके न्यस्य नरेन्द्रपल्यङ्के निधाय प्रत्यूषे देवतार्चनानन्तरं तद्रसायनमत्तुमिच्छुः रसायनपूजावर्द्धापनाद्यनु सज्जीकृतायां समग्रसामग्र्यां स लघुरगदंकारी केनापि कारणेन तं काचकुम्पकं भूमावास्फाल्य बभञ्ज। आः किमेतदिति राज्ञोक्ते रसायनपरिमलादेव पलायिते[3] व्याधौ व्याधेरभावाद्धातुक्षयकारिणानेन वृथा स्थापितेनालं यद्द्या शर्वरीविरामे सति सा पूर्वोक्ता कृष्णा छाया

---

१ A शारीरेङ्गितं २ A दैवताशयेन B मात्मीयभवं
३ D पलायमाने

प्रभोर्वपुरपास्य दूरं गतैव दद्दशे इत्यर्थे देवः प्रमाणमिति तदीयसत्यप्रत्ययेन पारितोषितो राजा दारिद्र्यद्रोहि पारितोषिकं प्रसादीचकार ॥ अथ ते सर्वव्याधयस्तेन चिकित्सितेन भूतलादुच्छेदिताः स्वर्लोकेऽश्विनीकुमारवैद्ययोः स्वपराभवं निजगदुः॥ अथ तौ तया प्रवृत्त्या चित्रीयमाणमानसौ नीलवर्णविहङ्गमयुग्मीभूय व्याधिप्रतिभटस्य वाग्भटस्य धवलगृहवातायनतले वलभ्यां निविष्टौ कोऽरुक् शब्दं चक्रतुः ॥ ततः स आयुर्वेदवेदी नेदीयांसं तदीयशब्दं साभिप्रायं चेतसि चिरं विचिन्त्य।

अशाकभोजी घृतमत्ति योन्धसा
पयोरसान् शीलति नात्ति योम्भसा ॥
अभुक् विभुक् नापकृतां विदाहिनां[1]
चलत्प्रभुक् जीर्णभुगल्पसारभुक् ॥ १ ॥

इत्यभाणि। भणितानन्तरं चमत्कृतचित्तौ तौ प्रयातौ। पुनर्द्वितीयादिने द्वितीयवेलायां तादृक्पक्षिरूपं विधाय प्राकृतनशब्दरूपं कुर्वाणौ समायातौ वैद्यगृहे पुनस्तयोर्वचः, प्रतिवचः।

---

१ A आभुक् विरुट् नावकृतां B अभुक् विभुक् नावकृतां

वर्षासु यस्तिष्ठति शरदि पिबति हेमन्तशिशिर-
योरत्ति ।
माद्यति मधुनि ग्रीष्मे स्वपिति भवति च खग
सोरुक् ॥

इति भणितानन्तरं पुनरेव गतौ । तृतीयदिने योगीन्द्ररूपं कृत्वा तद्गृहे समागतौ तयोर्वचः ।

अभूमिजमनाकाशमहन्तव्यमवारिजम् ।
संमतं सर्वशास्त्राणां वद वैद्य किमौषधम् ॥

पुनर्वैद्यवचः

अभूमिजमनाकाशं पथ्यं रसविवर्जितम् ।
पूर्वाचार्यैः समाख्यातं लङ्घनं परमौषधम् ॥ १ ॥

तेन[1] चमत्कृतचित्तौ वैद्यौ प्रत्यक्षीभूय यथाभिमतं वरं वितीर्य स्वस्थानं भेजतुः ॥

इति वैद्यवाग्भटप्रबन्धः ॥

अथ घामणउलिग्रामवास्तव्यो[2] धाराभिधानः कोऽपि नैगमः श्रिया वैश्रमणस्पार्द्धिष्णुः संघाधिपत्यमासाद्य माद्यद्द्रविणव्ययव्यतिकरजीवितजीवलोकः पञ्चभिरङ्गजैः समं श्रीरैवताचलोपत्यका-

१ A तेन निजाभिप्रायसदृशप्रत्युत्तरदानेन २ A घारणउलिग्रामे वास्तव्यो

यां विहितावासः दिगम्बरभक्तेन केनापि गिरिनगरराजेन सिताम्बरभक्त इति स स्खल्यमानस्तद्द्वयोः सैन्ययोः समरसंरम्भे प्रवर्त्तमाने सति अमानेन रणरसेन[१] युद्धमाना देवभक्तया वल्लभतया प्रोत्साहितसाहसा विपद्य ते पञ्चपुत्राः पञ्चापि क्षेत्रपतयो बभूवुः। तेषां क्रमेण नामानि। कालमेघः १ मेघनादः २ भैरवः ३ एकपदः ४ त्रैलोक्यपादः ५ इति बभूवुः। तीर्थप्रत्यनीकं पञ्चतां नयन्तस्ते पञ्चापि गिरेः परितो विजयन्ते स्म। अथ तत्पिता धाराभिधान एक एवावशिष्टः कन्यकुब्जदेशे गत्वा श्रीबप्पहट्टिसूरीणां व्याख्याक्षणप्रक्रमे श्रीसंघस्याज्ञां दत्तवान् यद्रैवतकतीर्थे दिगम्बराः कृतवसतयः सिताम्बरान् पाषण्डिरूपान् परिकल्प्य पर्वताधिरूढान्नेच्छन्ति[२] अतस्तान् निर्जित्य तीर्थोद्धारं कृत्वा निजदर्शनप्रतिष्ठापरैर्व्याख्याक्षणो विधेय इति तद्वचनेन्धनप्रोज्ज्वलितप्रतीपज्वलनां[३] नृपतिं सहादय तेन समं तां भूधरधरामवाप्य सप्ताभिर्दिनैर्वादस्थलेन दिगम्बरान् पराजित्य श्रीसंघसमक्षं श्रीअम्बिकां प्रत्यक्षीकृत्य

१ A मरणरसेन २ पर्वतेधिरोढुं न ददन्ति D पर्वतोधिरोहं ३ C प्रतिपज्वलनाः

एक्कोवि नमुक्कारो उज्जन्तसेलसिहरे इत्यादितदुक्तां गाथामाकर्ण्य सिताम्बरदर्शने स्थापिते सति पराभूता दिग्वसना बलानकमण्डपात् झम्पापातं वितेनुरीति क्षेत्राधिपत्युत्पत्तिप्रबन्धः ॥

अथ कदाचिद्भवान्या भव इति पृष्टः, यत्त्वं कियतां कार्पटिकानां राज्यं ददासीति तद्वाक्यादनु-यो लक्षसंख्यानामपि एक एव वासनापरस्तस्य वै राज्यमहं वितरामीति प्रत्ययदर्शनाय गौरीं पङ्कमग्नां जरद्गवीं विधाय स्वयं नररूपेण तटस्थः पान्थांस्तामुद्धर्तुमाकारयन् तैरासन्नसोमेश्वरदर्शनोत्कैरुपहस्यमानः केनापि कृपावता पथिकवृन्देन तस्यामुद्धर्तुमारब्धायां सिंहरूपेण शिव एव तान् त्रासयन् कश्चिदेक एव पथिको मृत्युमप्याहत्य तस्या गोः समीपं नौज्झत् स एव राज्यार्ह इति पृथक् गौर्या दर्शित इति वासनाप्रबन्धः ।

अथ कश्चित्कार्पटिकः सोमेश्वरयात्रायां व्रजन् पथि लोहकारौकसि प्रसुप्तः। तस्य लोहकारस्य भार्या पतिं निहत्य कृपाणिकां कार्पटिकशीर्षे निदधती बुम्बारवमकरोत् । आरक्षकेण तत्रागत्य तस्यापराधिनः करौ छिन्नौ स देवस्योपालम्भनपरः निशि

प्रत्यक्षीभूयेत्युक्तः। शृणु त्वया प्राग्भवे कदाचिदजा केनापि एकेन सोदरेण पाणिभ्यां श्रवणयोर्घृता तदपरेण मारिता ततः सा अजा मृत्वा इयं योषिदजनि येन व्यापादिता स साम्प्रतं पतिरभूत् यत्त्वया तदा कर्णौ विधृतौ तदा तव समागमे जाते सति करौ छिन्नौ तदा कथं ममोपालम्भ इति कृपाणिकाप्रबन्धः॥

पुरा शङ्खपुरनगरे श्रीशङ्खा नाम नृपतिस्तत्र नामकर्मभ्यां धनदः श्रेष्ठी स कदाचित्करिकर्णताल-तरलां कमलां विमृश्योपायनपाणिर्नृपोपान्तमुपेत्य तं परितोष्य च तत्प्रसादीकृतायां भुवि चतुर्भिर्नन्दनैः सह समालोच्य सुलग्ने जैनप्रासादमचीकरत्। तत्र प्रतिष्ठितबिम्बानां स्थापनां विधाय तस्य प्रासादस्य समारचनाय बहून्यायद्वाराणि रचयन् तत्सपर्याकुलतया नानाविधकुसुमवृक्षावलीसमलंकृतमभिराममारामं च निर्माप्य तच्चिन्तकेषु नियुक्तेषु उदिते प्राक्तनान्तरायकर्मणि क्रमात् संह्रियमाणसंपदधमर्णतया तत्र मानम्लानिमाकलय्यानतिदूरवर्त्तिनि क्वापि ग्रामे कृतवसतिर्नगरयातायातेन सुतोपात्तजीविकः कियन्तमपि कालमति-

वाहितवान्। अथान्यस्मिन्नवसरे संनिहिते चातुर्मासिकपर्वणि तत्र यायिभिः सुतैः समं स धनदः शङ्खपुरं प्राप्य निजप्रासादसोपानमाधिरोहन् निजारामपुष्पलाविकयोपायनीकृतपुष्पचतुःसारिकः परमानन्दनिर्भरस्ताभिर्जिनेन्द्रमभ्यर्च्य निशि गुरूणां पुरः स्वं दौस्थ्यममन्दं निन्दन् तैः प्रदत्त[illegible]र्दियक्षाकृष्टिमन्त्रोऽन्यदा कृष्णचतुर्दशीनिशीथे तमेव मन्त्रमाराधयन् प्रत्यक्षीकृतात् कपर्दियक्षात् गुरूपदेशतश्चतुर्मासकावसरे पुष्पचतुःसारिकपूजापुण्यफलं देहीति प्रार्थयन् एकस्यापि पूजाकुसुमस्य पुण्यफलं सर्वज्ञेन विना नाहं वितरीतुं प्रभूष्णुरिति किं तु कपर्दियक्षस्तस्य साधर्मिकस्यातुल्यवात्सल्यसंबन्धे तद्धाम्नि चतुर्षु कोणेषु सुवर्णपूर्णान् चतुरः कलशान् निधीकृत्य तिरोदधे। स प्रातः स्वसद्मनि समागतः धर्मदानपराणां नन्दनानां तद्द्रव्यं समर्पयामास। तेपि निर्बन्धात् पितुः पार्श्वे तद्वैभवलाभहेतुं पृच्छन्तस्तेषां हृदि धर्मप्रभावाविर्भावाय जिनपूजाप्रभावतः परितुष्टेन कपर्दियक्षेण प्रसादीकृतां तां संपदं निवेदयामास। तेपि संपन्नसंपत्तयस्तदेव जन्मनगरं

१ चतुःसारिकाभिः २ D तद्धाम्निश्चतुः

समाश्रित्य निजधर्मस्थानसमारचनपराः जिनशासनप्रभावनां विविधां कुर्वन्तो वैधर्मिकाणामपि मनस्सु जिनधर्मं निश्चलीचक्रुरिति श्रीवीतरागपूजायां धनदप्रबन्धः ॥

इत्याचार्यश्रीमेरुतुङ्गाविरुते प्रबन्धचिन्तामणौ विक्रमादित्याद्युदितपात्रविवेचनप्रमुखजिनपूजायां धनदप्रबन्धपर्यन्तवर्णनो नाम प्रकीर्णकाभिधानः पञ्चमःप्रकाशःसमार्थितः ॥ ग्रंथाग्रं ३०००.

दुःप्रापेषु बहुश्रुतेषु गुणवद्वृद्धेषु च प्रायशः
शिष्याणां प्रतिभाभियोगविगमादुच्चैःश्रुते सीदति
प्राज्ञानामथ भाविनामुपकृतिं कर्तुं परामिच्छता
ग्रन्थः सत्पुरुषप्रबन्धघटनाच्चक्रे सुधामत्रवत् ॥ १

प्रबन्धानां चिन्तामणिरयमुपात्तः करतले
स्यमन्तस्य भ्रान्तिं रचयति चिरायोपनिहितः ।
हृदि न्यस्तःशास्तां सृजति विमलां कौस्तुभकलां
तदेतस्माद्ग्रन्थाद्भवति विबुधः श्रीपतिरिव ॥ २

यथा श्रुतं संकलितः प्रबन्धै—
र्ग्रन्थो मया मन्दधियापि यत्नात् ।
मात्सर्यमुत्सार्य सुधीभिरेव
प्रज्ञाङ्कुरैरुन्नतिमेव नेयः — ३

१ ब्राह्मणानां

यावद्दिवि कितवाविव रविशशिनौ क्रीडतो ग्रहकपर्दैः
ग्रन्थस्तावन्नन्दतु सूरिभिरुपादिश्यमानोयम् ॥ ४॥
नृपश्रीविक्रमकालातीतसंवत् १३६१ वर्षे फाल्गुन-
सुदि १५ रवावद्येह श्रीवर्द्धमानपुरे चिन्तामा-
णिग्रन्थः समाप्तः

---

१ A त्रयोदशस्वब्दशतेषु चैक-
षष्टयाधिकेषु क्रमतो गतेषु ।
वैशाखमासस्य च पूर्णिमायां
ग्रन्थः समाप्तिं गमितो मितोयम् ॥ १ ॥

समाप्तम् .

# अपूर्णपुस्तकाभ्यां पाठान्तराणि तदन्यद्वेद्यं च यथा

| पत्रे | पङ्क्तौ. | मुद्रिते. दृष्टे. |
|---|---|---|
| १ | ६ | गुम्फान—ग्रन्थान् A B |
| १ | १० | श्रीधर्मदेवः—श्रीधर्मदेवैः शतघोदितेति वृत्तैश्च A<br>श्रीधर्मदेवः शतघोदितेति वृत्तैश्च B |
| १ | १३ | प्रदर्शितवान—विनिर्मितवान् A अत्र निर्मितवान् B |
| २ | ८ | सुसंप्रदायाहूर्वे—सुसंप्रदायारव्ये A सुसंप्रदायदृष्टे B |
| २ | ९ | अन्त्यः—अन्तः B |
| २ | १५ | विक्रमादि—क्रमविक्रमादि B |
| २ | १७ | द्रुतोप्यनिनीतिपर सन्परः शतैः—द्रुतः परशतैः B |
| ३ | १ | अनुपक्रममानः—अक्रमानः A |
| ३ | २ | भट्टमात्राभिन्नमहायो—भट्टमात्रसहायो A B |
| ३ | ३ | प्रवरनामानि नगरे—प्रवरनाम्नि प्रवरनगरे A B |
| ३ | ५ | पुण्यश्रवणपूर्वं—पुण्यश्रवणात्पूर्वं A पुण्यश्रवणापूर्वं B |
| ३ | ९ | सहादाय—समादाय A आदाय B |
| ३ | १० | यत्कश्चित—तात काश्चित् A दैवःकश्चित् B |
| ३ | १५ | प्रादुरासीत् मह—प्रादुरासीत् भाग्येनाकिं न घटते॥यतः<br>यद्यपि कृतसुकृतशतः प्रयाति गिरिकन्दरान्तरेषु<br>नरः। करकलितदीपकलिका तथापि लक्ष्मीस्तमनु-<br>सराति ॥ १ ॥ मह B |
| ३ | १७ | शोकशङ्कुशङ्कापनोदाय—शोकापनोदाय A B |

३ १९ विक्रमः सहजां—विक्रमस्तदानीं सहजां A

४ १ व्रणरोहणं—व्रणरोपणं A

४ ४ परिभ्राम्यन्—परिभ्रमन् A B

४ ४ अवन्तिपरिसरं—अवन्तिदेशपरिसरे A अवन्तिपरिसरे B

४ ८ राज्यस्य—राज्ये A

४ ११ भक्त्या वा शक्त्या—यथाशक्त्या भक्त्या वा

५ ६ भक्त्या—अत्यन्तभक्त्या A B

५ ७ एतावद्भक्ष्य—एतद्भक्ष्य A B

५ ११ विज्ञाप्य—विज्ञप्य A

५ ११ विज्ञापयिष्यामि—विज्ञपयिष्यामि A

५ १४ उपरुध्य—उपरुद्धः A B

५ १८ भोज्यादिपाकं—भोजनादिकं A B

६ १ आगतः स नृपं जगौ तद्भोज्य—आगतः। तद्भोज्य A B

६ ४ आदिष्टः स नृपं—आदिष्टः सन् अहो अस्य करिघटाविघट्टनैकपञ्चाननस्य महत्साहसं यत्सत्त्वेन किं न ज्ञायते यतः

सत्त्वैकतानवृत्तीनां प्रतिज्ञातार्थकारिणाम् ।
प्रभविष्णुर्न देवोपि किं पुनः प्राकृतो जनः ॥

एवं विमृश्य नृपं A

६ ५ अमुनाद्भुत—तवाद्भुत A B

६ ९ वन्यो—विज्ञो A

६ ९ भित्तिभागे—चित्रभागे A

६ १२ साहसाङ्क १॥ अवन्त्यां....समर्पिता—साहसाङ्क १॥ कालिदासाद्यैर्महाकविभिरित्थं संस्तूयमानश्चिरं प्रा-

ज्यं राज्यं बुभुजे ॥ सांप्रतमवसरायातां कालि-
दासमहाकवेरुत्पत्तिं संक्षेपतो ब्रूमः ॥ अवन्त्यां पुरि
श्रीविक्रमादित्यसुता प्रियङ्गुमञ्जरीनाम्नी साध्यय-
नाय पित्रा वेदगर्भनाम्नः पण्डितस्य समर्पिता A
वररुचिनाम्नः पण्डितस्य प्रदत्ता B

७ १३ अधिको विद्यतया—अधिकविद्यतया A B

८ १ करवडी—करचण्डी A B (क्वचिद्देशे भाषायां हस्त-
तलद्वययोजना करचुलीति केचित् )

८ २ अश्रुतं—अश्रुतचरं A अश्रुतपूर्वं B

८ ८ वपुःपरिकर्मपूर्वं—वपुःपरिकर्मणा सह पूर्वं A वपुःपरि-
कर्मणा पूर्वं स्वस्तीत्याशिर्वादाध्यापनं B

८ १५ पाणिभृत्....गर्वितः १॥—पाणियुक् । रक्षतात्तव रा
जेन्द्र टणत्कारकरं यशः ॥ १ ॥ A B

९ ६ महिपीपाल एव—मूर्खोयमिति B

९ १२ आरराध....पुत्री—आराधयितुमुपविष्टः न भुङ्क्ते दि-
नाष्टकं जातं पुत्री.

९ १२ दासी—कालिकानाम्नी दासी A B

९ १६ अस्ति कश्चिद्वाग्विशेषः ( इत्यनेन कुमारसंभवमेघ-
दूतरघुवंशाख्यपद्यबद्धं काव्यत्रयं तेषां क्रमेण त
एवादिशब्दा इति तत्त्वम् ॥ कालिदासप्रबन्धादयः
षट् गद्यपद्यात्मका इति गुरुवाक्यम् )

९ १८ रचयामास । अन्यदा—रचयामास ॥ इति कालि-
दासप्रबन्धः । अन्यदा A B

१० ५ स्थितः....सुप्त — स्थितः पुरुषमेकमवलोक्य सुप्त B

१० ९ अहीनादिभिः—अर्हणादिभिः A B

१० ११ संध्यासर्वावसरानन्तरं—संध्यायां सर्वावसरानन्तरं A B ( सर्वावसरशब्दो मध्यरात्रद्योतक इत्यर्थः )

१२ १ तस्थुः । अथ— तस्थुः । इति विक्रमादित्यसत्त्वप्रबन्धः । अथ A B

१२ १४ विससर्ज । अथ—विससर्ज ॥ इति सत्त्वपरीक्षाप्रबन्धः । अथ A B

१२ १९ निराकृताः—विनाकृताः A B

१३ १० प्राहरिके द्विजे निजं—प्राहरिके द्विजन्मनि A

१३ १२ पल्लीगात्रनिवेशितं—पल्लीमूर्ध्ननिवेशित B

१३ १४ विद्यासिद्धा । अथास्मिन्—विद्यासिद्धिप्रबन्धः ॥ एकदा नृपो गुरुवन्दनाय गतः तत्र वृद्धं कमपि तपस्विनं पठन्तं वन्दयामास तेन नाशीर्निगदिता पठनव्यग्रेण । राज्ञोक्तं वृद्ध पठन् मुशलं पुष्पयिष्यसि । तदवगम्य तेन पठित्वा मुनिपदे मार्गे नस्यैव राज्ञः सदसि गत्वा मुशलमानाय्यालवालं विधाय श्रीऋषभदेवस्तवेन मुशलं पुष्पयित्वा गतः। तावता सिद्धसेनेनापि तदवगत्य वादाय पृष्टे गतम् । परेण केतलारसग्रामं व्रजन् वृद्धवादी रुद्धः वादं विधेहि । तेनोक्तं । पुरे गम्यते तत्र सभ्या भवन्ति । पुनः प्रतिवादिनोचे । अत्रैव वादः । अमी गोपाः सभ्याः । तेप्याकारिताः । प्रथमं सिद्धसेनेनोपन्यासो विहितो गीर्वाणवाण्या । तदनु वृद्धवादिना गण्टीयकं बध्वा गोपकुण्डकं विधाय प्रोचे ॥ नवि मारीयए नवि चोरीयए परदारागमण निवारीयए । थोवा विहु थोवं दाईयए इम सग्गि टगमगु जा-

ईयए ॥ एवं पठाति गोपा नृत्यन्ति । तैरुक्तमनेन जितं त्वं किमपि न वेत्सि । ततो वृद्धवादिना पुर गत्वा वादं विधाय जितः शिष्यो बभूव । ततः सिद्धसेनादिवाकरेण गुरुचरणसंवाहनां विधाय मौनेन गुरव उक्ताः । यदि यूयमादेशं ददत तदाहमागमं संस्कृतेन करोमि, गुरुभिरुक्तं । तव महत्पापमजनि त्वं गुरुगच्छयोग्यो न गच्छेः । तेनोक्तं, प्रायश्चित्तं ददत । गुरुभिरुक्तं । यत्र जिनधर्मो न तत्र जिनप्रभावनां विधाय पुनः समागन्तव्यमित्यवधूतवषेण चलितः । द्वादशवर्षाणि यावदन्यत्र परिभ्रम्य तदनन्तरं मालवके गूढमहाकालप्रासादे शिवाभिमुखं चरणौ कृत्वा चरणत्राणौ द्वारकाष्ठे नियोज्य सुप्तः । तत्र वारितोपि तथैव । अत्रान्तरे राज्ञारक्षिकपुरुषान् प्रेपयित्वोपद्रुतः । तावतान्तःपुरे स्वप्रदीपनं लग्नं, राज्ञा समागत्य पृष्टः । कथं शिवस्य न नमस्कारं विदधासि । तेनोक्तं मम नमोसौ न सहते । विधेहि । तेन सकललोकसमक्षम्

प्रशान्तं दर्शनं यस्य सर्वभूताभयप्रदम् ।
माङ्गल्यं च प्रशस्तं च शिवस्तेन विभाव्यते ॥१॥

इति द्वात्रिंशद्द्वात्रिंशतिका कृता, तदा लिङ्गमध्यादवन्तिसुकुमालद्वात्रिंशत्पत्नीकारितप्रासादे श्रीपार्श्वनाथबिम्बं प्रकटीभूतं नमस्कृतं च । असौ सहते नमस्कारं तदाप्रभृति गूढमहाकालोजाने । राजा विक्रमार्कः परमजैनोभूत् । सिद्धसेनोपि स्वगुरुपार्श्वे समेत्य सूरिमन्त्रं

प्राप्यैकदोज्जयिन्यामेव चातुर्मासकं स्थितः । अथा-
न्यस्मिन्

१३ १६ बन्दिपुत्रैः—बन्दिवृन्दैः B

१४ १ (आसे दर्शनमिति पद्यं नास्ति A B)

१४ १९ नराधिपः—धराधिपः

१४ १७ वृथा तृप्तस्य—वृथा भुक्तस्य A B

१४ १८ सुवर्ण..उपदिष्ट-सुवर्णदानेनावनीमनृणीकुर्वित्युपदिष्टः B

१९ १ (अष्टौ पद्यानि तानि न A B)

१७ ९ दृष्टः...श्री—दृष्ट इति जगौ । जगुदालिद्दिंह तुन्थिय-
उं बलिबन्धणह मुइज्ज ॥ १ ॥ इत्याकर्ण्य श्री— B

१७ ८ आरेभे...अथ—आरेभे । उज्जयिन्द्या राजा विक्रमा-
दित्यो भट्टमात्रेण समं महाकाले नाटकालोकनार्थं
गुप्तवेषो गतः कालान्तरितेन नागरिकसुतेन कार्य-
माणे नाटके सूत्रधारमुखात्तद्वर्णनं श्रुत्वा [illegible]
नागरिकद्रव्यग्रहणाय मनसि लोभं [illegible] ।
पश्चात्कियत्कालमतिक्रम्य तृषितो [illegible]
भट्टमात्रपार्श्वात्पानीयं याचितवान् । तत्र वृद्धवेश्या
प्रधानान्पुरुषान् भणित्वा तन्निमित्तमिक्षुरसमादातु-
मुपवने गता । मूलैकैरिक्षुदण्डान् भित्त्वा तयार्द्ध-
घटेप्यसंभृते दुर्मनस्का करकं भृत्वा वेलाविलम्बे-
नागता राज्ञेक्षुरसे पीते भट्टमात्रेण वेलाविलम्बदौ-
र्मनस्यकारणं दृष्टा जगाद । अन्यदिने एकेन नि-
र्भिन्नेक्षुदण्डेन सकरको घटो भ्रियते । अद्य घटोपि
न संपूरितः । तत्कारणं न ज्ञायते । भट्टमात्रेण
(पुनः) दृष्टं यूयमेव परिणतमतयस्तत्कारणं जानीत

ततो विचार्य निवेदयन्तु । वेश्यापि वदति । पृ-थ्वीपतेर्मनः प्रजासु विरुद्धं जातं ततः पृथ्वीरसोपि क्षीणो जातः । इति कारणं निवेदितवती । राजापि तद्बुद्धिकौशलाच्चमत्कृतः । स्वभुवनशयनीये सुप्त इति चिन्तितवान् । अकृतेपि प्रजापीडने विरुद्धचि-न्तामात्रेणापि पृथ्वीरसहानिर्जाता । अतः प्रजां न पीडयिष्यामीति कृतनिश्चयो नृप इति परीक्ष-णार्थं द्वितीयायां निशायां तृषामिषात्तद्गृहे गत्वा शीघ्रमेव सहर्षया तयानीतमिक्षुरसं पीत्वा, शयनी-ये सुप्तवान् । वेश्यापि भट्टमात्रपूर्णा राज्ञः प्रजासु हृष्टं मनो निवेदितवती राज्ञापि आत्मानिशावृ-त्तान्तं निवेद्य पुनरपि तस्यै वृद्धवैश्यायै परचि-त्तोपलक्षणतुष्टेन हारो दत्तः । इति नृपतिमनोनु-सारी पृथ्वीरसप्रबन्धः ॥ अथ B

१९ २ नाडश्नतः....अत्रान्तरे—उपरि च फणी पुच्छवलम्बे-नाधोभूय कुसुमगन्धिनृपशिरसि दंशाय पुनः पुनः फुत्कुर्वाति । अत्रान्तरे B

२० २ चकार....कदाचिदायुः—

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्थिवच्छीतलं
पुत्रालिङ्गनवत्तथा च मधुरं बालस्य संजल्पवत् ।
एलोशीरलवङ्गचन्दनलसत्कर्पूरपालीमिल—
त्पाटल्युत्पलकेतकीसुरभितं पानीयमानीयताम् ॥ १॥
यदा जीवश्च शुक्रश्च परितश्चन्द्रमण्डलम् ।
परिवेष्टयतस्तद्वै राजा कष्टेन जीवति ॥ २ ॥ इति
विक्रमार्कस्य निगर्वताप्रबन्धः

अथान्यस्यां निशि ( इत्यादि भोजवृत्तान्ते द्रष्टव्यं तत्रायं विशेषः )

एका रजकी राज्ञा पृष्टा वस्त्राणि विरूपाणि कथं सैकतानि तयोक्तम् ।

यासौ दक्षिण दक्षिणार्णववधूरेवाप्रतिस्पर्द्धिनी
गोविन्दप्रियगोकुलाकुलतटा गोदावरी विश्रुता ।
तस्यां देव गतेपि भवसमये स्वच्छं न जातं जलं
त्वद्दण्डद्विरदेन्द्रदन्तमुशलप्रक्षोभितैः पांसुभिः॥१॥
रजकवधूवचनमिदं श्रुत्वा नरनाथनायकः स ददौ ।
स्वाङ्गपृष्ठकसहितं लक्षं भ्रूक्षेपमात्रेण ॥ २ ॥
चौरमार्गवविप्रभ्यां रजक्यै कविताश्रुतौ ।
चातुःप्रहारिकं दानं दत्तं विक्रमभूभुजा ॥ ३ इति
प्रबन्धाः नानाविधा यथाश्रुतं विज्ञेयाः । कदाचिदायुःB

२२ ५ एव रूपं—एकमेव रूपं A B

२२ ६ ताः सहस्त—ता दत्तहस्त–A B

२२ ६ निजमपरावं—निजमेवापरावं A B

२२ ९ तासु मुख्यया—तासां मुख्यया

२३ ५ निर्धीनू वेद्मि—निधीनवतीर्णान्वेद्मि A B

२४ २ शातवाहनकथा यथा श्रुता ज्ञेया–शातवाहनप्रबन्धा
लिख्यन्ते B

२४ ११ वृत्तिस्तस्यां—वृत्तिः ।
अहो कोपि दरिद्राणां दारिद्र्यव्याधिरद्भुतः ।
मृत्तिकार्थेपि यः पीयमाने न क्षयभूरभूत् ॥ १ ॥
तस्यां B

२४ १४ व्रजन्तमाहूय तं सक्तुपिण्डं–व्रजन्तं जैनमु–निं दृष्ट्वा

पूर्वभवे मया कस्मैचिन्न ददे तस्येदं फलम्। यदुक्तम्।
रम्येषु वस्तुषु मनोहरतां गतेषु
रे चित्त खेदमुपयासि कथं वृथा त्वम्।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना नहि भवन्ति समीहितार्थाः ॥ १ ॥
इत्थं चिन्तयित्वा मुनिमाकार्य सक्तुपिण्डं B

२४ १९ शालवाहननृपतिरासीः—सातवाहननृपतिरासीः A
( कथासरित्सागरे । सातेन ( सुखेन ) यस्माद्वाहो-
भूत्तस्मात्तं सातवाहनमिति )

२१ ३ गाथा....(दशश्लोका न AB)....गुर्जरश्रुति—गाथाच-
तुष्टयं बहुश्रुतेभ्यो ज्ञेयम् । षड्ग्रामलक्ष-
मिते कन्यकुब्जदेशे कल्याणकटकनाम्नि राजधानी-
नगरे भूराज इति राजा राज्यं कुर्वन् कस्मिंश्चित्प्र-
भातसमये राजा राजपाटिकायां संचरन्नेकस्मिन्सौ-
धतले वातायनस्थितां कामपि मृगाक्षीं मृगयमाणो
निजचित्तापहारापराधिनीं तां जिघृक्षुर्निजं पानीया-
द्यधिकृतपुरुषं समादिदेश । सच तां नृपसौधे स-
मानीय कस्मिंश्चित्संकेतप्रदेशे स्थापयित्वा नृपं
विज्ञपयामास । नृपेण च तत्रागतेन बाहुदण्डे
धृता सती भूपमवादीत्। स्वामिन् सर्वदेवतावतारस्य
भवतो हन्त कोयं नीचनार्यामभिलाषः । ततस्त-
द्वाक्यामृतेनोपच्छान्तकामानलो नृपः कासीति तां
प्रोचे । तयाहं दासीत्यभिहिते किं तथ्यमेतदिति
नृपादेशात्प्रभोर्दासः पानीयाधिकृतस्तस्य पत्न्यहं
दासानुदासीति तद्वार्त्तयान्तश्चमत्कृतो नृपतिः सर्वथा

विलीनकामार्तिः स्वां सुतां मन्यमानो विससर्ज ।
तस्या वपुषि निजकरौ लग्नाविति विचिन्त्य तन्नि-
ग्रहवाञ्छया निशीथे निजैरेव यामिकैर्गवाक्षप्रवि-
ष्टनरकरभ्रान्त्या निजावेव भुजौ निग्राहयामास ।
अथ प्रत्यूषे तान्यामिकान् सचिवैर्निगृह्यमाणान्नि-
वार्य मालवमण्डले महाकालदेवप्रासादे गत्वा स्वयं
देवमाराधयंस्तस्थौ । देवादेशाङ्कुजद्वये लग्ने सति तं
कन्यकुब्जार्द्धमालवदेशं प्रान्तपुरं तस्मै देवाय दत्त्वा
तद्रक्षाधिकृतान् परमारराजपुत्रान्नियोज्य स्वयमेव
तापसीं दीक्षामङ्गीचक्रे । ( इति शीलव्रते भूयराज-
प्रबन्धः ) तस्य कन्यकुब्जस्यैकदेशो गूर्जरधरित्री
तस्यां गूर्जरभुवि B

३१ १० बणनाम्नि—बाणनाम्नि A

३१ १२ शीलगुण–शीलगणि-A शीलगण B

३२ २ गणिन्या—गणिना A

३२ २ परिपाल्यमानः—प्रतिपाल्यमानः B

३२ ६ लोष्टैर्निघ्नन्—बाणैर्निघ्नन् A B

३२ ९ अकरोत् । काकरग्रामे—अकरोत् । चौरस्वभावे लग्ने न
सुखं कदाचिदपि । यतः ॥

नक्तं दिवा न शयनं प्रकटा न चर्या
स्वैरं न चान्नजलवस्त्रकलत्रभोगः ।
शङ्कानुजादपि सुतादपि दारतोपि
लोकस्तथापि कुरुते ननु चौर्यवृत्तिम् ॥ १ ॥ A

३२ १४ आहूतः....पूर्वकं—स्नानभोजनवस्त्रदानपूर्वकं A B

३२ १७ चरटवृत्त्या—चौरवृत्त्या A

३२ १८ जम्बाभिधानः—जाम्बाभिधानः B

३३ १ बलवेघ्यं—चलवेघ्यं B

३३ ३ तद्योध—तद्योधृ-A

३३ ५ पञ्चकुलेन ( राजाधिकारिणां पञ्चानां समूहेन ) ताद्द-
शराज्ञः—तद्देशराज्ञः A B

३३ ६ कञ्चुकसंबन्धे ( उद्वहनावसरे दुहितृदत्तसेवका-
द्यर्थसंबन्धे

३३ ७ सेल्लभृत्—सेलभृत् A B ( राजद्रव्योद्ग्राहणाय लक्ष्म-
विशेषधारी )

३३ ९ रूप्यकद्रम्म—पारूपकद्रम्म—B

३४ २ शशकेनोच्छासिता—शशकेन श्वा त्रासितः A

३४ ७ श्रियादेवी—श्रीदेवीं A

३४ ९ जम्बाभिवानः—जाम्बाभिधानः A

३५ १ धवलगृहकण्ठे—धवलगृहे कण्ठीश्वर—A

३५ ४ नैव नन्दति—तन्न नन्दति B

३५ ५ निरुद्धं वर्ष ९९ मास २ दिन १० ( यस्मिन्वर्षे रा-

३५ १४ ज्ये स्थितस्ततो मरणपर्यन्तं निरुद्धशब्दार्थः)

३५ ८ सुदि ३ गुरौ—शुद्ध १३—A

३५ १४ सार्द्धशती संख्यया—सार्द्धबद्रा संख्यया रूपं १८ B

३६ ३ प्रतिपन्त्यादि कृतं—प्रत्यादिष्टं B

३६ १२ अस्मत्पुरुषैः—अस्मत्स्थानपुरुषैः A B

३७ १ अनुजीविनां—द्विजन्मनां A B

३७ ६ अनेन....वाहकेल्यां—अनेन राज्ञा वर्षाणि ३५ राज्यं
कृतं सं० ८९७ पूर्वं वर्ष २५ श्रीक्षेमराजेन रा-
ज्यं कृतं सं० ९२२ पूर्वं वर्ष २९ श्री मूयडेन

राज्यं कृतं । अनेन श्रीपत्तने श्रीभूयडेश्वरप्रासादः कारितः । सं. ९९१ पूर्वं श्रीवैरिसिंहेन (वीरसिंहेन B) वर्षाणि २५ राज्यं कृतं सं. ९७६ पूर्वं वर्ष १५ श्रीरत्नादित्येन राज्यं कृतं सं. ९९१ पूर्वं वर्षाणि ७ श्रीसामन्तसिंहेन राज्यं कृतं एवं चापोत्कटवंशे सप्त नृपतयोभूवन् विक्रमकालतः संख्यया वर्षाणि ९९८॥ पूर्वोक्तश्रीभूयडराजवंशे राजबीजदण्डकनामानस्त्रयः पुत्राः सहोदरा यात्रायां श्रीसोमनाथं नमस्कृत्य ततः प्रत्यावृत्य श्रीमदणहिल्लपुरे श्रीसामन्तसिंहनृपं वाहकेल्यां AB

३९ १४ श्रीभूयडदेवेन––श्रीसामन्तसिंहेन A

३९ १८ सं० ९९३....अवसरे–९९८ श्रीमूलराजस्य राज्याभिषेको निष्पन्नः

मूलार्कः श्रूयते शास्त्रे सर्वकल्याणकारकः ।
अधुना मूलराजेन योगश्चित्रं प्रशास्यते ॥ १ ॥

इत्यादिस्तुतिभिः स्तूयमानः साम्राज्यं कुर्वन्नास्ते । तस्मिन्नवसरे A

४० ३ अभिषेणयितुं—पराजेतुं A

४० ४ बारवनामा—बारपनामा A B

४१ ५ राजा लहणिकां—राज्ञलहणिकां B

४१ ६ सामन्तान् .... करण—सामन्तानाकार्य क्षूणलेखेन व्ययकरण B

४१ ९ ज्ञापनापूर्वं—ज्ञापनपूर्वं A

४१ ११ प्रत्यूषकाले—प्रदोषकाले A

४२ ९ उपयाचितैः––उपयाचितशतैः A B

४१ ४ वसहिका—(बहुदेवतावासरूपा)

४३ ९ मुआलदेव—मूलस्वामिदेव A

४३ १७ कन्थडि—कान्थाडि. B

४४ १ आनृण्ये—आनृण्यं

४४ ९ चिन्तायकत्वाय—(मठाधिपतित्वाय)

४४ १३ वाक्यं—वाक्यतत्त्वं

४९ ८ ग्रामसहितं—ग्राससहितं A B

४९ ११ अभिषिक्तः....इत्थं—आभीषिक्तः। इत्थं A B

४९ १७ पुरा कस्मिन्नपि—पुरा कदाचिदपि B

४७ १ बोधवाक्यानि—बहूनि वाक्यानि B

४८ १४ का यत्—काचित् A कापि B

४८ १६ अथ सं १०९०....अभिषिच्य—अथ सं. ९९८ पूर्वं वर्षाणि ५५ राज्यं मूलराजेन चक्रे। इति मूलराजप्रबन्धः॥ संवत् १०५३ पूर्वं वर्षाणि १३ श्री चामुण्डराजेन राज्यं कृतं। अथ सं. १०६६ पूर्वं मास ६ श्री वल्लभराजेन राज्यं कृतं। अथ सं. १०६६ पूर्वं वर्ष ११ मास ६ श्रीदुर्लभराजेन राज्य कृतम्। [अथ तस्य राजमदनशंकर तथा जगझंपण इति बिरुदद्वयं जातम् B] तेन राज्ञा श्री पत्तने दुर्लभसरोवरं रचयांचक्रे। तदनु श्रीभीमाभिधानं निजमङ्गजं राज्येभिषिच्य A B

५१ १५ स्वदायितापि० टि० अ०

भीमभूपसुता सिंहभटेन मेदिनीभुजा।

श्रीमती सन्महं मुञ्जकुमारः परिणायितः॥

५६ ८ स सीन्वको० टि० अ०

रुष्टेन मुञ्जभूपेन सिन्धुलो दुर्दमस्तदा ।
देशान्निष्कासितो मेदपाटे नागह्रदे ययौ ॥ ४९ ॥
नागह्रदपुरोपान्ते निजां पल्लीं निवेश्य सः ।
स्थितश्च मृगयां कर्तुमागाद्दीपोत्सवेऽषसि ॥ ५० ॥
चौरवध्यावनौ वीक्ष्य चरन्तं शूकरं निशि ।
शूलिकास्थशवे दत्त्वार्टिनीं धनुषि निर्भयः ॥ ५१ ॥
समारोप्य गुणं तीक्ष्णबाणेन भूपभूस्तदा ।
यावद्धन्ति किरिं तावद्देवीभूय जगावदः ॥ ५२ ॥
त्वत्साहसेन तुष्टोऽस्मि वरं याचस्व संप्रति ।
सिन्धुलोवक् क्षितौ क्षिप्तो मापतद्विशिखो मम ।

५७ ३ अभिहितो—अभिहिते A

५७ १३ आयुधानि—दण्डायुधानि A B

५७ १८ भोक्तव्यं भोजराजेन—भोजदेवेन भोक्तव्यं A

५८ १६ गोदावरीं सरितं० टि० अ०

गोदावर्यास्तटादर्वाक्स्थितेन भवता रणम् ।
कार्यं न चेत्तवाह्नाय वपुर्भङ्गो भविष्यति ॥ ५१ ॥
गोदावरीपुरोभागभूः शूरास्ति भृशं नृप ।
तेन तत्र न गन्तव्यं रणाय भवता मनाक् ॥ ५२ ॥

५९ ६ जातकलत्रसंबन्धः टि० अ०

इतस्तैलिपदेवस्य पित्रा देवलभूभुजा ।
पत्नीस्थाने कृता दासी सुन्दरीत्यभिधा पुरा ॥ ६९ ॥
पुत्रीं मृणालवत्याह्वां सूते स्म सुन्दरी पराम् ।
वर्द्धयामास माता च तां स्तन्यादिप्रदानतः ॥ ७० ॥
वर्द्धमाना क्रमात्प्राप्ता यौवनं भगिनी पुनः ।
दत्ता तैलिपदेवेन श्रीपुरे चन्द्रभूपतेः ॥ ७१ ॥

चन्द्रोऽन्यदागमच्छूलरोगेण यममन्दिरम् ।
सापि तैलिपदेवस्य भ्रातुर्गेहमुपागमत् ॥ ७२ ॥
स्वसा तैलिपदेवस्य रण्डा मृणालवत्यथ ।
भक्तपानादि मुञ्जस्य चक्रे भ्रातृनिदेशतः ॥ ७३ ॥....
तिलङ्गनगरोपान्ते गत्वा गव्यूतपञ्चके ।
ग्रामे चन्द्राभिधे तस्थुः सुरङ्गां दातुमेव ते ॥ ९ ॥

६३ १६ राज्येऽभ्यषिच्यत टि. अं.
विक्रमाद्वासरादष्टमुनिव्योमेन्दुसंमिते ।
वर्षे मुञ्जपदे भोजभूपो पट्टे निवेशितः ॥

६८ १३ वैतालिकस्यार्पितम् ( कथा रत्नाकरादियं कथा ज्ञेया)

७३ ९ निशान्तं—निशान्ते निशान्तं A (निशान्ते गृहे )

८८ ११ सर्वदेवनामा ( भा. मु. प्रा. ले. प. १६)
अमात्ये मम्मटे सति ॥ ८, अल्लटमेदिनीपतिः, तदीयपुत्रो नरवाहनः, वज्रटः, लिम्बादित्यः, महीधरः, नारायणभट्टः, सर्वदेवः, (एते समकालीनाः ॥)
दशादिग्विक्रमकाले वैशाखे शुद्धसप्तमीदिवसे ।
हरिरिह निवेशितोयं घटितप्रतिमो वराहेण ॥ १९ ॥

९६ १० सिवभवणे. टि. (तदुत्पत्तिस्तु) पूर्वोक्ते ले. प. ९१
संवत्सरशतैर्यातैः सपञ्चनवत्यर्गलैः ।
सप्तभिर्मालवेशानां मन्दिरं धूर्जटेः कृतम् ॥ १ ॥....
कृष्णसुतो गुणाढ्यश्च सूत्रधारोत्र णण्णकः ।
एतत्काण्वाश्रमं ज्ञात्वा सर्वपापहरं शुभम् ॥
कृतं हि मन्दिरं शंभोर्धर्मकीर्त्तिविवर्द्धनम् ।

१३१ १६ मयणल्लदेवी. टि. चा. सुं. ग. कृ. कु. च. सर्गे. १
( भीमपुत्रप्राग्यपुत्रः क्षेमराजो "हरिपाल इति केचित्"

मरुराजपुत्रीं तारामुपयेमे )

कर्णोपि कर्णाटनृपाङ्गजाया-

श्चकार पाणिग्रहणं जयायाः ।

( ताते मृते क्षेमराजेन पितृवचनत्वात्कनिष्ठोभिषिक्तो राज्ये श्रीकर्णः )

श्रीकर्णः किमु वर्ण्यते स कविभिः सद्धर्मचिन्तामणि-

र्विज्ञाम्भोजविकाशवासरमणिर्भूमीशचूडामणिः ।

स्फूर्जत्कीर्त्तितरंगिणीं दिशि दिशि प्रध्वस्ततापा जना

यस्य श्रोतृपुटैः पिबन्ति विकटैरद्याप्यपूर्णस्पृहाः ॥१॥

गोपीपीनपयोधराहतमुरः संत्यज्य लक्ष्मीपते-

र्मन्ये पङ्कजशङ्कया नयनयोर्विश्राम्यति श्रीस्तव ।

श्रीमत्कर्णनरेन्द्र यत्र चलति भ्रूवल्लरीपल्लव-

स्तत्र त्रुव्यति भीतिभङ्गुरतया दारिद्र्यमुद्रा यतः ॥२॥

( कर्णोपि पुनः मीणलदेवीमुपयेमे )

कर्णाय काश्मीरपतिः स्वपुत्रीं

प्रैषीदथो मीणलदेवीनाम्नीम् ।

चकार पाणिग्रहणं महेन

तस्याः स लोकोत्कृतविस्मयेन ॥

( सोन्यासक्तस्तस्या नामापि न जगृहे )

बालाबलाबालिशभूमिपाला

नटा विटा वानरवारनार्यः ।

चौराश्चरा याचकवञ्चकाश्च

भवन्ति नूनं क्षणरागिणोमी ॥ ९ ॥

१३४ १० कर्णावतीपुरं· टि· तत एव ।

(मातङ्गीवेषवर्तीं मीणलदेवीं बुभुजे कर्णस्ततः सिंहस्वप्न-

सूचितः पुत्रो नाम्ना जयसिंहोभूत् । सोष्टवार्षिकः प-
ट्टणे राज्यं चकार । कर्णस्तु आशापल्लीं " आशाउर
सैव कर्णावती तत्र " गत्वा राज्यमकरोत् । )

१४४ ६ श्रीपत्तनं प्राप. टि. (तत एव । )

बालोपि जयसिंहः आलिङ्गसचिवं पुरे संस्थाप्य
मालवं जेतुं गतः । द्वादशवर्षैर्मालवेशं जित्वा षड्गुणै-
र्बध्वा " तेन षड्वारं पराजितत्वात् " नीतः
कर्णाटलाटमगधाङ्गकलिङ्गवङ्ग--
काश्मीरकीरमरुमालवसिन्धुमुख्यान् ।
देशान्विजित्य तरणिप्रमितैः स वर्षैः
सिद्धाधिपो निजपुरं पुनरास्ससाद ॥ ३८ ॥

१४४ ८ श्री हेमचन्द्रमुख्याः टि. ( तत एव )
अथ श्रीपूर्णतल्लाख्यगच्छे स्वच्छेन्दुसुन्दराः ।
सूरयो देवचन्द्राव्हा दध्युरेवं हृदा स्वयम् ॥ १ ॥
पादलिप्तबप्पभट्टिवज्रार्यखपुटादयः ।
प्रभावकाः पुराभूवन्सूरयो दूरितारयः ॥ २ ॥

(नाधुनास्ति कोपि, ततस्ते सर्वलक्षणसंपन्नं जैनशा-
सनप्रभावकं मोढब्राह्मणस्य चाचिगनाम्नः सुतं चाङ्गदेवं
तन्मातुः पाहिणीनाम्न्याः समभ्यर्थ्य शिष्यं सोमचन्द्र-
नामानं कृतवन्तः । पुनरपि मुनिचन्द्रेण सह गोचरचर्यां
गतेन तेन कस्यापि सोमाख्यदरिद्रतरवणिजो गृहेङ्गार-
पुञ्जं हेमरूपं दृष्टं ततो हेमचन्द्र इति नाम तस्य चक्रुर्गु-
रवः । दशाब्देनापि निःशङ्केन तेन सिद्धराजायाशीर्दत्ता)

१९८ ९ खंगाराहिं. टि. (गङ्गाधरकृतमण्डलीकनृपचरित्रसर्गे १
यदुकुलोद्भवः खङ्गारनामा राजा जीर्णदुर्गपुरे )

शृङ्गारः शास्त्रविद्यानां भृङ्गारः सद्गुणाम्भसाम् ।
अङ्गारः शत्रुयूपानां खङ्गारः समभून्नृपः ॥ ६७ ॥
प्रभासपत्तने येन गृहीत्वा यवनभूपतीन् ।
श्रीसोमनाथप्रासादजीर्णोद्धारः कृतः कलौ ॥....
सुराष्ट्रदेशसाम्राज्यसिंहासनसुखस्थिते ।....
तस्याभूत्तनयः श्रीमाञ्जयसिंह इति श्रुतः ।
येन यावनराजेभघटा विघटिता रणे ॥ ७७ ॥
गिरिनारायणगिरौ जयसिंहेतिगर्जति ।
प्रतिभूपतिसारङ्गा व्यद्रवन्विदिशो दिशः ॥ ७८ ॥
तस्मान्मोलकसिंहोभूद्विभूतेरास्पदं सताम् ।
यस्याभिधानमात्रेण व्यद्रवन्दैन्यवारणाः ॥ ७९ ॥....
तस्मान्मोलकसिंहेन्द्रादाविरासीज्जयन्तवत् ।
श्रीमान्मिलिङ्गभूजानिर्यो रणे शत्रुमृत्युदः ॥ ८२ ॥
तस्मिन्मिलिङ्गभूपाले सुराष्ट्रधरणीतलम् ।
पालयत्यरिभूपानां बलं विगलतां गतम् ॥ ८५ ॥ ....
योहम्मदसुरत्राणं निजदुर्गग्रहाग्रहम् ।
न्यगृह्णाच्च गृहीततृणं तत्सर्वस्वं समग्रहीत् ॥ ८८ ॥
तस्मादुदभवच्चन्द्रात्प्रकाश इव नन्दनः ।
महीपाल इति ख्यातः सार्थयाभिधया भुवि ॥ ८९ ॥

(इत्यादि टिप्पणं प्रतिप्रबन्धं बहु दर्शनीयमपि विस्तरादिभयादलं कृतम् ॥ )



# प्रबन्धचिन्तामणिस्थश्लोकानामकाराद्यनुक्रमः॥

## ॥नरनगनगरनद्यादिविशेषनाम्नामकराद्यनुक्रमः॥

## ॥ प्राकृतशब्दपदानामकाराद्यनुक्रमः ॥

इक्कज—एक एव ११२-९
इक्कस्स—एकस्य ७१-८
इक्कह—एकस्य २३८-८
इक्कारसेहिं-एकादशभिः T२२४ ७
इच्छए—इच्छति २०७-१
इत्थंतरि—इत्यन्तरे T८१-२
इत्थी—स्त्री. १६५-१६६
इस—एषा ९९-१४
ई—इति १६५-१३
ईस—ईषत् २३५-१८
उच्छंग—उत्सङ्ग २९-६
उज्जंत—उज्जयन्त T३१९-१
उड्डावियउ—उड्डायितः ७०-१६
उत्ताणु—उत्तानं २२८ ७
उत्तु—पुत्रः १४१ १६
उन्नयाण-उन्नतयोः २७-१
उप्पत्ती—उत्पत्तिः T२२५-२
उब्बिंबो—उद्विग्नः २७-२
उब्भुय—उद्भूत २९-२
उम्मीयइ—उन्मीयते १५७-५
उम्मुहं—उन्मुखं ६१-५
उर—उरसि १०९-५
उयर—उदर. ७४-११
उरुयंतर—ऊर्वन्तर. १६-१
उरे—उरसि २७-२
उवएसाउ—उपदेशात् T२७-२
उएवरिं—उपरि २२४-५
उवसग्गो—उपसर्गः २२५-६
उव्वण्णो—उत्पन्नः T२३-२
उव्वरिए—उद्धरित. ९१-८
ऊग्या—उद्यताः ४६-१७
ऊण—पुनः २७९-१२
ऊपहरी—उपहृताः २३६-६
एऊ—एतत् ८०-३
एकला-एकाकी १२१-१०
एक्क—एकम् १५८-९
एक्को—एकः ३१९-१
एगारस-एकादश T२२५-१
एयं—एतत् १६५॥२९॥
एयइ—एतैः २३५-१७
एयाइ—एताः २६-७
एयाओ-एताः ३१-२
एरिसं—एतादृशम् ७२-१
एस—एषः T३०-२२५
एसा—एषा T२२३-२
एसो—एषः T३४-३
एहु—एतत् १०९-४
कइ—किमपि २०४-२
कओ—कृतः T२२५॥७५॥
कच्चम्मि—अपेक्षे ९१-७
कज्ज—कार्य. १२१॥२०५॥
कंचयउ—कञ्चुकः २२८-७
कट्ठं—कष्टम् २०-४
कणग—कनक. ९२-३
कणगु—कनकम् ९२-२
कणयं—कनकम् १००-९
कंठि—कण्ठे ७०॥१७॥
कंठुलउ—कण्ठीयकम् १०९-४

गढपइ–दुर्गपतिः ६३-६
गणहर–गणधर. T२७-२
गणियं–गणितम् ७२-८
गणिया–गणिताः ४१-१८
गदा–गतानि T२३-१
गंधव्वा–गन्धर्वाः १६-२
गम्भारि–जाल्म ९६-९
गय–गज (गत) ६१-४घ.
गयणि–गगने T८१-१
गयह–गजानाम् ६१-११
गयाइं–गतानि ६१-११
गयुं–गतम् ५९-१२
गरूया–गुरवः २९-६
गलि–गले ८०॥१०९॥
गव्वु–गर्वम् ६१-१०
गहणु–ग्रहणम् २२८-९
गहणे–गहने १६-१
गहिऊ–गृहीत्वा ३०-१
गहियाइ–गृहीताः २१-७
गहीयाओ–गृहीताः ३१-२
गिउ–गतम् ८०-३
गिहिणा–गृहिणा १३९-९
गिहिमत्ते–गृहिमात्रे २०७-१
गुंजाहि–गञ्जाभिः १००-९
गुरू–गुरुः T२९-११
गुरूणं–गुरूणां T२२४-६
गोरी–गौरी १९७-३
गोवाल–गोपाल. T३४-२
चउक्कड–चापोत्कट T३४-३
चउदस–चतुर्दश ६१-११
चउसउ–चतुःशत. T२२४-८
चक्कवइ–चक्रवर्ती. १४१-१९
चंदगुत्तो–चन्द्रगुप्तः T२२४-४
चंदण–चन्दन. ३१-१
चंदलेहा–चन्द्रलेखा T२१॥२२४॥
चंदस्स–चन्द्रस्य १९७-९
चारित्तं–चारित्रम् T१९-१०
चिक्खिलि–पिच्छिला ९६-६
चिंतंति–चिन्तयति २९-४
चिंतवइ–चिन्तयति ७०-१३
चिय–एव २७॥१३०॥
चीत–चित्तम् १४१-१९
चुलसीहिं–चतुरशीत्या T२२४-८
चूरि–चूर्णिता ५९-१४
चेइयस्स–चैत्यस्य T२२४-६
चेव–एव १३९-६
छक–षट् T२३-१
छड्डंति–त्यजन्ति २९-६
छहूत्तरइं–षडुत्तराणि ६१-११
छार–भस्म. ६१-१
छित्तूण–छित्त्वा १८९-४
जं–यत् ३०-२
जइ–यदि ५९॥७०॥११३॥
जइवि–यद्यपि २९९-२
जउणानइ–यमुनानदी २७-२
जग–जगत् १७-६
जडाण–जडानाम् २८९-१
जण–जन. ३०-३
जणणि–जननी ७०॥७९॥
जणेसु–जनय ७९-१

